# चाणक्य-सूत्रम् ।

## महामति-श्रीमत्कौटिल्य-विरचितम् ।

---

पञ्चतीर्थोपाधिक—
श्रीईश्वरचन्द्रशर्म्म-शास्त्रि-वेदान्तभूषण-सांख्यसागर-
प्रणीत—

'सारार्थबोधिनी' समाख्यया टीकया
समलङ्कृतम् ।

श्रीराजेन्द्रकुमारभट्टाचार्य्य एम्, ए, इत्यनेन
प्रकाशितम् ।

कलिकातानगर्य्याम् ।

( आवृत्तिर्द्वितीया )

शकातीताब्दाः १८५४ । खृष्टाब्दाः १९३२ ।

मूल्यमस्य ( २) ) रूप्यकद्वयम् ।

---

## मुद्रायन्त्रारूढ़ाः सन्दर्भाः—

१। सटीकानुवादान्वितः धनुर्वेदः।

२। सटीकानुवादान्वितं वार्हस्पत्यमर्थशास्त्रम्।

३। शिवमहिम्नःस्तवभाष्यम् ( शोधनावस्थायामस्ति )।

४। सटीकं चाणक्यशतकम ( " " )।

Printed by---ABINASH CHANDRA MANDAL,
SIDDHESWAR PRESS.
39-2, Shibnarain Dass Lane, Calcutta.

## प्राप्तिस्थानम्—

१। म्यानेजार—संस्कृतयन्त्रपुस्तकालय, ३० नं कर्णओयालिसष्ट्रीट्, कलिकाता।

२। श्रीशारदाचरणभट्टाचार्य्यज्योतीरत्न। पोः बुधपाड़ा, ग्राम-द्वारका, जिला—चट्टग्राम, ( Chittagong ).

# अवतरणिका ।

( वङ्गाक्षरसंस्कृते: )

अत्र कौटिल्य कथेयं संक्षेपेण प्रागभिधीयते । अथासौ नृपनीति निपुणशिरोमणि: कौटिल्य: (:) स्वमनीषाप्राखर्य्येण नीतिविषये सन्दर्भ-निचयान् प्रणीय मनुजानां विशेषतोऽवनिपालानां महोपकारं विदधातिस्म । अथम-साधारण-नीतिशास्त्रदक्षोमुनिर्वात्स्यायन न्यायसूत्र-भाष्यविरचनेन लब्ध-कीर्त्ति । हितोपदेशादौ नारायणेति नाम्ना प्रख्यातः । कामशास्त्रे माध्य-मिकेऽपि वात्स्यायननाम्ना अखिलेषु देशेषु प्रथितयशा: । एष खलु ( २५७५ )-संख्यकसम्वत्सरेभ्योऽव्यवहितपूर्व्वं पञ्चालदेशान्तर्गत विविध-विद्याकरतक्षशिला नाम पत्तने विपुलैश्वर्य्यसम्पन्न महाशाल-चरेण्य-विप्रचणकदेवस्यौरसे लब्धजन्मासीत । तदानीन्तन भारतभूमिभागोऽलमकारि । काले मुनिर्वात्स्यायनोलब्धविद्यावैशद्येन मौर्य्यान्वयावतंसं चन्द्रगुप्तनाम्ना नृपालवरं पाटलिपुत्रनगरे नवनन्द-पञ्चाननासने आरोहयामास ।

---

(:) कामन्दकनीतिसार-टीका 'उपाध्यायनिरपेक्ष'नये—'कुटोघट: तं धान्य-पूर्णं लान्ति संगृह्णन्तीति कुटला धान्या: इति प्रसिद्धि: । अतएव तेषां गोत्रापत्यं कौटिल्यो विष्णुगुप्तोनाम' । अथवा चणकमुनेर्गोत्रापत्यमिति चाणक्य: 'गर्गादिभ्यो यञ्' इति पाणिनि: । ( ४।१।१ ) "एते गर्गादय: प्रसिद्धा:, इहान्येऽपि प्रतिपत्तव्या: अभिधानादित्याह गर्गादिराकृतिगण इति' इति दुर्गसिंह:, कलापव्याकरणटीकायाम् । महाभारते शान्तिपर्व्वणि, ( ६३ अः ३ श्लो: ) "कौटिल्यं कौलटेयञ्च कुसीदञ्च विवर्ज्जयेत्" । अत्र कौटिल्यमित्यत्र कौटिलीयमिति पाठान्तरमप्यस्ति । 'कौटिल्यं' अनार्ज्ज-वमिति तत्र टीकाकृतो नीलकण्ठ: ।

यथामरगुरुणा जीवेनार्थशास्त्रं प्रणीयार्थमीमांसाऽभ्यधायि। महर्षि-जैमिनिना स्वकृतसूत्रैर्वेदवाक्यानां विरुद्धार्थानां राद्धान्तोऽकारि। महर्षि-वेदव्यासेन ब्रह्मसूत्रैः ब्रह्ममीमांसा समभ्यधायि। महर्षि अक्षपादेन न्यायसूत्रसमूहैः पदार्थतत्त्वमीमांसाऽभाणि। आभिस्तत्त्व-मीमांसाभिः सर्व्वेषां मनुजानां चतुर्वर्गाधिकारन्ते समुपजह्रुः। तथानेन कौटिल्येन स्वविरचित सूत्रसङ्क्लोकानां संसारयात्रानिर्वाहसरणि प्रकाशनमकारि। एतेन कामसूत्र-प्रणयनेनानन्तसुखसमृद्धि-सम्भारेण च लोकस्थिति-सौकर्य्यम-भ्यधायि। कामसूत्रस्योपसंहार-श्लोकार्थेनायं कौटिल्यः ( २४२२ ) एतत्-संख्यककल्यब्दे अर्थात् किञ्चिदधिक-(२५८५) संख्याकाब्देभ्योऽव्यवहित प्राक् कामसूत्र-चाणक्य-सूत्रार्थशास्त्रादीनि प्राणैषीत्। यथा वेदान्ते ब्रह्मसूत्राणां नाम्ना व्याससूत्रमिति लोक प्रसिद्धिः तथैवास्य चाणक्यसूत्रमिति नामधेयेन लोकोपचारः। कदाऽनेन नवनन्दानां सिंहासने चन्द्रगुप्ताभिध नृपरत्नं समारोहयामास, कदा वा कुत्र जननं लेभे इत्यादि विषये अद्यत्वेऽपि प्राच्य-प्रतीच्य सूरीणां नापि ध्रुवसिद्धान्तो जातः।

तद्विषये किञ्चिदुच्यते। तथाच स्कन्दपुराणे कुमारिकाखण्डे ऊनत्रिं-शदध्याये ह्युक्तं "ततस्त्रिषु सहस्रेषु दशाधिकशतत्रये भविष्यं नन्दराज्यञ्च चाणक्योयान् हनिष्यति।" सम्प्रति शकाब्देऽस्मिन् ( १८५० ) कल्यब्दा ( ५०२९ ) सख्यकाः। एतेन कुमारिकाखण्डोल्लिखिते ( ५००२९-३३१—१६९७ ) संख्यकाब्देभ्यः प्राक्चन्द्रगुप्तोभूपोऽभूत्। तत्कतिपयाब्देभ्यः पूर्व्वं चाणक्यः प्रादुर्बभूव। विषयेऽस्मिन्नपि विदुषाम्मतद्वैधमस्ति। अत्र प्रतीच्याः सूरयः एवं राद्धान्तं कल्पयामासुः। ग्रीकवीरालेकसान्दारोप-स्थितिसमये मार्य्योराज्यं लेभे। ( ३२१ ) खीष्टाब्दात् प्राक् तदारम्भकाले वा, पुरुषश्रेष्ठः आलेकसान्दार पाञ्चालदेशे समागतः। तदवश्यं ( १९२८ ) खृष्टाब्देभ्यः प्राक्, परिगणनेतु ( १९२८—३२७=२२५५ ), एवं पञ्चपञ्चा-शदुत्तरद्वाविंशति शतवर्षात्मकः कालः चन्द्रगुप्तस्य राज्यशासनसमयश्च।

स तदानीं आलेकसान्दारशिविरे ऊषित्वा ग्रीकजनानां रणनैपुण्यं लब्धवान् । नयान्तरे तु ( ३१६ ) खृष्टाब्देभ्यः पूर्व्वं चाणक्यनाम्ना समीक्ष्यकारिणा सचिवेन नवनन्दान् सदुत्सार्य मागधसिंहासनमधिकार । सुतरामेतन्नये १६२८+३१६=२२४४१ ) एवं हायनेभ्योऽव्यवहितपूर्व्वं चाणक्यचन्द्रगुप्तौ प्रादुर्भूतौ । मिः, जष्टिनस् साहिवमहाशयेनालेखि ( ३१७ ) खृष्टाब्दात्प्राक् चन्द्रगुप्तोराज्यस्वातन्त्र्य लाभाय तत्तत्सामन्तनृपालान् समुद्दीप्य तेषां साहाय्येन ग्रीक् जनान् पाञ्चालदेशाद्बहिर्निःसार्य्य पञ्चनदप्रदेशमधिकार ।

कार्य्यमिदं नीतिनैपुण्येन स्वप्रतिभाबलेन च संसाधितममूत । एतेनावधारितकालेन । १६२८+१७=२२४५ ) संख्याकाब्देभ्यः पूर्व्वं पुरुषप्रवीरः कौटिल्यः प्रादुर्बभूव । उइलसन् टार्ण्णार, कोलब्रुक, प्रिन्सेप् भिन्सेण्ट् स्मिथ महोदय-प्रभृतयः पुरातत्त्वविदः प्रतीच्याः विद्वान्सः चन्द्रगुप्तस्य कालावधारणे सुबहुधा यत्नं कृतवन्तः । ततश्च बौद्ध शास्त्राभिज्ञो रिसडेविडनाम्ना विद्वान् चन्द्रगुप्तस्य ( ३२० ) खृष्टाब्दात् प्राक् नृपपदारोहण-मङ्गीचकार । तेन अष्टचत्वारिंशदुत्तरद्वाविंशतिशतवर्षेभ्यः प्राक् चन्द्रगुप्तचाणक्ययोराविर्भावकालोऽवधारितोऽभूत् ।

"त्रैलोक्यप्रज्ञप्ति नाम्ना जैनप्राकृत ग्रन्थे विक्रमार्कसम्वत्कालस्य पञ्चशतवर्षमितसमये नृपश्रेष्ठश्चन्द्रगुप्तोह्यासीत् । स च जैनधर्म्मे दीक्षित" इति । परस्परविरुद्धमतानामेतेषां मध्ये एकस्य सम्यग् निश्चयाभावात् सन्देहहानये ग्रन्थकृतां प्राच्यविदुषां तत्प्राचीन-व्याख्यातृणां, मतमिदानीं समालोच्यते ।

यथा श्रीमद्भागवते द्वादशस्कन्धीय द्वितीयाध्याये एकविंशतिश्लोकस्य श्रीधर्य्यामुक्तम् । 'तावद्वर्षसहस्रन्त्विति ।' 'वर्षसहस्रं पञ्चदशोत्तरं शतञ्चेति कयापि विवक्षया अवान्तरसंख्येयम् । वस्तुतस्तु परीक्षितनन्दयोरन्तरं द्वाभ्यामूनं वर्षाणां सार्द्धसहस्रं भवति । यतः परीक्षित-समकालं मागध मार्ज्जारिमारभ्य रिपुञ्जयान्ता विंशतिसंख्यका राजानः सहस्रसम्वत्सरं

भुवं भोक्ष्यन्ते इत्युक्तं नवमस्कन्धे। 'ये बार्हद्रथभूपालाः भाव्याः साहस्र-वत्सर'मिति। ततः पञ्चप्रद्योतनाः अष्टत्रिंशतं, शिशुनागाश्च षष्ठ्युत्तरशतत्रयं, भोक्ष्यन्ते पृथिवीमित्यत्रैवोक्तत्वात्'। अनेन परीक्षित-जन्मतोनन्दराज्या-भिषेक-पर्य्यन्तं (१४६८) एतत्परिमित-कालस्य व्यवधिर्भवति। परीक्षित समकालिकमागधवंशीयमार्जारितः रिपुञ्जयभूपं यावत् विंशतिसंख्याका भूमिपालाः सहस्रसम्बत्सरकालम् अवनिं बुभुजिरे, ततः परं पञ्चप्रद्योतना-भिधाना भूमिपालाः (१३८) इयतःकालान्। ततोऽपि शिशुनागनृपालाः (३६०)-संख्याकाब्दान्। एतेन (१३००+१३८×३६०=१४६८) तेषां भूभोगस्य कालोज्ञेयः। ततः कलेर्द्वादशशताब्देषु व्यतीतेषु परीक्षितो नाम नृपोजन्म लेभे। ततश्च (१४१५)-अब्देभ्यः परं नन्दनामानोनृपा अभुवन्। तेनच नवनन्दानां राज्यकालः (१००) वर्षात्मकः। यतोऽप्येतेषां समष्टी-करणेन (१२००×१४६८+१००=२७६८) कलेः सम्वत्सरेष्वतीतेषु मौर्य्यश्च-न्द्रगुप्तोराज्याभिषिक्तोऽभूत। एवमेव विष्णुपुराणे भागवतेचोक्तम्। सम्प्रति (५०२६) कल्यब्देभ्य (२७६८) इयदङ्केषु वियुक्तेषु (२२०६) इयत्यः संख्या भवन्ति। तत्पूर्व्वं मौर्य्यस्य सिंहासनाधिरोहणमभूत्। भागवत-व्याख्यानकृता भगवच्छङ्करेण विश्वनाथेन, स्वामि-श्रीधरोत्काद्विशयेऽस्मिन् अन्यदुक्तम्। तेनानयोरनैक्यम्। यथा "एतद्वर्षसहस्रमित्येवैषा संख्या प्रमाणी कर्त्तव्या। परीक्षित समकालवर्त्तिमार्जारिप्रभृतीनां आ नन्दात् भोगकालसंख्यास्तु किञ्चिन्न्यूनं सार्द्धसहस्रं यद्वर्षाणि भवन्ति, तत्तेषां खण्डमण्डलपतीनां विनाप्यानन्तर्य्येण संख्यातानीति ज्ञेयम्। तथाच भागवतश्लोके यत्पञ्चदशोत्तरशताधिक-सहस्रसम्वत्सरात्मकः काल उक्तः। स एव सम्यक्प्रमाणार्ह इति। परीक्षित-समकालिक मागधवंशीय मार्जारि-प्रभृतेः-नन्दनृपराज्याभिषेक-पर्य्यन्तं तद्भोगकाल संख्यानुसारेण किञ्चि-न्न्यूनं सार्द्धसहस्राब्दाः। स्वाम्युक्तसमयश्च तथैवोन्नेयः। किञ्च तत्रैकस्य राज्ञो राज्यभोगकालानन्तरमपरस्य तद्भोगकालोदीर्घं स्यात्। तादृशपरि-

गणनानन्तर्य्य-निरूपणां नकृतम्। येन येन नृपेण यावान् कालः शासने व्यतीतः, तेन कालेनान्यस्य परवर्त्तिनो नृपस्य राज्यकालः संयुक्तः सन् किञ्चिन्न्यूनसार्द्ध सहस्रवर्षाणि भूतानीति। भूभोगकालाद्राज्यभोगकालः पृथगिति। तथाहि जन्मतः मृतिं यावद् भूवि भोगकालः। तत्रचान्तरा शैशवं तारुण्यं वार्द्धक्यं राजत्वञ्चेति सर्व्वो भोगकालाः अभुवन्। भू-भोग-कालाः शैशवादयः। राज्य-भोगकालास्तेभ्योवियुक्ता न्यूनसंख्याकाः। मार्जारि प्रभृतीनां भू-भोगकाल-समष्टि संख्यापरिगणने (१११५) इयन्तोऽब्दा बभुवु, तद्भोगकालतः (१४९८) संख्यातः बाल्यादि-भोगकालेष्वनुमितेषु (३८३) इयदङ्केषु वियुक्तेषुच (१४९—३८३ = १११५)-एवमब्दाःपञ्चदशोत्तर-शताधिक-सहस्रहायना राज्य-कालाः सुस्थिरा अभुवन्। अनेनच श्रीविश्व-नाथाभिप्रेतेन परीक्षितजन्मतः (१११५)-अब्देभ्यः परं नन्द्रनृप आसीत्। एवञ्च कलेर्व्यतीतेषु (१२२२) हायनेषु परीक्षितः स्वोत्पत्तिं प्राप्तवान्। ततोनवनन्दाः वर्षसहस्रं राज्यशासनं चक्रुः। तेषां संयोगे (१११५+१२२२= १००+२४३७) कल्यब्दे चन्द्रगुप्तोनृपोऽभूत्। सम्प्रति कल्यब्दाः ५०२९ —२४१५ = २४९२) इतः प्राक् चन्द्रगुप्तस्याविर्भाव-कालोनिश्चितः। तत्र श्रीमद्भागवतोक्तिः "आरभ्य भवतोजन्म यावन्नन्दाभिषेचनं। तावद्वर्षसहस्रन्तु शत पञ्चदशोत्तरम्'। भागवतोक्तेः (१२२२—२३) परीक्षितजन्मतः नन्दराज्याभिषेककालं यावत् (१११५) इयन्तोऽब्दाः स्युरितिदिक्। अपरञ्च तत्रैव 'ते त्वदीये द्विजाः काले अधुना चाश्रिता मघाः'। सप्तर्षयस्तु तदीय राज्यकाले मघानक्षत्रं समाश्रिता इति। तस्मिन् चापरम् वचनं "यदा देवर्षयः सप्तमघासु विचरन्ति हि। तदा प्रवृत्तस्तु कलि द्वादशाब्द शतात्मकः" सप्तर्षीणां मघावस्थिति-काले कलेर्द्वादश-शतमिताब्दाः। आभ्यां श्लोकाभ्यां स्पष्टं प्रतीयन्ते। नृप-परीक्षित राज्यकाले कले द्वादश शत-मिताब्दा अतीता इति ज्ञेयम्। महाभारते आदिपर्व्वणिच "इमाः प्रजास्तव पिता षष्ठि-वर्षाण्यपालयत'। इत्येवमुक्त्वा नृपपरीक्षितः षट् त्रिंशद्वर्षाणि राज्य

पालनमकार्षीत्। तत्र भारतदीपेशैवनीलकण्ठभट्टे नोक्तं "षष्टि वर्षाणि जन्मतः षष्ठिवर्षं यावत् नतु राज्यलाभात्। अपालयत् पालितवान्। षट्त्रिंशद्वर्षे लब्धराज्यश्चतुर्विंशतिवर्षपर्य्यन्तं तत्पालनस्य दृष्टत्वात्" इति।

हे जनमेजय! तव पिता परीक्षितो जन्मतः षष्ठिवर्षं यावत् प्रजापालनमकार्षीत्। जन्मतः षट्त्रिंशद्वर्षवयः कालात् चतुर्विंशति वर्षं प्रजापालनं कृतवान्। तेन प्रागुक्तमायातम्। 'तदा कलेरतीताब्दाः (१२००) परीक्षित जन्मतः' नन्दानां राज्याभिषेक-कालान्तराणि (१११५) वर्षाणि राज्यकालाः (१००) एवमब्दाः। एतेषां मेलनसंख्यास्त्वेवं (१२०० )+१११५+१००= २४१५) अब्दा बोध्याः। सम्प्रति परीक्षित-जन्मकालात् तद्राज्यकालाः (३६) अब्दाः परिहृताः। तदा २४१५—३६=२३७९) एवं वर्षाणि कलेरतीतानि। तेन (५०२९) कल्यब्दात् (२३७९) परिहृतासु संख्यासु (२६५०) अतीतासु चन्द्रगुप्तोनृपोऽभूत्। विष्णुपुराणेच 'यावत् परीक्षितोजन्म यावन्नन्दाभिषेचनम्। तावद्वर्षसहस्रन्तु ज्ञेयं पञ्चदशोत्तरम्।" एतेन परीक्षितजन्मकालान्नन्दराज्याभिषेककालः पञ्चदशोत्तर-सहस्रवर्षात्मकः प्रतीयते। तथाच परीक्षित-राज्याभिषेकात् परं कलेर्द्वादश-शतवर्षाण्यतीतानि। तदेवाह विष्णुपुराणे चतुर्थांशे "तदा प्रवृत्तश्च कलिर्द्वादशाब्दशतात्मकः"। तत्रैव विष्णुपुराणे "महापद्मः तत्पुत्राश्चाष्टौ एकशतवर्षमवनिपतयो भविष्यन्ति। नवैव तान् नन्दान् कौटिल्योब्राह्मणः समुद्धरिष्यन्ति। तेषामभावे मौर्य्याश्च पृथिवीं भोक्ष्यन्ति। कौटिल्यएव चन्द्रगुप्तं राज्येऽभिषेक्ष्यति"। एतेनैतत्-स्थितं यथा, (१२००+१०१५+१००) एषां संयुक्तेषु संख्यानेषु पञ्चदशोत्तरत्रयोविंशति-शतमिता अब्दा भवन्ति। कलेरतीत (२३१५) समये चन्द्रगुप्तो-नृपासनमाप। कौटिल्यश्च तत् साचिव्यकारी सम्पादकश्च। प्रमाणान्तराणि यथा विष्णुपुराणे भागवतेच—"सप्तर्षीणाञ्च यौ पूर्वौ दृश्येते उदितौ दिवि। तयोस्तु मध्ये नक्षत्रं दृश्यते यत् समं निशि। तेनैव ऋषयोयुक्तास्तिष्ठन्त्यब्दशतं नृणाम्॥ ते त्वदीये द्विजाः काले अधुना चाश्रिता मघाः"॥

हे भूप परीक्षित ! सप्तनक्षत्रात्मकसप्तर्षिमण्डलमध्ये औदयिक-काले ऋषिरूपे द्वे नक्षत्रे नभोमण्डले प्रथमोदिते दृश्येते। तयोर्मध्ये समदेशावस्थितं प्रत्येकमश्विन्यादि नक्षत्रमवलोक्यते। तेनैकेन युक्तेन सप्तर्षिमण्डलेन मनुष्यपरिमाणे एकशताब्दं यावत् स्थीयते। तेचाधुना तव काले अस्मिन् सप्तर्षयः मघानक्षत्राश्रिता स्तिष्ठन्तीति संक्षिप्तोर्थः। तत्रैव "यदा देवर्षयः सप्त" इत्यादि प्रागुक्तेन श्लोकेन प्रतीयते सप्तर्षिमण्डलं यतोऽधुना मघानक्षत्राश्रितम्, ज्यौतिषनियमेन कलेर्द्वादशशत-परिमिताब्दाः इति बोध्यम। तएव 'यदा मघाभ्योयास्यन्ति पूर्वाषाढां महर्षयः। तदा नन्दात् प्रभृत्येषः कलिर्वृद्धिं गमिष्यति,,। यदा तु सप्तर्षिमण्डलं मघांऋक्षं परित्यज्य स्व वशेन पूर्वाषाढ़ानक्षत्रं यास्यति तस्मिन् काले नन्दानां राज्याभिषेकोभविष्यति। एवं कलिरपि वृद्धिं यास्यति च। केषाञ्चिन्मते सप्तर्षिमण्डलस्य ध्रौव्याद्गत्यभाव इति। येन मण्डलेनैकशतवर्षात्मके समये ध्रुवं नक्षत्रं भुक्तं तस्य गतिः द्राघीयसा कालेन स्यात् कुतः सामान्या गतिः। तत्रैवं वच्मि क्षिप्रगत्यभावेऽपि अतिदीर्घकालेन गतिरनुमीयते। यथा केचन देवज्ञाः चित्रानक्षत्रस्यैकस्मिन् एकादशसहस्र-सम्वत्सरान् यावत् स्थितिं मन्यते। तेन तेषां सूक्ष्मागतिर्गण्यते। अन्यच्च सप्तर्षीणां नक्षत्रातिक्रमकालः स्थूलरीत्या (२२५) अब्दात्मकः। तेन मतान्तरे यद्यदागतं तत्तादुच्यते ( क ) विष्णुपुराणमते ( २३१५ ) कल्यब्देषु चन्द्रगुप्तोभूपोऽभूत्, (ख) एतत्पुराणीय-नाक्षत्रिकगणनानुसारेण ( २४०० ) कल्यब्देषु स एव नृपः, (ग) भागवतलेखानुसारेण (२३७६) कल्यब्देषु। (घ) भागवयीयनाक्षत्रिकगणनानुसारेण ( २४०० ) कल्यब्देषु। परीक्षितजन्मतो राज्यप्राप्तिकाल-(३६) सख्यापरिहारे विष्णुपुराणलेखानुसारेण नृप गुप्त्वस्य राज्यलाभः (२४१५)-कल्यब्देषु। पुराणप्रणेतृ-ऋषयः स्थूलगणनया परितुष्टिमलभमाना ज्योतिः-सूक्ष्मगणनयां कालावधारणमकार्षुः। अतोज्यौतिषिक-सूक्ष्म-गणना-राद्धान्तः समीचीनः। अस्मिन् सप्तर्षिचारप्रसङ्गे बृहत् संहितायामुक्तम्। तद्यथा—"आसन् मघासु मुनयः शासति

पृथ्वीं युधिष्ठिरे नृपतौ। षड्-द्विक-पञ्च-द्वियुतः शक-कालस्तस्य राज्ञश्च ॥"
मुनयो मरीच्यादयः सप्तर्षयः। शासति परिपालयति पृथ्वीं भारतवर्षम्।
नृपतौ युधिष्ठिरे सति। मघासु मघाख्यनक्षत्रेषु आसन् अध्यतिष्ठन्।
अत्रार्थे वृद्धगर्ग आह "कलि-द्वापर-सन्धौतु स्थितास्ते पितृ-दैवतम्। मुनयो
धर्म्मनिरताः प्रजानां पालने रताः,, इति। कलिद्वापर सन्धौ द्वापरावसाने
कलिप्रारम्भे ते सप्तर्षयः। पितृदैवतम् मघाख्यनक्षत्रमाश्रित्य स्थिताः। तस्य
युधिष्ठिरस्य राज्ञः। षड्-द्विक-पञ्च-द्वियुतः शककालोगतः। शकनृपतेर-
ब्दोऽतीतः। सहस्रद्वयेन पञ्चभिः शतैः षड्विंशत्यधिकैः (२५२६)-शकनृपतेः
कालोयुक्तः कार्य्योवा। एवं कृते यद्भवति तावद्वर्षवृन्दम् वर्त्तमानकालं
यावद्गतम्। तस्य च शतेन भागमाहृत्य यदवाप्यते तानि नक्षत्राणि
मघादीनि भुक्तानि। यच्छेषं तानि वर्षाणि भुज्यमाने नक्षत्रे तेषां प्रविष्टानां
गतानि,। तत्रैवान्यत् प्रमाणम्। "एकैकस्मिन् ऋक्षे शतं शतं ते चरन्ति।
वर्षाणाम्। प्रागुदयतोऽप्यविवराट्टजूनयति तत्र सयुक्ताः" ॥ ते सप्तर्षयः।
एकस्मिन् एकस्मिंश्च ऋक्षे शतं शतं वर्षाणाञ्चरन्ति। तद्विषये काश्यपः—
"शत शतन्तु वर्षाणाम् एकैकस्मिन् महर्षयः। नक्षत्रे निवसन्त्येते ससाध्वीका
महातपाः।" ससाध्वीकाः सारुन्धतीकाः। ते मरीच्यादयोमहर्षयः। महात-
पास्तपःप्रभावसम्पन्नाः। यच्च कामसूत्रसमाप्तौ श्लोकस्य मेच्छितकविकल्प-
रीत्या स्वसमयश्चाणक्येन निरधारि तदुच्यते। यथा अर्थशास्त्रं पूर्वाचार्य्याणां
मतानि सुविचार्य्य प्रणिनाय, यथा नन्दीय-गोनर्दीय-वाभ्रवीयांश्च विषयान्
पर्य्यालोच्य कामसूत्रं चकार। तथाहि "पूर्व्वशास्त्राणि संहृत्य प्रयोगानुपसृत्य
च कामसूत्रमिदं यत्नात् संक्षेपेण निवेशितम्,, इति। "वाभ्रवीयाञ्च सूत्रार्था-
नागमं सुविमृष्य च। वात्स्यायनश्चकारेदं कामसूत्रं यथाविधि।,, एतस्यार्थो
यथा 'वा' इत्यत्र व इत्यनेन 'वायुः' तस्य संख्याः पञ्चदशाः १५। अभ्र-
शब्देन शून्यं। पुनरन्य-वशब्देन वरुणाः तत्संख्या ज्योतिः परिभाषया
चतुर्विंशतिः २४। एवं रीत्या समष्टिसंख्यायोगाः (१५०२४) एवमभवन्

'अङ्कानां वामतो गतिः' इत्येवं प्रणाल्या तेऽङ्काः—( ४२०५१ ) स्युः। तदुपरि चार्थशब्देन द्वितीयवर्गः। तत्संख्या द्वौ २। द्वाभ्यां योगे—( ४२०५१२ ) एताः समष्टिसंख्याः। कल्यब्दाश्च—४३२०००। तन्मध्यतः ४२०५१२—संख्यासु वियुक्तासु ( ४३२०००—४२०५१२=११४८८ ) एते अङ्का अवशिष्टाः। ततः 'धा, गं, घं', छविसृभ्य च'—अत्राशब्देन विष्णुः तत्-संख्याः २२। अगशब्देन नागः तत्संख्या ८। एतयोर्मेलने ३०। अब्-न इत्येतयोः संख्या द्वाविंशतिः २२। ते द्वे सम्मिलिते ३०२२। अत्र पृथक् पृथक् निर्देशादङ्कानां वामतोगतिरिति रीतिर्नास्ति। ततः शिष्टानामङ्कानां वियोगो यथासम्भवं कार्य्यः। तथाहि—११४८८—अङ्कानां मध्यतः ३०२२—अङ्का यावता कालेन वियुक्ताः स्युस्तावन्तोवियोगाः कार्य्याः। यथा ( ११४८८—३०२२+३ )=२४२२ इत्यवशिष्टाङ्कतः ३०२२ संख्या नैव वियुक्ताः स्युः। सुतरामेव २४२२—संख्याककल्यब्दे कौटिल्येन कामसूत्रं प्रणायि। कौटिल्य-वात्स्यायन-विष्णुगुप्तानां नाम्ना त्रयाणामभेदेन बहुषु प्रामाणिक-ग्रन्थेषूल्लेखो दृश्यते। तथाच प्रशस्तपादभाष्यव्याख्याने न्यायकन्दल्यां श्रीधराचार्य्याः 'तथाहि परमास्तिकौ पक्षिल-शबरस्वामिनौ नानुतिष्ठतः इत्यसम्भावनमिदम्" इत्याहुः। परमसमीक्ष्यकारिणा वाचस्पतिमिश्रेण पक्षिलस्वामीतिनाम्ना वात्स्यायनस्य व्यपदेशो न्यायवार्त्तिकटीकायामसकृत्-कृतः। 'प्रदीपः सर्व्वविद्यानामिति' स्वरचित वात्स्यायनभाष्यधृतश्लोक अर्थशास्त्रे ईषत्परिवर्त्तितरूपेण तत्प्रकरणानुसारेण विद्यासमुद्देशप्रकरणे दृश्यते। योगवासिष्ठे वैराग्यप्रकरणे वात्स्यायनस्य मुनेर्नामोल्लेखोऽस्ति। दशकुमारचरितस्याष्टमोच्छ्वासे "अधीष्व तावद्दण्डनीतिं··· ···चन्द्रगुप्तो-पदेशायैवेदमर्थशास्त्रं कृतम्"। "इयमिदानीमाचार्य्य विष्णुगुप्तेन मौर्य्यार्थे षड्भिःश्लोकसहस्रैः संक्षिप्ता, सैवेयमधीत्य सम्यगनुष्ठीयमाना यथोक्तकर्म-क्षमेति"। अर्थशास्त्रेऽपि तथैवोक्तं "कौटिल्येन नरेन्द्रार्थं शासनस्य विधिः कृतः" इति। एवञ्च पञ्चतन्त्रेऽपि "ततो धर्म्मशास्त्राणि मन्वादीनि, अर्थ-

शास्त्राणि चाणक्यादीनि, कामशास्त्राणि वात्स्यायनादीनित्येवेति विद्यते'। कामन्दकनीतेर्व्याख्याने उपाध्यायनिरपेक्षाभिधाने क्वापि क्वापि स्थाने अर्थशास्त्रवाक्यानि उद्धृतानि सन्ति।

बौद्धाचार्य्य बुद्धघोषविरचितस्य विनयपिटकस्य 'समन्तप्रसादिका' नाम टीकायां महानामस्थविर-विरचित-महावंशव्याख्यानेच चाणक्यविषये वृत्तमस्ति। जैनसूरिपद्मनन्दिगणिप्रणीत 'ऋषिमण्डल-प्रकरणवृत्ति' नामक-सन्दर्भेच चाणक्यतत्त्वं समुट्टङ्कितं विद्यते। कविप्रवरकालिदासस्य रघुवंशे सप्तदशसर्गेच (४९।५०।६७)-श्लोकानामेषां श्रीमन्मल्लिनाथ कृतव्याख्यानेषु अर्थशास्त्र वाक्यानां समुद्धारः कृतः। महाभारते शान्तिपर्वणि नीतिविषये वसुहोमं प्रति मान्धातुरुक्तिरेवं दृश्यते "बृहस्पतेर्मतं राजन् अधीतं सकलं त्वया। तथैवौशनसं शास्त्रं विज्ञातं ते नरोत्तम" इत्येवमर्थशास्त्र प्रतिपाद्य पुष्कला विषया स्तत्र सन्ति। त्रिवर्गविषये भारते बहुधा विषयाः वर्णिताः सन्ति। तथाच "यत्र धर्मस्तथैवार्थः कामश्चैवाभिवर्णिताः। त्रिवर्ग इति-विख्यातोगण एष स्वयम्भुवा।" 'त्रिवर्गोनीति वेदिनामिति' अन्यत्रापि दृश्यते। त्रिवर्गश्च—धर्मार्थकामाः। अरिमित्रोदासीनाः। स्थानवृद्धिक्षय-रूपाः। मन्त्रोत्साह प्रभुशक्तिरूपाः। भूमिमित्रहिरण्याविरूपाश्चेति। नीतिवाक्यामृते सोमदेवसूरिभिरुक्तम्। तथाच "तथाचानुश्रूयते विष्णुगुप्तानुग्रहादनधिकृतोऽपि किल चन्द्रगुप्तः साम्राज्य-पदमवापेति" तत्र टीकाकृदिदमब्रवीत्। 'विष्णुगुप्तश्चाणक्य। मौरिककुलोत्पन्नश्चन्द्रगुप्तः। वृषलोऽपि नन्दसुतत्वेन साम्राज्यपदमाप'। तत्रैव दूतसमुद्देशेऽप्युक्तं 'श्रूयते हि किल चाणक्यस्तीक्ष्णदूत-प्रयोगेनैकं नन्दं जघाने ति'। हितोपदेशस्य विग्रहप्रकरणे एवमेवास्ति "नन्दं जघान चाणक्यस्तीक्ष्णदूतप्रयोगतः। तद्दूरान्तरितं दूतं पश्येद्धीरसमन्वितः"। तत्रैव वाक्यामृतेऽन्यच्च सूत्रं "अर्थशास्त्राध्ययनं वा।" एतस्य टीकाकारेण व्याख्यानमेवं कृतम् "अर्थशास्त्रं विष्णुगुप्तेन कृतं यत् तस्याध्ययनम्।" तदीययशस्तिलके महाकाव्ये द्वितीयाश्वासे तेनोक्तम्

"गुरुशुक्रविशालाक्ष-परीक्षित-पराशर-भीम भीष्म भारद्वाजादिप्रणीत नीति-शास्त्र-श्रवण सनाथं श्रुतपथमभजत।" यशस्तिलकमहाकाव्यस्य चतुर्थाश्वासे भारद्वाजस्य षाड्गुण्य-प्रस्तावे द्वावेव श्लोकौ तेन सूरिणोक्तौ। विशालाक्ष-स्यापि ग्रन्थांशस्तत्र समुद्धृतः। एवमेवार्थशास्त्रेऽपि नामोल्लेखोऽस्ति। जैनानां "त्रैलोक्य प्रज्ञप्ति' नामकग्रन्थे चाणक्यचन्द्रगुप्तयोर्वृत्तान्तं वर्णितं दृश्यते। प्राक्तनाः केचन श्लोकाः महाभारतशान्तिपर्वोक्त-श्लोकतुल्या अत्र समुद्धृयन्ते। यथा 'ब्रह्माध्याय सहस्राणां शतं चक्रे स्वबुद्धिजम्। तत्सारदेन शक्रेण गुरुणा भार्गवेण च। भारद्वाज विशालाक्ष-भीष्म-पाराशरै-स्तथा। संक्षिप्तं मनुना चैव तथाचान्यैर्महर्षिभिः। प्रजानाम युषोह्रासं विज्ञायच महात्मना। संक्षिप्तं विष्णुगुप्तेन नृपाणामर्थसिद्धये।" एवञ्च भारते शान्तिपर्वणि "प्रजानामायुषोह्रासं विज्ञाय भगवान् शिवः। सञ्चिक्षेप ततः शास्त्रं महास्त्रं ब्रह्मणा कृतम्॥ वैशालाक्षमिति प्रोक्तं तदिन्द्रः प्रतिपद्यते। दशाध्याय सहस्राणि सुब्रह्मण्यो महातपाः। भगवानपि तच्छास्त्रं सञ्चिक्षेप पुरन्दरः। सहस्रैः पञ्चभिस्तात! यदुक्तं बाहुदन्तकम्। अध्यायानां सहस्रैस्तु त्रिभिरेव बृहस्पतिः। सञ्चिक्षेपेश्वरोबुद्ध्या बार्हस्प-त्यस्तदुच्यते। अध्यायानां सहस्रेण काव्यः संक्षेपमब्रवीत्।" प्राग् ब्रह्मरुद्रादि-भिरिन्द्रादीनुद्दिश्य सुविशाला नीतिरुपदिष्टा। पश्चाद् वैशालाक्ष-बाहुद-न्तकबार्हस्पत्यादिभिः संक्षिप्ता दण्डनीतिग्रन्था विरचिताः। यशस्तिलके चतुर्थ-पञ्चमाश्वासयोः प्रजापत्युक्त-चित्रकर्मसौख्य-ग्रन्थस्य वराहमिहिरीय-प्रतिष्ठाकाण्डस्य आदित्यमतसन्दर्भस्य निमित्ताध्यायस्य हरप्रबोधस्यचोल्ले-खोऽस्ति। एवं चारायणस्य वैद्यके, कामशास्त्र-विषये च, तत्रैव दत्तकस्य रत्नपरीक्षायां, शुकनासस्य गजविद्यायां, रोमपादस्य हयशिक्षायां, रैवतस्य कुन्तसिद्धान्ते, दत्तकस्य कामशास्त्रविषयाभिधानयोरुल्लेखनमस्ति। एवन्तदीय तृतीयाश्वासेच। अन्यच्च चतुर्थ-पञ्चम-षष्ठाश्वासेषु उर्व-भर्तृ-मेराट-गुणाढ्य-भास-वोसमयूर-राजशेखरादीनां समुल्लेखोऽस्ति। तथा पुरातत्त्व-

विषक्तेन पादस्पर्शेनैव मणि कुन्तला-नाम वरवर्णिनी एवं पुत्र-राष्ट्रराजमाप विषदुष्ट शराव-सलिलपानेनाजराजं जघान। शूरसेन-देशे माथुरे वसन्त-मतिना विषाक्ता-लक्तेन रञ्जिताधराभ्यां सञ्चुम्बनेन सुरतविलासाख्य-भूमिपं व्यापादयामास। दशार्णनगरे वृकोदरी नाम ललना विषलिप्तक-मेखला मदनार्णवनरेशम्। मगधदेशे मदिराक्षी नाम कामिनी विषाक्तदीर्घ-दर्पणेन मन्मथविनोद-नाम भूपम्। दक्षिणापथे पाण्ड्यदेशे चण्डरसा नाम महिषी कबरीपाश-निहितशस्त्रिका मुण्डीरनामानं नृपालं जघान। वृत्तमेता-दृशं नीतिवाक्यामृते च राज्यरक्षासमुद्देशे विद्यते। तथैव क्षेमेन्द्ररचितायां कथामञ्जर्यामस्ति। नीतिवाक्यामृतटीकायान्तु ऋषिपुत्रक-कपिपुत्र-कौशिक-गर्ग-चारायण-धम्मिल-चाणक्य-गुरु-पालकभागुरि-भारद्वाज-राजपुत्र-राजगुरु-रैभ्य-वर्ग-वल्लभदेव-विशिष्टक-सुन्दरसेन-शौनक प्रभृतीनां-नीतिविदां वाक्यानि समुद्धृतानि दृश्यन्ते। एतेषां विवृतिः नीतिवाक्यामृतव्याख्यायां प्रकाशयिष्यते।

सन्ति च 'यादवीयवैजयन्त्याम्, अभिधानचिन्तामणौ, भोजराजीय-नाम-मालायाञ्च कौटिल्यवात्स्यायनयोरैक्य-बोधकप्रमाणानि यथा,—"वात्स्या-यनो मल्लनागः कौटिल्यश्चणकात्मजः। द्रामिलः पक्षिलस्वामी विष्णु-गुप्तोऽङ्गुलश्च सः" (१) "वात्स्यायनस्तु कौटिल्यः विष्णुगुप्तो वराणकः। द्रामिलः पक्षिलस्वामी मल्लनागोऽङ्गुलोऽपि सः॥" (२) "कात्यायनो वर-रुचिर्मेधाजिच्च पुनर्वसुः। कात्यायनस्तु कौटिल्यो विष्णुगुप्तो वराणकः॥" (३) यद्यपि कात्यायनइत्यत्र वात्स्यायन इति पाठेन स्वीक्रियते तदा विष्णु-पुराण-दण्डिवाक्य-यशस्तिलक-वाक्यानां वैयर्थ्यं स्यात्। मौर्य्यचन्द्रगुप्तार्थ-मर्थशास्त्रं विरचयामासेति लोके प्रसिद्धिरित्येवं दण्डीवाक्याच्च। खीष्टाब्दात् पूर्व्वशतकान्ते आसीच्चाणक्य इति अन्याः सूरयो वदन्ति। यतः "कर्त्तर्या कुन्तलः शातकर्णिः शातवाहनः महादेवीं मलयवतीं जघान" इतिकामसूत्रे वदन् वात्स्यायनः (१२९) खीष्टाब्दात् पूर्व्ववर्ती। तेन (२०६) खीष्टा-ब्दात् प्राग्वर्त्ती भारतवर्षस्य पश्चिमप्रान्ते कृतराज्यानुशासनानां शातवा-

ह्नानां ग्रंथेन शास्त्रकर्त्तृणा समकालिकः किम्वा तत्परकालिक आसीदिति दृढं ज्ञायते। एवं पुरावृत्तसंवाद-बलेन कामसूत्र-न्यायभाष्ययोः प्रणेतुर्वात्स्यायनात् परं प्राचीनः कौटिल्य-इति श्रीश्यामशास्त्रिणामर्थशास्त्रस्य द्वितीयावृत्तिकस्य भूमिकायामभिप्रायः"। अपितु स्वीयग्रन्थे अर्थशास्त्रे न्यायभाष्य-कामसूत्रयोर्वाक्यानि सर्व्वत्र यथानुक्रमं नोद्धृतानि तथापि केषाञ्चिदुद्धृतविषयाणां तौल्यं दृश्यते। तद्यथा—

| न्यायभाष्ये, | | अर्थशास्त्रे, |
|---|---|---|
| ( १ ) प्रदीपः सर्व्वविद्यानाम् | ... | —विद्योद्देशे प्रकीर्त्तिता। |
| ( २ ) 'पदसमूहो वाक्यम्' | ... | तथैवार्थशास्त्रे । |
| ( ३ ) 'परमतमप्रतिषिद्धम्' | ... | ,, ,, । |
| ( ४ ) 'अनुचितानिवर्त्तन्ते' | ... | ,, ,, । |
| ( ५ ) 'दायकयो नाम— | ... | ,, ,, । |
| ( ६ ) रावणश्च सीतामपरे— | ... | ,, ,, । |

एवं कामसूत्रोक्त विषयं अर्थशास्त्रे वदन् वात्स्यायन उभयोर्ग्रन्थयोः कर्त्तुरैक्यं स्पष्टीचकार। प्रागर्थशास्त्रे यानि पारिभाषिक-पदानि कानिचित् प्रयुक्तानि तानि पुनः कामसूत्रे प्रयुज्य तत्सूत्रमर्थशास्त्रात्परं विरचितवानिति सूच्यते।

कामसूत्रार्थशास्त्रयोः केषुचिद्विषयेषु तौल्यरूपं यथा—

( १ ) 'कामसूत्रं प्रणीतम्'। 'इदमर्थशास्त्रं कृतम्'।

( २ ) 'तस्यायं प्रकरणाधिकरणसमुद्देशः'। विद्यासमुद्देशः। विद्यासमुद्देशश्च।

| | |
|---|---|
| ( ३ ) 'औपनिषदिकम्'। | 'औपनिषदिकम्'। |
| ( ४ ) 'पितृपैतामहं वस्यम्'। | 'पितृपैतामहं वस्यम्'। |
| ( ५ ) 'मित्रसम्पत्'। | 'मित्रसम्पत्'। |
| ( ६ ) 'कामोपधाशुद्धान्'। | 'कामोपधाशुद्धान् बाह्याभ्यन्तरविहाररक्षासु'। |

अन्यत् सुधीवर-श्रीश्यामशास्त्रिणां अर्थशास्त्रस्य द्वितीयावृत्ति-भूमिकायामस्ति। एवमर्थशास्त्रात् कामसूत्रटीकायां यानि यानि वाक्यानि श्रीयशोधरेण समुद्धृतानि तानि सर्व्वाणि तत्रैवार्थशास्त्रभूमिकायाम् प्रदर्शितानि। अपरञ्च "आयुर्दायं विष्णुगुप्तोऽपि चैवम्, देवस्वामी सिद्धसेनश्च चक्रे" इति बृहज्जातकस्य सप्तमाध्याये। तद्व्याख्यानेच भट्टोत्पलेनोद्धृतेस्ति, "किन्तु विष्णुगुप्तेनापि चाणक्यापरनाम्ना एवमुक्तम्"। "नकुम्भलग्नं शुभमाह सत्यः, नभागभेदान् यवना वदन्ति। कस्यांशभेदोनतथास्ति राशेः। अतिप्रसङ्गस्त्विवतिविष्णुगुप्तः" इति। बृहज्जातकस्यैकविंशति प्रकरणस्थ-तृतीयश्लोकव्याख्याने 'अत्र विष्णुगुप्तचाणक्यावाहतुः'। 'कस्यांशेति'। अनेन भट्टोत्पल-लेखेन चाणक्यविष्णुगुप्तौ भिन्नौ प्रतीयेते। अत्र विष्णुगुप्तपदेन ब्रह्मगुप्ताचार्य्य इत्यन्ये वदन्ति। अपरेतु कौटिल्येन राश्यंश-कला-विकलादयः सौरसम्भतुसरादयश्च न ज्ञाता इत्याहुः। तथाचोक्तञ्चाचार्य्यविष्णुगुप्तेन 'अप्यर्णवस्य पुरुषः प्रतरन् कदाचित्, आसादयेदनिलयोगवशेन पारम्। नत्वस्य कालपुरुषाख्य-महार्णवस्य। गच्छेत् कदाचिदनृषिर्मनसापि पारम्" इति बृहत्संहितायामुक्तो वराहमिहिराचार्य्यैर्विष्णुगुप्तः अर्थशास्त्रकर्त्तुर्विष्णुगुप्तादन्य एव। तस्यानृषित्वादिति यदुक्तञ्च तत् सुष्ठु। यश्च शस्त्रं शास्त्रं नन्दराजगतामवनिञ्च समुद्धार। तस्यार्थे राश्यंश-कला-विकलादिकं शीघ्रोच्चपातादिकञ्च नैव दुरूहं स्यात्। तत्र वा बृहत् संहितायामनृषिपदस्यान्य एव लक्ष्यः। कौटिल्यस्य स्थाविरैर्मुनित्वप्रसिद्धेः। विष्णुगुप्तसन्दर्भस्य प्रमाणानि वराह-मिहिर-रघुनन्दन-भूधर-लक्ष्मीदासादिभि स्वस्वसन्दर्भ समुद्धृतानि। अन्येषां विदुषां नये विष्णुचन्द्रनाम्ना केनचित् सूरिणा वशिष्ठसिद्धान्तोव्यरचि। चाणक्यसूत्रेषु सूत्रमेकं 'श्वोमयुरादद्य कपोतोवरम्' इति 'दृश्यते ( अः ४, सूः ५६ ), तच्च कामसूत्रेऽप्यस्ति। 'वरमद्य कपोतः श्वोमयूरात्' ( २य, अः २४ श्लोः )। कौटिल्य इति नामच तदीय-नीतिरतीवसूक्ष्मत्वादन्येषां दुरधिगम्यत्वेन प्रसिद्धम्। यथा 'कौटिलीयं

यदि चान्ते: स्वरयोः ह्रस्वदीर्घयोः। बिन्दूष्मणोर्विमर्य्यासाद् दुर्बोध इति संज्ञितम्' इति यशोधरीये कामसूत्रव्याख्याने—'साधु-शब्दोपनिबद्धमप्यक्षर-विन्यासादस्पष्टार्थं सत् म्लेच्छितं गूढवस्तुमन्त्रार्थम्।' तथैव भारते आदि-पर्व्वणि वारणावतगमने युधिष्ठिरं प्रति विदुरस्य कौटिल्य-पूर्णोक्तिर्यथा "अलोहं निशितं शस्त्रं शरीर परिकर्त्तनम्। यो वेत्ति न तु तं घ्नन्ति प्रतीकार-विदं द्विषः"। भारते शान्तिपर्व्वणि कूटनीत्यर्थे कौटिल्यमिति दृश्यते। बहूनि च चाणक्यसूत्राणि अर्थशास्त्रविषयाभेदं यान्ति। तथाहि 'राज्यमूलमिन्द्रियजय इति अर्थशास्त्रे १—३। 'विनयस्य मूलं वृद्धोपसेवा' इति। 'नैकं चक्रं परिभ्रमति' इति। अर्थशास्त्रे १—७, १—६। 'अविनीतस्वामि भावाद्...... "नासहायस्य मन्त्रनिश्चयः" १—६। 'मन्त्रमुलाः सर्व्वारम्भाः:१—१५।—

'हीयमानेन न सन्धिं कुर्व्वीत'। अर्थशास्त्रे तु "हीयमानः सन्दधीत"। 'तेजोहि सन्धानहेतुस्तदर्थिनाम्'। अर्थशास्त्रे तु "तेजोहि सन्धानकारणम्", 'बलवान् हीनेन विगृह्णीयात्'। अर्थशास्त्रे तु 'न हीनेन विगृह्णीयात्। 'राज्ञः प्रतिकूलं नाचरेत्'। तथैवार्थशास्त्रे। "इन्द्रियवशवर्त्तीचतुरङ्गवानपि विनश्यति" इत्यर्थशास्त्रे। अत्रतु 'इन्द्रियवशवर्त्तिनोनास्ति कार्य्यावाप्तिः'। 'मत्स्य वजलमुपभुज्यार्थं गृह्णीयात्'। अर्थशास्त्रे मत्स्यार्थीव जलमुपजीव्यार्थं गृह्णीयात्'। "आत्मछिद्रं न प्रकाशयेत्" तथैवार्थशास्त्रे। 'उपस्थित-विनाशः प्रकृत्याकारेण लक्ष्यते'। ईदृश एवार्थशास्त्रेऽस्ति। 'तीर्थसमवाये पुत्रवतामधिगच्छेत्' इत्यत्र। "तीर्थसमवाये जीवत्पुत्रां गच्छेत्" इत्यर्थशा-स्त्रे चैवमस्ति। एवं बहुषु स्थलेषु अर्थशास्त्र-चाणक्यसूत्रयोर्विषयेषु ऐक्य-मस्ति। उभयोर्ग्रन्थयोरेककर्त्तृकत्वे नापि शङ्कासमापतति। चाणक्य-प्रणीतमेकं (१) लघुचाणक्यमष्टोत्तरशतश्लोकात्मकम्, (२) द्वितीयन्तत् प्रणीतं वृद्धचाणक्यम्, सार्द्धं द्विशतश्लोकात्मकम् (३) तृतीयं चाणक्यनीतिदर्पणाम्त-द्विरचितं अष्टचत्वारिंशदुत्तरत्रिशत-श्लोकात्मकम्। (४) चतुर्थं राजनीति-शास्त्रं प्रायः सहस्रश्लोकैः सम्पूर्णम्। पुस्तकमेतत्सर्व्वं मुद्रापितं विद्वत-

समाजेषु प्राकाश्यं नीतश्च। नेपालदेशीय बोधिचाणक्ये त्रिशतमिता श्लोका सन्ति। सिंहल-नगरे तद्भाषानुवादान्वितं एकं चाणक्यसूत्रं केनचित् सूरिणा मुद्रापितमिति श्रूयते। मयातु एतद्‌यप्रादर्शपुस्तकचतुष्टयं लब्धम्। तत्र हस्तलिखितं दक्षिणापथस्थ कालिकट-निवासिनां श्रीमद्गोविन्दशास्त्रिणां सकाशाल्लब्धमेकम्। (१) अन्यच्च अनन्तशयने मुद्रापितम्। (२) महीशूर राजकीयपुस्तकसंग्रहालयाध्यक्षाणां आर श्रीमहादेव शास्त्रिणां सकाशात् प्राप्तं तृतीयम्। (३) अपरञ्च द्वितीयावृत्तार्थशास्त्रस्य शेषभागे मुद्रितं चतुर्थम्। (४) चतुर्षुपुस्तकेषु सूत्राणां पाठानैक्यं बहुधा विद्यते। तत्पाठानैक्यं टीकायामस्य प्रदर्शितम्। कौटिल्यस्येतिवृत्तं कथासरित्सागरे, रविनर्त्तकस्य चाणक्यकथायामपि सुप्रपञ्चितमस्ति। विशेषतोऽस्मिन् सूत्रसन्दर्भे राजनीतिः, सामान्य-नीतिः, सामाजिक-नीतिः, धर्म्मविषयाः, अपत्यविनयनम्, नानाहितकरोपदेशाः, स्वास्थ्यरक्षा-भोजन—नियमादयश्च, प्रथमाध्यायतःषट्सु अध्यायेषु सन्ति। कुत्रचिदादर्शग्रन्थे अध्यायानां विभागा न विद्यन्ते। सन्ति च कुत्रचित्। प्रायशोऽध्यन्ते सूत्राणां प्रकरण सङ्गतिबन्धस्याभावः। 'मूल सूत्रं प्रवक्ष्यामि :चाणक्येन यथोदितम्। यस्य विज्ञानमात्रेण मूर्खो भवति पण्डितः'। "स्वयमेव विष्णुगुप्तश्चकार सूत्रं भाष्यञ्चेति' सत्रुचाणक्यार्थशास्त्रयोश्चाणक्यस्य स्वोक्तितः कौटिल्य-प्रणीतत्वे सूत्राणामेषां नापि सन्देहावसरः स्यात्। चाणक्यसूत्र-समाप्तौ चत्वारः श्लोका अधिकाः सन्ति एकस्मिन् आदर्श ग्रन्थे। ते मयापि सन्निविष्टाः सन्दर्भशेषे, टीकायां सारार्थबोधिन्यां व्याख्याताश्च। नीतिविषये अग्निपुराण-गरुडपुराण-कालिकापुराणेषु कानिचित् प्रकरणानि सन्ति। नाना दुर्योगादस्वास्थ्यादिभिराक्रान्तत्वात् मुद्रायन्त्रस्थाक्षर-योजकानां त्रुटिप्राचुर्याच्च भ्रमादिकमस्मिन् विद्यते। तत् कृपया सहृदयसूरिभिः क्षन्तव्यम्।

कलिकाताख्य राजधान्याम्। विदुषामनुचर—

वर्धमान विद्यालयतः। श्रीईश्वरचन्द्र शर्म्म शास्त्री।

# Foreword.

( वङ्गाचारसंस्करणस्य )

One of the most attractive elements in Indian culture is its wealth of gnomic lore. Half of it is written, half unwritten. Much is on record, much has still to be recorded. Energetic and capable reapers have still to bring in many sheaves. This lore is expressed in four distinct forms. First we have the elaborate shloka, metrical, polished and refined, a gem of terse poetical expression. Next we have the true proverb, living in the mouth of the people, non-metrical, and in character akin to the proverbs of all nations. Thirdly there is the aphorism or sutra, a form peculiar to India, almost an algebraical formula in words. Lastly there is the allusive, abbreviated cryptogram, a menemotechnic device, a formula to recall to mind the fuller form of the first two kinds.

In point of numbers the metrical shlokas and the true proverbs are most important. Over 10,000 different shlokas are already on record and accessible in printed form The proverbs, concerning which no statistics exist, must be numerous also. In their Sanskrit form no extensive collections have been published as yet, but collections in vernacular form have been published containing in some instances up to 8000 different sayings

Far less in number are the aphorisms, unless we take into account the philosophical sutra literature. We are here speaking of Niti only, of the ethics of life, of counsels of behaviour, of prudential wisdom.

The last class, the mnemotechnic cryptogram, is very

small indeed and need not referred to more fully here. Only very few examples of them have come to my knowledge.

The most interesting collection of the third kind is undoubtedly the one going by the name of Canakya-sutras which forms the subject matter of the present work. An incomplete collection of these was published as early as 1881, in Ceylon, in Sinhalese transcription, and with an English and Sinhalese translation. The little publication has remained almost unknown, and the first wide publicity given to the collection was their publication by Dr. R. Shama Shastri as an appendix to his epoch-making edition of the Kautilya Arthashastra. Recently two meritorious publications on the subject have appeared in Bengal, one republishing the sutras in Bengali transcription with a Bengali translation, the other giving an English translation with commentary.

The subject is of considerable importance and many problems are connected with it. Canakya is a great and symbolic name in connection with Niti. Who was this Canakya? Was he the famous minister of Maurya Candra-gupta, or another person bearing the same name? If not the same, when did he live, and where? Then, what is the relation of the contents of the body of Canakya Niti to other Niti preserved in India? What parallels can be found for the isolated sayings, both in Indian tradition and in the proverbial lore of the world? How have we to think of the origin and development of these sayings? What was their original form? Was the sutra form the original-one, and was this brief form expanded into that of literary

shlokas or were these shlokas the original poetical creations, later artificially contracted into brief aphorisms after the model furnished by the philosophical or ritual sutras? All these questions await treatment. We are only at the beginning of the study of the subject. Every contribution to this study is welcome. We need collection of materials. We need comparison of contents. We need explanation of meanings and implications. We need treatment of history and origins.

For all these reasons the present capable work of Pandit Ishwar Chandra Shastri is highly desirable. He has produced a book with double merit. It draws new and wider attention to the subject It brings a wealth of illustration, explanation and comparison of the contents of the sutras.

It will make many friends for this old but too generally forgotten or overlooked part of the inheritance of India, and it will stimulate many minds towards fresh enquiry and fresh study.

In this field at present no labour is superfluous ; and for a long time to come things will remain so.

May the learned and industrious Pandit be rewarded for his labour of love and understanding by a generous response from the reading public of Bengal. May he himself continue his interesting and meritorious work. And, above all, and best result, may he awaken others to follow in his footsteps.

Anyone demonstrating the loveableness and wisdom of India does a work of great merit, doubly welcome in our present times.

May then this volume be a messenger of good tidings and goodwill. We regard it as a valuable addition to Bengal's expanding library. We feel happy in bidding it welcome.

Calcutta,
17th September, 1928.

Johan van Manen,
General Secretary,
Asiatic Society of Bengal.

# अभिमतम् ।

( बङ्गाक्षरसंस्करणस्य )

भवत्प्रणीत-चाणक्यसूत्रव्याख्यानस्य कतिपयस्थानान्यवलोक्य प्रीतोऽभवम् । सूत्राण्येतानि सदुपदेशपूर्णानि संक्षिप्तानि च । इतःप्राङ् मन्ये तेषां व्याख्या केनापि विदुषा न कृतेति । भवत् कृतव्याख्याने सूत्राणामेषां विशेषविमर्शे विद्यमाने सर्व्वेषां पाठकानामर्थावबोधे विशेष सौकर्य्यं भवति । व्याख्यानं समीचीनं दृश्यते । ईदृश-नीतिग्रन्थस्य विद्वत् समाजेषु शिक्षार्थिषु च प्रचारबाहुल्यं समादरश्च हिताय भवतीति ।

स्यार श्रीनलिनीरञ्जन चट्टोपाध्यायः ।
भूतपूर्व्व प्रधानविचारपति, कलिकाता हाइकोर्ट ।
गभर्णमेण्ट संस्कृतपरीक्षासमिति-सभापतिः ।

# चाणक्य-सूत्रम् ।

## प्रथमोऽध्यायः ।

सा श्रीर्वोऽव्यात् ॥ १ ॥

नत्वेशं सच्चिदानन्दं जगतः परकारणम् ।
श्यामा श्रीरामकान्तौ च पितरौ प्रणमाम्यहम् ॥ १ ॥
नीतिशास्त्रार्णवं येन समालोड्यामृतं महत् ।
समुद्दध्रे नमस्तस्मै कौटिल्याय महात्मने ॥ २ ॥
क्व कौटिल्य-वचस्तत्त्वं नीतिनैपुण्य-भास्वरम् ।
तस्य व्याख्या-प्रवृत्तौ तु क्व च मन्दमतिर्मम ॥ ३ ॥
नीतिशास्त्रोक्तरत्नानि चाणक्यैः सूत्रितानि च ।
तेषां प्रसरभूतेयं टीका सारार्थबोधिनी ॥ ४ ॥

नीतेः सम्पन्मूलत्वात्तदधिष्ठातृ-देवतां मङ्गलाचरण-स्वरूपेण प्रार्थयति सेति ।

सा प्रसिद्धा परमसम्पत्प्रदा श्रीरैश्वर्याधिष्ठातृ-देवता वो युष्मान् अव्यात् पायादिति । तथा च श्रुतयः । "तामिहोपह्वये श्रियम्" । "श्रियं देवीमुपाह्वये श्रीर्मा देवी जुषताम् ।" "श्रीश्च

## सुखस्य मूलं धर्म्मः ॥ २ ॥

ते लक्ष्मीश्च पत्न्यौ" इति च । नृपनीतेः सकलसम्पन्मूलकत्वेन तदधिष्ठातृ-श्रीदेवतानामानुकीर्त्तनं सन्दर्भादौ शुभज्ञापकमिति । तथाच कापिलं सूत्रम् "मङ्गलाचरणं शिष्टाचारात् फलदर्शनात् श्रुतितश्चेति" । "मङ्गलादीनि हि शास्त्राणि प्रथन्ते वीरपुरुषाणि च भवन्ति, आयुष्मत् पुरुषाणीति" महाभाष्यधृत श्रुतेश्चेति । 'सम्पत्तिः श्रीश्च लक्ष्मीश्च'त्यमरः । श्रीयते सर्व्वैरभ्युदयार्थम् । श्रिञ् सेवायाम् । 'क्विव्वची'त्यौणादिकसूत्रेण क्विप् । अव रक्षणे, अवति । अवतेः आशीर्लिङाऽव्यादिति ॥ १ ॥

दृश्यते जगति सर्व्वे सुखं कामयमाना दुःखपरिहारोत्सुकाः अतः सुख-हेतुं धर्म्मं निर्दिशति सुखस्येति ।

शुभसूचकं सकलसम्पद्दातृ-देवतानामानुकीर्त्तनानन्तरं भुवनविधारकं धर्म्मं वक्ति नीतिविच्छिरोमणिः कौटिल्यः । जगतो धारणाद्धर्म्म इति । तथाच श्रुतिः । 'धर्म्मो विश्वस्य जगतः प्रतिष्ठा' इति । 'धर्म्मः सर्व्वेषां भूतानां मधु' इति च । महाभारतेऽपि । 'न जातु कामान्नभयान्नलोभाद्धर्म्मं जह्याज्जीवितस्यापि हेतोः' । तत्रैव 'धारणाद्धर्म्म इत्याहुर्न लोकचरितं चरेत्' । स च धर्म्मः लोकानामभ्युदय-निःश्रेयसहेतुः । तथाच कणादसूत्रम् । "यतोऽभ्युदयनिश्रेयससिद्धिः स धर्म्मः" । ऐहिकाभ्युदयस्य नीतिमूलकत्वाद् नीतेश्च सुखहेतुत्वात् । तच्च सुखं धर्म्ममूलकमिति । धर्म्मं विनाऽनुकूलवेदनीयस्य सुखस्यासम्भवत्वात् । दुःखन्तु 'वाधनालक्षणम्' इति न्यायसूत्रम् । तत्प्रतिकूलवेदनीयमित्यर्थः । व्यास-

## धर्म्मस्य मूलमर्थः ॥ ३ ॥

---

भाष्ये तु दुःखलक्षणमित्थं वर्णितम्। 'येनाभिहताः प्राणिनस्तदुपघाताय प्रयतन्ते तद्दुःखम्' । येन प्रतिकूलवेदनीयत्वेनानुभूतेन दुःखेन । अभिहता अनुभूतक्लेशाः । प्राणिनो जीवाः तस्य दुःखस्योपघाताय समुच्छेदाय । प्रयतन्ते सम्यग् यतन्ते । इति दुःखस्य निष्कृष्टलक्षणम् । सुखं दुःखाभाववदिति । "मूल-सूत्रं प्रवक्ष्यामि चाणक्येन यथोदितम्। यस्य विज्ञानमात्रेण मूर्खो भवति पण्डितः" इति लघुचाणक्यवाक्यान्नेदं चाणक्यविरचितसूत्रमिति केनापि माशङ्कि। 'धर्म्मोऽस्त्री पुण्य आचार स्वभावोपमयोः क्रतौ' इति मेदिनी । धृञ् धारणे, धरति ध्रियते वा । 'अर्त्तिस्तुसु' इत्युणादिसूत्रान्मन् । 'मूलमाद्ये शिफाभयो'रित्यमरः । मूलरोहणे मूलप्रतिष्ठायाञ्च । मूलतीति इगुपधत्वात् कः । सुखदुःख तत्क्रियायाम् । सुखयतीति पचाद्यच् ॥ २ ॥

सुखमूलमुक्त्वा धर्म्ममूलं वक्ति धर्म्मस्येति ।

धर्म्मस्य जगतो विधारकस्याभ्युदयनिःश्रेयसयोश्च मूलं अर्थः इत्यर्थः । सत्सु अर्थेषु तैर्लोके दान-याग-तीर्थकार्य्यादिभिः धर्म्मः समासाद्यते । निःस्वानान्तु तत्तत्कार्य्यसम्पादने धर्म्मार्ज्जने-चार्थराहित्यात् सामर्थ्याभावः प्रसिद्ध इति । तदुक्तं नीतिविद्भिः 'अर्थेन तु विहीनस्य पुरुषस्याल्पमेधसः । क्रियाः सर्व्वा विनश्यन्ति ग्रीष्मे कुसरितो यथा ।' अन्यत्र च 'धनाद्धर्म्मन्ततः सुखमिति ।' अपरञ्च 'यस्यार्थाः स पुमांल्लोके यस्यार्थाः स हि पण्डितः' इति च ।

# अर्थस्य मूलं राज्यम् ॥ ४ ॥

---

अर्थोविषयार्थनयोर्धनकारणवस्तुषु' इति मेदिनी। अर्थ उपयाञ्चायाम्। अर्थ्यते। घञ् प्रत्ययेन सिद्धः। 'मूलं शिफाद्ययोः। मूलवित्तेऽन्तिके ना भे' इति मेदिनी। मूल प्रतिष्ठायाम्। मूलरोहणे च मूलति मूलयति च। 'इगुपध' इत्यादिना कः अच् वा। "धर्म्माः पुण्य यम-न्याय स्वभावाचार सोमपाः" इत्यमरः। धृञ धारणे, धरति ध्रियते वा। 'अर्त्तिंस्तुसु' इत्याद्यौणादिकान्मन् ॥ ३ ॥

प्राग् धर्म्मस्य सुखमूलत्वं प्रदर्श्य सम्प्रति राज्यस्यार्थमूलत्वं निरूपयति अर्थस्येति।

राज्यं राष्ट्रं राजकर्म्म वा। अर्थस्य धनादिविषयस्य मूलं प्रधानं हेतुः। अर्थेन हि राजानो लोकाश्च स्वजीविकामेवमैहिकं सर्व्वं कार्य्यं निर्व्वाहयन्ति यतः—

"धनवान् श्रेष्ठतां याति दरिद्रः परिभूयते।
सर्व्वकार्य्याणि लोकेऽस्मिन् सम्पन्नानि धनैः सदा" ॥

नृपस्य तु राष्ट्र-दुर्ग-सैन्यामात्य-शस्त्रास्त्र-पोतप्रजादीनां संरक्षणे अर्थानां सम्यगावश्यकत्वाच्चेति। "अर्थोऽभिधेयशब्दानां धनकारणवस्तुषु" इति मेदिनी। ऋ गतौ। अर्थ्यते ऋच्छति वा। "उषिकुषिगार्त्तिभ्यस्थन्" इत्यौणादिकात्थना सिद्धम्। यद्यपि राज्ञः कर्म्म राज्यं तथापि तत्कर्म्मोपलक्षित-

## राज्य-मूलमिन्द्रियजयः ॥ ५ ॥

शासनाधीनस्थानमत्र बोध्यम्। कामन्दकनये राज्यं सप्ताङ्गं, अमरसिंहमते तु पौरश्रेणीभिः सहाष्टाङ्गमपि राज्यं तेन प्रदर्शितम् ॥ ४ ॥

अर्थमूलमुक्का राज्यमूलं निरूपयति राज्येति।

इन्द्रियजयः। इन्द्रियाणां पञ्चज्ञानेन्द्रिय-पञ्चकर्म्मेन्द्रियाणां तदध्यक्षमनसश्च। जयः स्वायत्तीकरणं संयमश्चेति। तद् राज्यस्य मूलं राज्यस्थिति-तत्पालनहेतुर्भवति। तथाच वार्हस्पत्यं सूत्रम्। 'आत्मवान् राजेति'। राजा नृपः आत्मवान् प्रशस्तमनाः स्यात्। मनःप्राशस्त्यं नीत्यादिशास्त्रपरिशीलनेन भवति। अत्रात्मपदेन मनोग्राह्यम्। एतदेव भारतटीकायां नीलकण्ठभट्टैरुक्तम्। अजितेन्द्रियाणां विनाशं श्रूयते। तथाच "अवशेन्द्रियचित्तानां हस्तिस्नानमिव क्रिया। दुर्भगाभरणप्रायो ज्ञानं भारः क्रियां विना" इति। अन्यद्विषयेऽस्मिन् कौटिल्यैरर्थशास्त्रस्य तृतीयाध्याये प्रथमाधिकरणे समुपवर्णितम्। कैश्चिद्विद्भिः ज्ञानेन्द्रियाणि षड़ित्युक्तम्। तद्यथा—"मनःकर्णौ तथा नेत्रं रसना च त्वचासह। नासिका चेति षट् तानि धीन्द्रियाणि प्रचक्षते" इति। इन्द्रस्यात्मनो लिङ्गम्। 'इन्द्रियमिन्द्रलिङ्गम्' इत्यादिना घचा निपातनात् सिद्धमिन्द्रियपदम्। जि जये, जयनम्। तदेरच्-प्रत्ययसिद्धम् ॥ ५ ॥

## इन्द्रिय-जयस्य मूलं विनयः ॥ ६ ॥

---

इन्द्रियजयहेतुं निर्व्वक्ति इन्द्रियेति ।

विनयो नम्रता सौशील्यं इति यावत् । सर्व्वेन्द्रियाणामेकादशसंख्यकानां जयस्य मूलं निदानमिति । अथवा इन्द्रियाधिष्ठातृ-मनसोजये ज्ञान-कर्म्मेन्द्रियाणामवश्यं जयः स्यात् । इन्द्रियजयस्य मूलं मुख्यं कारणं विनयः । यस्तु विनयवान् सहिष्णुर्विवेकी तस्य धैर्य्येण स्थैर्य्येण चेन्द्रियजयो भवति । अविनयस्याविमृश्यकारित्वेनेन्द्रियलौल्यं विवर्द्धते । तदुक्तं कविभिः "शीलेन कुर्य्यादृशम्" इति । अन्यच्च 'आपदां कथितः पन्था इन्द्रियाणामसंयमः । तज्जयः सम्पदां मार्गो येनेष्टं तेन गम्यताम्" इति । मात्स्ये तु विनयमाश्रित्योक्तं यथा—

'समग्रां वशगां कुर्य्यात् पृथिवीं नात्र संशयः ।
बहवोऽविनयाद् भ्रष्टा राजानः सपरिच्छदाः ॥
वनस्थाश्चैव राज्यानि विनयात् प्रतिपेदिरे ।
वृद्धांश्च नित्यं सेवेत विप्रान् वेदविदः शुचीन् ॥
तेभ्यो हि शिक्षेद् विनयं विनीतात्मा हि नित्यशः' इति ।

विनयनम् । वि पूर्व्वान्नयतेरचा एरचा वा सिद्धम् । अन्यत्र विनयो दण्डः । तच्च व्यवहारतत्त्वे स्पष्टमस्ति ॥ ६ ॥

**विनयस्य मूलं वृद्धोपसेवा ॥ ७ ॥**

**वृद्ध-सेवाया विज्ञानम् ॥ ८ ॥**

---

विनयकारणं निर्द्दिशन्नाह वृद्धोपसेवेति ।

वृद्धानामुपसेवेति तत्पुरुषः । वृद्धानां विद्यावयोज्येष्ठानाम्, सतां सन्निधौ ज्ञानार्थमुपसर्पणपूर्व्वकं सेवा तद्योग्यपरिचर्य्या । वृद्धसन्निधौ त्रयी वार्त्तान्वीक्षिकी दण्डनीत्यादीनां शिक्षणं सेवनपूर्व्वकं भवति । तथाच "वृद्धसंयोगः" इति कौटिल्यः । "तद्विद्धि प्रणिपातेन परिप्रश्नेन सेवया" इति गीतायाञ्च । सा च सेवा विनयार्ज्जनस्य मूलं मुख्यमित्यर्थः । तथा हि अर्थशास्त्रे,—

"विद्याविनीतो राजा हि प्रजानां विनये रतः ।
अनन्यां पृथिवीं भुङ्क्ते सर्व्वभूत-हिते रतः ॥" इति ।

विद्याविनयगुणा वृद्धोपसेवनात् प्रादुर्भवन्ति । अन्यत् पूर्व्वसूत्रे निगदितम् । वृद्धो ज्ञाननिपुणः स्थविरो वा ।

"न तेन वृद्धो भवति येनास्य पलितं शिरः ।
यो वै युवाप्यधीयानस्तं देवाः स्थविरं विदुः ॥" इति ।

तथाच "वृद्धो जीर्णे प्रवृद्धे ज्ञे त्रिषु क्लीवन्तु शैलजे" इति मेदिनी । वृधु वृद्धौ, वर्द्धते स्म । गत्यर्था इत्यादि सूत्रेण क्तः ॥७॥

वृद्धजनसेवायाः फलं निरूपयति विज्ञानमिति । विज्ञानं विशेषेण नीतिदर्शनशिल्पादिज्ञानम् । एतदेव पूर्व्वोक्तवृद्धजनोप-

# विज्ञानेनात्मानं सम्पादयेत् ॥ ९ ॥

---

सेवनस्य फलम्। विज्ञानेच्छुर्वृद्धोपसेवनं कुर्य्यात्तेन नैपुण्य-लाभः। वयोवृद्धाद्विद्यावृद्धः श्रेष्ठः। प्राङ्निरुक्तं वृद्धलक्षणम्। सेवा तु परचित्तानुवर्त्तनं वा। 'मोक्षे धीर्ज्ञानमन्यत्र विज्ञानं शिल्पशास्त्रयो'रित्यमरः। मोक्षफलिका धीर्ज्ञानम्। शिल्पे शास्त्रे च या धीः सा विज्ञानम्। 'विज्ञानं कार्म्मणि ज्ञाने' इति हैमः। सेवृ सेवने, सेवनम्। 'गुरोश्च हलः' इत्यनेनाप्रत्ययः ॥८॥

विज्ञानफलं वक्ति विज्ञानेनेति। नीतिशिल्पवार्त्तादिशास्त्र-जनितेन ज्ञानेन नृपोलोकश्चात्मानं सम्पादयेत्। तादृशशास्त्रोक्त-ज्ञानेन स्वं स्वं कार्य्यं न्यायाधिकरणोक्तञ्च निर्व्वाहयेदित्यर्थः। कौटिलीये ऽर्थशास्त्रे विनयाधिकारिके "रक्षेदात्मानमात्मवान्" इति। "आत्मानम् आत्मना रक्षन् चरिष्यामि विशाम्पते" इति भारते च। आत्मना विवेकयुक्तेन मनसा विज्ञानान्वितेन वा, आत्मानं स्वं रक्षन् पालयन् गोपायन् वा। चरिष्यामि व्यावहारिकं सर्व्वं सम्पादयिष्यामीत्यर्थः। "आत्मा कलेवरे यत्ने स्वभावे परमात्मनि। चित्ते धृतौ च बुद्धौ च परव्यावर्त्तनेऽपि च" इति धरणिः। अत्रात्मा मन इति। अत् सातत्यगमने, अतति। 'सातिभ्यां मनिन्मनिणौ' इति मनिन्। विज्ञायते सम्यज्ज्ञायते वस्तुतत्त्वं येन तद्विज्ञानम्। विपूर्व्वाज् जानातेः करणे ल्युट् ॥ ९ ॥

**सम्पादितात्मा जितात्मा भवति ॥ १० ॥**
**जितात्मा सर्व्वार्थैः संयुज्यते ॥ ११ ॥**

---

सम्पादितात्मनोजितात्मत्वं प्रदर्शयति सम्पादितेति ।

सम्पादितः । नीतिविज्ञानयुक्तमनाः पुमान् । अथवार्थ-वार्त्ता-शिल्प-धर्म्मशास्त्रजनित ज्ञानेन सम्पादितः परिमार्ज्जित-आत्मा मनो येन सः सम्पादितात्मा । जितात्मा प्रशस्तमनाः । न्यायान्यायविवेकेन जितमना वा भवति स्यादित्यर्थः । अन्यथा प्रतिपदमात्मनो विपत्सम्भावना गरीयसीति सारः । तदुक्तं बृहस्पतिना "आत्मवान् राजेति" । काठके च "यस्तु विज्ञानवान् भवति युक्तेन मनसा सदा । तस्येन्द्रियाणि वश्यानि सदश्वा इव सारथेः" इति । युक्तेन मनसा आन्वीक्षिक्यादि-शास्त्रजनित-ज्ञानयुक्तचित्तेनेत्यर्थः । यतः "अवशेन्द्रियचित्तानां हस्तिस्नान-मिव क्रिये"ति प्रागुक्तम् । असम्पादितात्मनः कार्य्यं विनष्टं स्यात् इति भावः ॥ १० ॥

वश्यात्मनः पुंसः सकलार्थसाधने सौकर्य्यं दर्शयति जिता-त्मेति । जितो वशीकृतः आत्मा मनो येन सः जितात्मा, जितमनाः प्रशस्तचित्त इति यावत् । पुमान्, सर्व्वार्थैः कार्य्यकालोपस्थितसकलविषयैः । संयुज्यते तत्तत् कार्य्यसाधने योग्यो भवतीति अन्तरार्थः । अजितेन्द्रियस्य सर्वमाकूलितं भवति । तदुक्तं गीतायाम्, "इन्द्रियाणां हि चरतां यन्मनोऽनु-विधीयते । तदस्य हरति प्रज्ञां वायुर्नावमिवाम्भसि" इति ।

## स्वामि-सम्पत् प्रकृति-सम्पदं करोति ॥ १२

---

'गुणवतो राज्य'मिति बृहस्पति सूत्रम्। गुणवत्त्वं हि विद्यागुणोऽर्थगुणः सहायगुणश्चेति तत्रैव सूत्रितम्। वासिष्ठे च "तरवोऽपि हि जीवन्ति जीवन्ति मृगपक्षिणः। स जीवति मनो यस्य मननेन हि जीवति" इति मतिमतां श्रेष्ठमुक्तम्।

"आत्मा चित्ते धृतौ यत्ने धिषणायां कलेवरे चेति" धरणिराह। सर्व्वार्थैरिति। "अर्थोऽभिधेयरैवस्तुप्रयोजननिवृत्तिषु" इत्यमरः। आत्मेति। अत् सातत्यगमने, अतति। 'सातिभ्यां मनिन्मनिणौ' इत्यततेर्मनिना सिद्धम्। जितेति। जयते कर्म्मणि क्तः। अर्थेति। ऋ गतौ, अर्य्यते ऋच्छति वा। 'उषिकुषिगार्त्तिभ्यस्थन्' इत्यौणादिकादर्त्तेः थन् ॥ ११ ॥

स्वामि-सम्पत्तिभिः प्रकृतिसम्पद् वर्द्धते तत् कथयति स्वामीति।

स्वामिनो नृपस्य प्रभोरिति। या सम्पत् सम्पत्तिरैश्वर्य्यं इति यावत्। सा प्रकृतेरमात्यादीनां पौरवर्गाणां करदातॄणामिति यावत्। सम्पदं सम्पत्तिं करोति वर्द्धयति। करोतेः क्रियासामान्यवाचित्वात्। प्रकृतीनां सम्पदिति षष्ठीतत्पुरुषः। प्रकृतेरभ्युन्नतिः नृपसम्पदं नितरामपेक्षते इति भावः। 'स्वामी प्रभु-विशाखयो'रिति विश्वः। स्वं अस्यास्तीति 'स्वामिन्नैश्वर्य्ये' इति साधुः। 'सम्पत्तिः श्रीश्च लक्ष्मीश्चे'ति अमरः। संपूर्व्वात्

प्रकृतिसम्पदा ह्यनायकमपि राज्यं नीयते ॥१३॥

---

पदगतौ इत्यस्मात् क्विप्। सम्पदनमनया वेति। प्रकृतिरिति 'प्रकृतिर्गुणसाम्ये स्यादमात्यादि स्वभावयोः। योनौ लिङ्गे पौर-वर्गे' इति मेदिनी। प्रकृष्टं कुर्व्वन्ति राज्यमिति क्तिचा सिद्धम्। राज्ञोराष्ट्रे सुनैपुण्यैः प्रतिष्ठिते राष्ट्रसमृद्धिः सम्बर्द्धते नान्यथा। यतो "नाराजके जनपदे" इति रामायणोक्तेः। नृपो निजतनया-निव सर्व्वाः प्रजाः पालयेत्। तथा च "प्रजाः पुत्त्रानिवौरसान्" इति मार्कण्डेयपुराणे। 'अर्थसम्प'दिति पाठे तु राजार्थसम्पदा प्रजानामर्थो वर्द्धते इत्यर्थः स्यात्॥ १२॥

प्रकृति-सम्पदामुत्कर्षमनेन प्रदर्शयति प्रकृतीति।

प्रकृतीनां नियत-करदानां प्रकृष्टराज्य-कराणां तदङ्गाना-मिति यावत्। तेषां सुखसमृद्ध्या, हि निश्चितम्। अनायकं नृपविहीनं राज्यं नीयते सुशास्यते अपि सम्यक् संरक्ष्यते। यतः अनायक-राज्यनाशशङ्कया सम्पत्-शान्ति संरक्षणाय प्रकृतयः सम्भूयसमुत्थानेन प्रतिभूकरणेन च राष्ट्रं परिपालयन्तीति भावः।

केचित्तु नायकहीनानां दौर्गत्यं विनाशं वा प्राहुः। तथाहि—

'अनायका विनश्यन्ति नश्यन्ति बहुनायकाः।
स्त्री नायकाः प्रणश्यन्ति नश्यन्ति शिशुनायकाः'॥ इति।

"नायको नेतरि श्रेष्ठे हारमध्यमणावपि" इति विश्वः।

नयन्तीति नायकाः। नीञ् प्रापणे इत्यस्मात् ण्वुल्॥ १३॥

**प्रकृतिकोपः सर्वकोपेभ्यो गरीयान् ॥ १४ ॥**

**अविनीत स्वामि-भावादस्वामिलाभः श्रेयान् ॥१५॥**

---

प्रकृति-क्षोभः महानिष्टसाधनमिति तत् सूत्रयति प्रकृतीति ।

दुःशासनाद्-दुर्भिक्षाद् भूकम्पन महामारी वारिप्लावन शिक्षा-धर्म्मादिराहित्येभ्यश्च प्रकृतीनां प्रजादीनां कोपो द्वेषोद्रोहो वा भवति । स च सकलकोपेभ्यः ग्रह-व्याधि-नृपान्तरकोपेभ्यो गरीयान् विशेषतः प्रबल इत्यर्थः । अतो येन सर्व्वाः प्रकृतयः सुशान्ता राजानुगताः स्युस्तथा भूमिपैर्भाव्यम् । प्रकृतिशान्तिर्हि नृपस्थितेर्मूलम् । तदशान्तौ नृप-हानिसम्भवाद्राष्ट्रदुर्य्योगाच्चेति रहस्यम् । "कोप-क्रोधामर्षरोष" इत्यमरः । कुप क्रोधे । कुप्यति । ततो भावे घञ् । गरीयान् इति । अतिशयेन गुरुः । 'प्रिय स्थिर' इत्यादिना साधुः ॥ १४ ॥

सुशासने पराङ्मुखं स्वामिनं निन्दति अविनीतेति ।

दुष्टानां निग्रहः शिष्टानां परिपालनं सुशासनञ्च स्वामिनो विधेयम् । अविनीतो नीतिविहीनस्तादृशः स्वामी । तद्भाव-स्तत्त्वम् । तस्मादविनीतस्वामिभावात् । अनीतिज्ञाद् नृपात् । अस्वामिलाभः । स्वामिहीनतायालाभः प्राप्तिः । श्रेयान् प्रशस्तः । तदुक्तं भोजनृपेण "नीतिहीन-नरेन्द्राणां नश्यन्त्याशु सुसम्पदः" इति । अस्वामिभावो गणतन्त्वता इति केचित् । प्रकृतिरञ्जक-त्वाद्राजा । तथा च रघौ 'राजा प्रकृतिरञ्जनात्' इति । अन्यथा

**सम्पाद्यात्मानमन्विच्छेत् सहायान् ॥१६॥**

**नाऽसहायस्य मन्त्र-निश्चयः ॥ १७ ॥**

---

प्रकृतीनां सम्भूय समुत्थानेन राज्यपरिपालनं सुकरमिति भावः। अविनीतः समुद्धतश्च। 'समुद्धतं समुन्नोर्णेऽप्यविनीते च वाच्य-व'दिति मेदिनी। णीञ् प्रापणे, न व्यनायीति नयतेः क्तप्रत्ययः ॥ १५ ॥

राज्यशासनयोग्यप्रयोजनमुक्ता स्वानुकूलसहायवत्त्वं प्रदर्शयति सम्पाद्येति। आत्मानं मन आदीन्द्रियनिचयं सम्पाद्य नीत्यादिशास्त्रबोधेन प्रतिष्ठाय स्वानुरूपमन्त्रि-पुरोहितामात्य-भृत्यादीन् सहायान् सहकारिणः आनुकूल्यभाजः इति। अन्विच्छेत्। स्वराष्ट्ररक्षणाद्युपकारकत्वेन सहायभूतानभिलषेत्। तदुक्तमभियुक्तैः 'सहायास्तादृशास्तस्य यादृशी भवितव्यता' इति। शौर्य्यज्ञानविज्ञानसम्पन्नोऽपि नरेशः लघुबुद्धया सहायान् नैव परिहरेत्। यतः 'तुषेणापि परित्यक्ता न प्ररोहन्ति तण्डुलाः' इति। 'सहायश्चानुचरोऽभिसर' इत्यमरः। सह अयते, एति वा, अय गतौ, इण गताविति च। सहाय इत्यचा सिद्धः। 'सहाय-वानिति' पाठे तु सहायवान् तद्युक्तः सचात्मानमात्मनैपुण्य-श्चाभिकाङ्क्षेत। न तु सहायविरहित इति ॥ १६ ॥

सहायविरहितस्य मन्त्रनिश्चयाभावं वक्ति नेति।

सहायहीनस्य राज्ञोऽत्र सहायकाः—अमात्य-दुर्ग-सुहृत्

## नैकं चक्रं परिभ्रमति ॥ १८ ॥

राष्ट्राश्वनागरथपदातिकोशाश्चेति । एभिर्विरहितस्य मन्त्रनिश्चयो मन्त्रप्रणिधानं न भवति । राजाहित-विषयसंवादावधारणं सचिवादिभिर्विना न सम्भवतीति भाव: । एवमर्थशास्त्रेऽपि 'य- एवमपायस्थानेभ्यो वारयेयु:' । 'सहायसाध्यं राजत्वम्' । अन्य- त्रत्रैव 'कुर्व्वीत सचिवांस्तस्मात्तेषाञ्च शृणुयान्मत'मिति । अपरे तु तीर्थाश्चाष्टादशसंख्यका: सहाया भवन्ति । तथाच "सेना- पतिर्गणको राजश्रेष्ठी दण्डाधिपो मन्त्रीमहत्तरो बलवत्तरश्चत्वारो वर्णाश्चतुरङ्गबलं पुरोहितोऽमात्यो महामात्यश्चेत्यष्टादशसंख्यका राज्ञां तीर्था भवन्ति" । एते चाष्टादशसंख्यकास्तीर्था: शास्त्र- विन्निपुणा मन्त्रिणो वा राज्ञां सततं सहाया: स्युरिति श्रुत- सागरीये यशस्तिलकव्याख्याने प्रोक्तम् । 'स्वामिचित्तानुवृत्तिभि- र्मत्यैक्याकारकर्म्मैव मन्त्र'मिति वृहस्पति: । स्वामिनो नृपते: । चित्तानुवृत्तिभिर्म्मनोऽनुकूलाभिप्रायै: सार्द्धं मत्या नृपामात्योभय- बुद्ध्या एकरूपकर्म्मैव । अभिन्नबुद्ध्या एकरूपकर्म्मैव मन्त्रमिति गुरुसूत्रार्थ: । "अनुप्लव सहायश्चानुचरोऽभिसर:" इत्यमर: । अय गतौ, इण गतौ च । सह अयते एति वा, ताभ्यामच् । "समौ निर्णयनिश्चयौ" । चिञ् चयने, निश्चिनोति । ततो 'ग्रहवृद्ट' इत्यादिना अप् स्यात् ॥ १७ ॥

बहुभि: सम्पाद्ये कर्म्मणि नैकस्योपयोगित्वं तद्दर्शयति नैक-

सहायः समोद्.खसुखयोः ॥ १९ ॥

---

मिति । यथाहि शकटस्यैकं चक्रं रथनाभिः न भ्रमितुं क्षमते तथा राष्ट्रम् । एवं मन्त्रि-मन्त्रनिश्चयादिभिर्विना स्वयं महीभुक् कार्य्यं न शक्नोति । तथाच कौटिलीये 'चक्रमेकं न वर्त्तते' इति । अन्यत्राप्युक्तं 'यथा ह्येकेन चक्रेण न रथस्य गतिर्भवेदिति' । तथा मन्त्र्यादिभिर्विना न राजकार्य्यमिति भावः । 'चक्रः कोके पुमान् क्लीवं व्रजे सैन्यरथाङ्गयोः । राष्ट्रे दम्भान्तरे' इति मेदिनी । चक्रमिति । क्रियतेऽनेन घञर्थे कः । 'के कृञा-दीनामिति' वार्त्तिकाद् द्वित्वम् ॥ १८ ॥

प्राक् सहायस्यावश्यकत्वमुक्त्वा सम्प्रति तद्गुणं वक्ति सहाय इति । कर्म्मसु विपत्सु च सहायः सहकारी साहाय्यकारीति यावत् । स च भूभृतां परेषां वा दुःखे प्रतिकूलवेदनीये सुखे चानुकूलवेदनीये । तयोः समः साम्यम् अनुभविता कर्म्म-कर्त्ता चेत् सम्यग्योग्यसाहाय्यभागिति । 'समदुःखसुखः' इति पाठे तु, ते सुखदुःखे समे तुल्ये सह राज्ञा यस्य स इत्यर्थः स्यात् । सहायत्वकरणे तुल्यशक्तिमदेतत् समत्वम् । 'समस्तुल्यः' इत्यमरः । सम वैक्लव्ये, समति । सम इत्यचा सिद्धम् । शक्ति-शक्तेर्न्यूनत्वे सहायकस्य प्राबल्यं सूचितम् । तथाच 'सहायो बलवत्तर' इति कैश्चिदुक्तम् ॥ १९ ॥

**मानी प्रतिपत्तिमानात्म-द्वितीयं मन्त्रिण-मुत्पादयेत् ॥ २० ॥**

---

प्राक् सहायमुक्ता स्वानुरूपसचिवोत्पादनप्रयोजनं वक्ति मानीति।

मानी यथार्थ सम्मानार्हः समुन्नतचित्तः। मानोऽस्यास्तीति मानी। 'मानश्चित्तसमुन्नति'रिति कोषात्। प्रतिपत्तिमान् प्राज्ञः ख्यातिमान् समृद्ध इति। एवं विधो नृपः। आत्मनो-द्वितीयं स्वानुकूलं सचिवलक्षणान्वितं मन्त्रिणं कुर्य्यादासा-दयेत्। तथा च कौटिलीये 'प्रतिपत्तिमानुत्साह-प्रभावयुक्तः क्लेशसहः शुचिर्मैत्रो दृढ़भक्ति'रित्यादि। मन्त्रिलक्षणं मात्स्ये,—

"मन्त्री भक्तः शुचिः शूरोऽनुक्तो बुद्धिमान् क्षमी।
आन्वीक्षिक्यादि कुशलः परिच्छेदी सुदेशजः॥
बहुभिर्मन्त्रयेत् कामं राजामन्त्रं पृथक् पृथक्।
मन्त्रिणामपि नो कुर्य्यान्मन्त्री मन्त्र-प्रकाशनम्॥
न क्वचित् कस्य विश्वासो भवतीह सदा नृणाम्।
निश्चयश्च सदा मन्त्रे कार्य्य एकेन सूरिणा॥
भवेद्वा निश्चयावाप्तिः परबुद्ध्यनुजीवनात्।
एकस्यैव महीभुजो भूयः कार्य्यो विनिश्चयः॥"

'मन्त्री धीसचिवोऽमात्यः, सामवायिकः धीसख'श्चेति।

मन्त्रि गुप्तभाषणे। अवश्यं मन्त्रयते। 'आवश्यक' इत्या-

**अविनीतं स्नेहमात्रेण न मन्त्रे कुर्व्वीत ॥ २१ ॥**

**मन्त्रमूलाः सर्वारम्भाः ॥ २२ ॥**

---

दिना णिनिः। सुगममन्यत्। 'शूरोमानीति' पाठे तु शूरोऽव्याहतशक्तिर्मानी चेति राज्ञो विशेषणम् ॥ २० ॥

अविनीतं सचिवं केनोपायेन पालयेत्तद्वक्ति अविनीतमिति। नयपरिहीनमर्थादाभिजात्य-प्रज्ञाशौचशौर्य्यानुरागरहितं सचिवं स्नेहमात्रेण वात्सल्यमात्रेण रक्षेत्। न तु मन्त्रे। हितजनकरहस्यालोचनादिषु न कुर्वीत न नियुञ्जीत इति। तथाच कौटिल्यः—'कार्य्यसामर्थ्यात्पुरुषसामर्थ्यं कल्पयेत्।' कार्य्यसामर्थ्यादिति। कार्य्यनियुक्तस्य पुंसः कार्य्यगुरुत्वेन तत्सम्पादने पाटवमपाटवं वा सामर्थ्यं शक्तिः कल्पयेत्, अयमत्र-योग्योऽयोग्यो वेति निरूप्यते इति तदर्थः। अमात्यस्यान्यस्य वा कार्य्यनैपुण्यदर्शनेन तत्पुरुषसामर्थ्यं कल्पनीयम्, नत्वाभिजात्यादिना। अविनीतः समुद्धतो वेति।

'समुद्धतं समुद्गीर्णेऽप्यविनीते च वाच्यवत्' इति मेदिनी।

न विनीतः। णीञ् प्रापणे इत्यतः क्तप्रत्ययेन सिद्धम्।

'स्नेहः प्रेमणि घृतादिके।' ष्णिह प्रीतौ, स्नेहनम्। घञा सिद्धम् ॥ २१ ॥

राष्ट्रहिताहित-सकलकार्य्याणां मन्त्रमूलकत्वं प्रदर्शयति मन्त्रेति। सर्वाणि नवारब्धकार्य्याणि करिष्यमाणानि वा। मन्त्रमूलानि मन्त्रपूर्व्वकानि भवन्ति। अथवा सर्वे कर्म्मारम्भाः

## मन्त्रसंवरणे कार्य्यसिद्धिर्भवति ॥ २३ ॥

---

उपक्रमाः मन्त्रपूर्व्वकाः समीचीनाः स्युरिति। अर्थशास्त्रेऽपि 'मन्त्रपूर्व्वाः सर्व्वारम्भाः' इति। सर्व्वे कार्य्योपक्रमा यदि मन्त्र-पूर्व्वाः स्युस्तदावश्यं सुफलप्रसवा भवेयुरित्यर्थः। 'हिताहितार्थ-विवेके गुप्तभाषणं मन्त्र'मिति औशनसाः। 'अभ्यादानसमुद्-घात आरम्भ' इति। आरम्भणम्। रभ् राभस्ये, ततो घञ्। 'रभेरशब्लिटोः' इत्यनेन नुम्। न तु 'रधिजभोरचि' इत्यनेन। 'तत्र रभेरनुल्लेखात्'। भोजराजास्तु 'मन्त्रमूलं यतो राज्यम् अतो मन्त्रं समाश्रये'दिति कल्पतरौ प्रोचुः ॥ २२ ॥

मन्त्रसंगोपने कार्य्यसम्पत्तेरवश्यम्भावित्वं प्रदर्शयति मन्त्र इति। मन्त्रो मन्त्रिभिः सार्द्धं गुप्तभाषणम्। तदत्र हिताहित-चिन्तनरूपम्। तस्य मन्त्रस्य संवरणे संगोपने संरक्षणे च सर्वं कार्य्यं सम्पत्स्यते। तथाच कौटिल्यः,—"तस्य संवरणम् आयुक्त-पुरुषरक्षणम्, आच कार्य्यकाला"दिति। तस्य मन्त्रस्य सम्यग् नियुक्तेन निपुणपुरुषेण रक्षणम्, आ कार्य्यारम्भादा च कार्य्य-समाप्तिं यावदिति तदर्थः। अन्यथा मन्त्रो भिद्येत, यदि मन्त्रं भिन्द्यात्तदा "उच्छिद्येत मन्त्रभेदी" इति स एव वक्ति। मन्त्र-भेदी मन्त्रप्रकाशकः, तत्प्रकाशनोत्परं स उच्छिद्येत, विश्वास-हानादिति। एवमेव बृहस्पतिरुवाच 'मन्त्रमूलो विजयः' इति। सर्व्वकार्य्येषु साफल्यलाभो मन्त्रमूलक इत्यर्थः। वृञ् वरणे, संपूर्व्वस्यास्य सम्यग् गोपनमर्थः। संव्रियते इति 'कृत्यल्युटो

मन्त्रनिःस्रावः सर्व्वं विनाशयति ॥ २४ ॥

---

बहुलमि'त्यनेन ल्यट् । 'मन्त्रकाले न कोपये'दिति गुरुसूत्रम् । एतस्यार्थो मत्कृते तत् सूत्रव्याख्याने द्रष्टव्यम् । मन्त्रसमये स्वयं वा न कोपयेदित्यर्थः । कोपाच्चित्तविकृतेः कार्य्यहानिर्व्विवाद-श्चेति । "सिद्धिःस्त्रीयोगनिष्पत्तिपादुकान्तर्द्धिवृद्धिषु" इति मेदिनी। षिधु संराद्धौ, सिध्यति । ततः क्तिच् ॥ २३ ॥

मन्त्रप्रकाशे कार्य्यहानं निर्व्वक्ति मन्त्र इति । मन्त्रस्य गुप्ता-लोचितविषयस्य निःस्रावो बहिःप्रकाशनम् । तन्निःस्रावी मन्त्र-प्रकाशको विज्ञापक इति । स च निस्रावः मन्त्रितं सर्वकार्य्यं नाशयति । मन्त्रः गुह्यवादो वा । स्रु गतौ, निःसरणम् । ततो घञ् । अत्र भारद्वाज-पराशर-विशालाच-पिशुन-बृहस्पति-उशनो-मनु-वातव्याधि-कौटिल्य-बाहुदन्तीपुत्राणां मतानि सन्ति, तानि चार्थशास्त्रे आकरे औशनससूत्रे च । 'मन्त्रविस्रावी कार्य्यं नाशयति' इत्येवं पाठेऽर्थस्तु सुगमः । विस्रावी प्रका-शकः । गुरुस्तु 'मन्त्रेऽपि' इति सूत्रे 'त्रिविधा मन्त्राः' उत्तमा-धममध्यमाः स्युरित्यवादीत् । तथाच "ऐकमत्येन दण्डनीति-नेत्रेण धीरैर्मन्त्रिभिर्यो मन्त्रः स उत्तमः" । "पूर्व्वं बहुबुद्धयः पश्चादेकमतयो भवन्ति यत्र स मध्यमः" इति । "गुणदोषागमं निश्चित्य मौर्ख्यबाहुल्याद् य आरभ्यते सोऽधमो मन्त्रः" । सूत्रा-णामेषामर्थाः मत्कृते गुरुसूत्र-व्याख्यानेऽवलोकनीयाः ।

**प्रमादाद् द्विषतां वशमुपयास्यति ॥ २५ ॥**

**सर्व्वेद्वारेभ्यो मन्त्रो रक्षितव्यः २६ ॥**

---

'निःस्रावो निर्गमो बहिः प्रकाशश्च' । स्रु गतौ, निःस्राव्यते । ण्यन्तादेरच्, ततो घञ् वेति ॥ २४ ॥

मन्त्रनिर्गमहेतुं वक्ति प्रमादादिति । प्रमादान्मन्त्रिणामिति शेषः । प्रमादाच्चित्तवैकल्यादनवधानादिति । द्विषतां शत्रूणां छिद्रान्वेषिणामिति । मन्त्रः, तेषां वशं बुद्धिगोचरम् । उपयास्यति । दृष्टिपथमारोक्ष्यति । यद्यपि शुकसारिकादिभिरन्यैः क्रूरैश्च मन्त्रोऽरिषु प्रयाति तदा कार्य्यहानिः स्यातन्त्रश्च नंक्ष्यति । अत एवाह कौटिल्यः "तस्मान्नास्य परं दद्युः कर्म्म किञ्चिच्चिकीर्षितम् । अवन्धारस्तु जानीयुः आरब्धं कृतमेव वा" इति ।

महर्षिमनुना आत्मछिद्रस्य पराज्ञानविषयेऽप्येवमेवोक्तम् । यथा :—

'नास्य छिद्रं परोविद्याद् विद्याच्छिद्रं परस्य चेति' प्रागुक्तम् ।

'आकाशे प्रतिशब्दवति चाश्रये मन्त्रं न कुर्य्यादिति' सोमदेवाः । 'प्रमादः संमदे मत्ते स्त्रियामुन्मदयोषिति' ।

द्विष् अप्रीतौ । द्वेष्टि, 'द्विषोऽमित्रे' इति शतृच् ।

वश कान्तौ, वशनम् । 'वशिरण्योरिति' वार्त्तिकादप् ।

यद्वा प्रमादाल्लोकः शत्रूणामायत्ततां प्राप्स्यतीत्यर्थः स्यात् ॥२५॥

सर्वच्छिद्रेषु मन्त्रो यथा नैव निर्गच्छेत्तथोपायं निर्द्दिशति

## मन्त्रसम्पदा हि राज्यं विवर्द्धते ॥ २७ ॥

सर्वेति। सकलशत्रुमार्गेभ्यः मन्त्रः संरक्षणीयः। अन्यथा तच्छत्रुभिर्ज्ञात्वाऽनिष्टं साधयिष्यते। यथाहि तड़ागोदकम् अतिसन्नद्धे तटेऽन्तश्छिद्रेषु बहुषु बहिर्निर्याति तद्वद् मन्त्रो रिपुपिशुनार्थंग्टभुच्छिद्रान्वेषिषु शुकादिषु द्वारीभूतेषु च बहिःप्रकाशते। ततः सर्व्वथा रक्षितव्यः सर्व्वमन्त्रो द्वारिणा जागरूकेणेव कोषागारः। तत्र कौटिल्योऽप्याह "प्रच्छन्नोऽवमतो वा मन्त्रं भिनत्ति। तस्माद्रक्षेन्मन्त्रम्" इति। शत्रुः प्रच्छन्नः, गुप्तः सन्। अवमतो-निर्भत्सितः कार्य्याद्बहिस्कृतः दण्डितो वा मन्त्रं भिनत्ति बहिः प्रकाशयति। सर्व्वथा मन्त्रं पालयेदिति। यथा वा योगी सर्वाणीन्द्रियद्वाराणि संयम्य निरुपद्रव आस्ते। तथा मन्त्रयिता-भूपोऽपि स्यादिति। २६ ॥

राज्यवृद्धिहेतुं निर्व्वक्ति मन्त्रसम्पदेति।

मन्त्रसम्पदा मन्त्रनैपुण्यसमृद्ध्या मन्त्रप्रणिधानकौशलेन च राज्यं राजकर्म्म, राष्ट्रं वा विवर्द्धते—सम्यक् समृद्धिमत् स्यात्। तथाचार्थशास्त्रे—'तस्मान्मन्त्रोद्देशमनायुक्तो नोपगच्छेत्'। अन्यच्च—

"नास्य गुह्यं परे विद्युः छिद्रं विद्यात् परस्य च।
गूहेत् कूर्म्म इवाङ्गानि यत् स्याद्विवृतमात्मनः॥" इति पूर्वमुक्तम्।

अस्य मन्त्रस्य गुह्यं रहस्यं परे लोका यथा न विद्युर्जानीयुः। तथा कुर्य्यात्। परस्य शत्रुादेः छिद्रं कार्य्यरहस्यं विद्यात् दूतादिभिः जानीयात्तेनानायासेन स्वप्रयोजनसिद्धिः स्यात्।

**श्रेष्ठतमां मन्त्रगुप्तिमाहुः ॥ २८ ॥**

---

कूर्म्मः कमठ इव, अङ्गानि मन्त्रितकार्य्याणि, गूहेत् संवृणुयात् । आत्मनः स्वस्य यद् विवृतं वृत्तं सम्प्रकाशितं स्यात् तच्च कूर्म्माङ्गानीव सर्व्वतः संगोपायेत् । अतो बृहस्पतिसूत्रानुसारेण 'बालं दुष्टमसाहसिकमज्ञातशास्त्रं मन्त्रे न प्रवेशयेदिति । एतान् बालादीनयोग्यत्वान्मन्त्रकाले न गृह्णीयादिति । विदुरनीतौ च "चत्वारि राज्ञा तु महाबलेन, वर्ज्यान्याहुः पण्डितस्तानि विद्यात् । अल्पप्रज्ञैः सह मन्त्रं न कुर्य्यान्न दीर्घसूत्रै रभसैश्चारणैश्च" इति ।

रभसैः सदा हास्यतरलैर्विचारशून्यैः । चारणैः रणभीरुभिरित्यर्थः । सम्पदेति । पद गतौ, संपदनं सम्पदिति । 'सम्पदादित्वात्' इति वार्त्तिकात् क्विप् ॥ २७ ॥

सकलगुप्तिभ्यो मन्त्रगुप्तेर्मुख्यत्वमभिदधाति श्रेष्ठेति ।

मन्त्राणां गुप्तिः । रहस्यप्रणिधानं गोपनीयत्वमिति बृहस्पतिप्रभृतयः । अन्यकार्य्येत इमामेव प्रशस्ततमां नीतिमाहुरमन्यत । अनया राज्यस्य सम्यग्रक्षणं स्यादिति । आहुरिति, विशालाक्षबाहुदन्तीपुत्र-पिशुनप्रभृतय इति शेषः । "मन्त्रमूलं यतो राज्यं अतो मन्त्रं समाश्रयेत्" इति भोजभूपश्च । तथात्र गुरुणा सूत्रितं 'मूढ़ा दुराचारस्तीक्ष्णा आत्मबुद्धयः क्षिप्रक्रुद्धा बाला न मन्त्रयोग्याः' । अत्रैते मन्त्रयोग्या न भवन्तीत्यर्थः । मूढ़ा बुद्धेर्मान्द्यात्, दुराचाराः प्रकाशनसम्भवात्, आत्मबुद्धयः स्वार्थसिद्धिपरत्वात्,

## कार्य्याकार्य्यप्रदीपो मन्त्रः ॥ २९ ॥

---

ईश्वरपरत्वाद्वा, चिप्रकृद्वाः—क्रोधाधिक्यात् प्रमादादिसम्भवः। बाला बुद्धिराहित्यादिति। एषु सर्वेषु मन्त्रगुप्तिसम्भावना विरलेति भावः। उक्तञ्च विदुरनीतौ "एकं हन्यान्नवा हन्यादिषुर्मुक्तो धनुष्मता। बुद्धिर्बुद्धिमतोत्सृष्टा हन्याद्राज्यं सराष्ट्रकम्"। तत्रैव "चिकीर्षितं विप्रकृतञ्च यस्य, नान्ये जनाः कर्म्म जानन्ति किञ्चित्। मन्त्रे गुप्ते सम्यगनुष्ठिते च, नाल्पोऽप्यस्य च्यवते कश्चिदर्थः।" चिकीर्षितं कर्त्तुमिष्टम्। विप्रकृतं सम्यगनुष्ठितं कर्म्म, विरुद्धं वा कृतमिति ॥ २८ ॥

मन्त्रप्राशस्त्यं प्रदर्शयति कार्य्येति। किमिदं कार्य्यमिष्टसाधनं किमिदं वाऽनिष्टसाधनमिति संशयान्धकारे मन्त्रोऽन्धकारनाशी प्रदीप इव भवति। यथा दीपस्तिमिरहारी तथा मन्त्रोऽपि प्रज्ञामान्द्यान्धकारे धीवैशारद्यालोककृदिति। तदुक्तं पूर्व्वसूरिभिः "सम्मन्त्र्य सूरिभिः सार्द्धं कर्म्म कुर्य्याद् विचक्षणः" इति। असमन्त्रितं कार्य्यं यथा जले आम-घटः। सम्मन्त्रितं कार्य्यं पक्वघट इव वारिणि न तथा भिद्यत इति भावः। अथवा प्रदीपोऽत्रान्वीक्षिकी। अनया सकलतत्त्वोद्भासकत्वात्। तथाच वात्स्यायनीये "प्रदीपः सर्व्वविद्यानाम् उपायः सर्व्वकर्म्मणा" मिति। प्रदीप इव प्रदीपो मन्त्रः। "दीपस्तु स्नेहाशः कज्ज्वलध्वजः। दशेन्धनो गृहमणिरिति" त्रिकाण्डशेषः। प्रदीपयति प्रदीप्यतेऽनेन वा, दीपी दीप्तौ। 'इगुपधत्वात्' कः ॥ २९ ॥

**मन्त्रचक्षुषा परच्छिद्राण्यवलोकयन्ति ॥ ३० ॥**
**मन्त्रकाले न मत्सरः कर्त्तव्यः ॥ ३१ ॥**

---

मन्त्रकरणस्य फलं प्रदर्शयति मन्त्रेति । मन्त्रश्चक्षुरिव कार्य्यं सम्पादयति । यथा रूपग्रहणलिङ्गं चक्षुः तथा विषयतत्त्वविचारे तद्ग्रहणे च मन्त्रः । लोका मन्त्रचक्षुषा परेषां शत्रूणां छिद्राणि राष्ट्रविषयदोषान् वा । तानि स्वार्थसाधनेऽवसरप्रदानि, मन्त्रैरेवावलोकयन्ति पश्यन्तीत्यर्थः । केचित्तु चारैर्दूतादिभिर्वावलोकयन्तीत्याहुः । तथाहि 'राजानश्चारचक्षुषः' इति । हिताहितरहस्यालापो गुह्यभाषणं वा मन्त्र इति । उत्तममध्यमाधमभेदेन प्रागुक्तानां त्रिविधानां मन्त्राणां मध्ये स उत्तमः । स प्रशस्तोमन्त्रः । तदेव चक्षुस्तेनेति पूर्वोक्त बार्हस्पत्यसूत्रार्थः । मनुनाप्युक्तम् 'नास्यच्छिद्रं परोविद्याद्विद्याच्छिद्रं परस्य तु' इति। 'छिद्रं विवररन्ध्रवत् गर्त्ते दोषे' इति हैमः । छिद्रयति । छिद्रभेदने । छिदिर् द्वैधी करणे वा । 'स्फायितञ्चि' इत्याद्यौणादिकाद्रक् ॥ ३० ॥

मन्त्रकरणसमये मात्सर्य्यप्रकाशे तद्धानं स्यात्तन्निषेधति मन्त्र इति । मन्त्रकाले मन्त्रणासमये । मत्सरोऽन्योत्कर्षासहिष्णुता । स च न कर्त्तव्यः न अनुष्ठातव्यः । तेन धैर्य्यहानात् कार्य्यव्याघातः । तद्वान् मत्सरी । मात्सर्य्यस्वभावो मन्त्रेऽयोग्यः । 'मत्सरो मक्षिकायां स्यात् मात्सर्य्यक्रोधयोः पुमान् । असह्य·

## त्रयाणामेकवाक्ये सम्प्रत्ययः ॥ ३२ ॥

परसम्पत्तौ कृपणे चाभिधेयवत्' इति मेदिनी। मन्त्रविप्लवे दोषोक्तिर्यथा विदुरनीतौ च,—

"एकं विषरसो हन्ति शस्त्रेणैकश्च बध्यते ।
सराष्ट्रं सप्रजं हन्ति राजानं मन्त्रविप्लवः ॥"

मन्त्रविप्लवो मन्त्रप्रकाश इत्यर्थः ।

बृहस्पतिरप्याह "गुणदोषागमं निश्चित्य मौर्ख्यबाहुल्याद् य आरभते सोऽधमः"। गुणदोषयोरागतिं निश्चित्यावधार्य्य मौर्ख्यबाहुल्यात्। बुद्धिमान्द्यप्राचुर्य्यात्। यो मन्त्रः समारभते अनुष्ठीयते, सोऽधमः मन्त्र इत्यर्थः। सोमदेवनये पञ्चविधो मन्त्रः सर्व्वकर्म्मणामारम्भस्योपायः शुभदश्चेति। मदो हर्षे, माद्यति परदुःखे। 'कृभूमदिभ्यः कित्' इत्यौणादिकात्सर प्रत्ययः ॥३१॥

मन्त्रिणां त्रयाणाम् ऐकमत्ये सति अविसंवादं वक्ति त्रयाणामिति ।

त्रयाणां मन्त्रनिरतानां धीसचिवानामेकवाक्ये ऐकमत्ये। सम्प्रत्ययः कार्य्यनिष्पत्तिः। अविसंवादात् कार्य्यसौकर्य्यं वा। अथवा सति तादृशे सम्प्रत्ययः मन्त्रः सम्यक्प्रत्ययः। विश्वस्तः कार्य्यफलनिष्पादक इत्यर्थः। तेन कार्य्यसिद्धेर्लक्षणम् अनुमोयते। अत्र मन्त्रणे पूर्व्वसूरयो बहवो विप्रतिपन्ना भवन्ति। तथाच मन्त्रिणां परिषदः द्वादशामात्यान् कुर्व्वीतेति मानवाः। 'षोड़शेति' बार्हस्पत्याः। 'विंशतिम्' इत्यौशनसाः। 'यथा सामर्थ्य'-

अकामबुद्धयो मन्त्रतत्त्वार्थदर्शिनो मन्त्रिणः ॥३३॥

---

मिति कौटिल्याः। 'परिषत् स्याद्दशावराः' इति पाराशराः। अत्र कौटिल्यमतमत्युपादेयम्। यथासमुचितं देशकालपात्र-कार्य्यावस्थाः सम्यक परिज्ञाय यथाशक्ति धीसचिवान् कुर्य्यात्तद्-युक्ता परिषच्च तथैव भवति। अन्यत् पुष्कलमर्थशास्त्रेऽस्ति ॥३२॥

संक्षेपेण मन्त्रिलक्षणं निर्वक्ति अकाम इति। अकामबुद्धयः स्वार्थशून्यबुद्धयः। अलोलुपाः निर्मत्सरा विवेकदक्षा इति। मन्त्रतत्त्वार्थदर्शिनः। गुप्तिवादो रहसि कर्त्तव्यावधारणमिति मन्त्रलक्षणं प्रागुक्तम्। मन्त्रस्य तत्त्वं सारो रहस्यं याथार्थ्यमिति। तद्द्रष्टुं शीलं येषामिति। ते मन्त्रतत्त्वार्थदर्शिनः। "मन्त्रिणस्तु नृपः कुर्य्याद् विप्रान् विद्याविशारदान्। विशुद्धांश्च कुलीनांश्च धर्म्मार्थकुशलानृजून्। मन्त्रयेत् तैः समं काले नात्यर्थं बहुभिश्चरेत्।

एकैकेनैव कर्त्तव्यं मन्त्रस्य तु विनिश्चयम्।
व्यस्तैश्चैव समस्तैश्च वान्यस्य व्यपदेशतः॥
स्वयं वृत्तं मन्त्रगृहं स्थूल आरुह्य मन्त्रयेत्।
अरण्ये निःशलाके वा न यामिन्यां कदाचन॥
शिशून् शाखामृगान् पण्डान् शुकान् वै सारिकास्तथा।
वर्ज्जयेन्मन्त्रगेहेषु मनुष्यानुद्धतांस्तथा॥
दूषणं मन्त्रभेदेषु नृपाणां यत्र जायते।
न तत् सम्यक समादातुं दक्षैर्नृपशतैरपि॥"

षट्कर्णो मन्त्रभिद्यते ॥ ३४ ॥

---

इति कालिकापुराणे । अन्यद् युक्तिकल्पतरौ चास्ति ।

"तन्मन्त्राद्यषड़क्षीणं यत् तृतीयाद्यगोचरम् ।

रहस्यालोचनं मन्त्रो रहस्कन्नमुपह्वरम् ॥" इति हैमः ।

अत्र मन्त्रणायां वर्णनीयानि यथा,—

'मन्त्रे पञ्चाङ्गताशक्ति-षाड्गुण्योपाय-सिद्धयः ।

उदयाश्चिन्तनीयाश्च स्थैर्योन्नत्यादिसूक्तयः ॥' इति कवि-कल्पलतायाम् । पञ्चाङ्गताशक्तिः सोमदेवैरुक्ता । षाड्गुण्यं सन्ध्यादि ॥ ३३ ॥

मन्त्रप्रकाशहेतुं व्यनक्ति षट्कर्ण इति । मन्त्रः पञ्चविधः । तदाह वाक्यामृते 'कर्म्मणामारम्भोपायः, पुरुषद्रव्यसम्पत्, देश-कालविभागः, विनिपातप्रतीकारः, कार्य्यसिद्धिश्च' । अर्थशास्त्रेतु 'द्वाभ्यां मन्त्रयमानो द्वाभ्यां संहताभ्याम् अवगृह्यते' इति । अत एव त्रिभिः पुरुषैः सह मन्त्रयमानः षट्कर्णगोचरो भवति । चतुःकर्णः श्रेयान् भवति । 'षट्कर्णाद् भिद्यते मन्त्र' इति पाठे तु सुगमार्थं सूत्रम् । गारुड़े च—

"षट्कर्णो भिद्यते मन्त्रः चतुःकर्णश्च धार्य्यते ।

द्विकर्णस्य तु मन्त्रस्य ब्रह्माप्यन्तं न बुध्यते ॥" इति ।

एतन्मते व्यक्तित्रय-कृतमन्त्रणायां दूषणमापतति । बृहस्पति-रप्याह—

"निराश्रयप्रदेशे तु मन्त्रः कार्य्यो न भूभुजा ।

प्रतिशब्दो न यत्र स्यान्मन्त्रसिद्धिं प्रवाञ्छता ॥"

**आपत्सु स्नेहसंयुक्तं मित्रम् ॥ ३५ ॥**

**मित्रसंग्रहणे बलं सम्पद्यते ॥ ३६ ॥**

---

कदाचित् कश्चिद्गुप्तस्तत्र स्थित्वा मन्त्रमाकर्णयतीत्याशयेनोक्तं गुरुणा निराश्रयेति ॥ ३४ ॥

आपत्काले समुपस्थिते बन्धुजनस्य योग्यव्यवहारं प्रदर्शयति आपत्स्विति। विवाद-रोग-व्यसनादिषु। मित्रं सुहृदम् एकक्रियम्। स्नेहसंयुक्तं वात्सल्यान्वितं व्यवहरेत्। यतो मित्रसाहाय्येनापद्ग्रो विमुक्तो भवति। तदुक्तं विष्णुशर्म्मभिः 'यस्य-मित्रेण सम्भाषो यस्य मित्रेण संस्थितिः'। 'ततो नास्तीह पुण्यवान्' इति।

अन्यत्रोक्तं—'मित्रं स्वच्छतया रिपून् नयबलै'रिति च। वशीकुर्य्यादित्यर्थः। अत आपत्सु प्रीतियुक्तं मित्रं यथा भवेत्तथा कार्य्यम्। 'मित्रं सखा सुहृत्' इत्यमरः। ञिमिदा स्नेहने। मेद्यति। 'दमिचिमिदिशसिभ्यः' इति औणादिकः क्तः स्यात्। एवं षाड्गुण्येऽपि मित्रवृत्तमस्ति। स्नेहेति। ष्णिह प्रीतौ, स्नेहनम्। घञा सिद्धम्। पद गतौ, आपदनमनया। ततः सम्पदादित्वात् क्विप् ॥ ३५ ॥

मित्रसंग्रहस्योपकारं प्रदर्शयन्नाह मित्रेति।

मित्राणां सुहृदां संग्रहणे संलाभे मैत्रीकरणे वा बलं सम्पद्यते। संवर्द्धते। तच्च बलं 'स्वाम्यमात्यश्च राष्ट्रञ्च दुर्गं कोषो-बलं सुहृत्' इति कामन्दकोक्तं सप्तविधम्। अमरसिंहनये तु

बलवान् अलब्धलाभे प्रयतेत ॥ ३७ ॥

अलब्धलाभो नालसस्य ॥ ३८ ॥

---

पौरश्रेण्या सह बलमष्टविधं स्यादिति। अन्यत्र बलं शरीर-सामर्थ्यम्। नीतावत्र राज्ञां बलं पारिभाषिकम्। 'तच्च चतुरङ्गबलम्' इति सोमदेवसूरिः। चतुरङ्गन्तु हस्त्यश्वरथपादातमिति सेनाङ्गचतुष्टयम्। एतन्मते बलत्वेनाभिप्रेतम्। 'बलादिषु च समं शत्रुं युद्धेन हन्यात्' इति गुरुसूत्रम्। अत्र बलादिषु हस्त्यादिषु इत्यर्थः। बलं तुल्यबलं शत्रुं हन्यादिति। 'बलं गन्धरसे रूपे स्थामनि स्थौल्य-सैन्ययो'रिति मेदिनी। बल प्राणने, बलति अनेनेति। 'खनो घचे'ति सूत्रेण घः। 'मित्रं सुहृदि न द्वयोः, सूर्य्ये पुंसि' इति मेदिनी। ञिमिदा स्नेहने, मेद्यति। 'अमिचिमि दिशि सिभ्यः' क्तः स्यादिति ॥ ३६ ॥

पूर्व्वं बलोपायमुक्त्वा सम्प्रति बलवतोऽलब्धलाभार्थं यत्नं निरूपयति बलवानिति। बलसम्पन्नो नृपोऽलब्धस्याप्राप्तस्य राज्यादेर्लाभे समर्ज्जने प्रयतेत सम्यगुद्यमोत्साहाध्यवसायैरन्वितो भवेत्! तादृशे यत्नेऽनुष्ठिते बलानां सम्यग् विकाशो भवति। तदुक्तं 'बलेन किं यच्च रिपूनबाधते' इति। प्रयतते इति पाठान्तरमपि साधु। तदात्वेऽर्थः सुगमः। प्राङ्निरुक्तो बलशब्दः ॥ ३७ ॥

अलब्धलाभेऽनधिकारित्वं प्रदर्शयति अलब्धेति। अलसस्य

**अलसस्य लब्धमपि रक्षितुं न शक्यते ॥ ३९ ॥**

**न चालस्ययुक्तस्य रक्षितं विवर्द्धते ॥ ४० ॥**

---

मन्दस्य शक्तिहीनस्य अलब्धविषयस्य लाभो न भवेत्। तद् योग्यसामर्थ्याभावादित्यर्थः। तदुक्तं न्यायविद्भिः। 'षड् दोषाः पुरुषेणेह हातव्या भूतिमिच्छता। निद्रा तन्द्रा भयं क्रोध आलस्यं दीर्घसूत्रता' इति। अन्यच्चाभाणकम् 'आलस्यं हि मनुष्याणां शरीरस्थो महारिपुः' इति। सकलार्थसाधनेऽनर्थ-मूलम् आलस्यमिति अन्तरार्थः। 'नास्त्यलसस्ये'ति वा पाठः। तेनार्थैक्यम्। 'आलस्यः शीतकोऽलसोऽनुष्ण' इत्यमरः। लस श्लेषणे, न लसति इत्यचा सिद्धम्। आलस्येति स्वार्थे ष्यञ्॥३८॥

अलसो दैवात् किञ्चिल्लाभे तद्रक्षितुं न समर्थ इति वक्ति अलसस्येति। अलसेन मन्दपुरुषेण दैवान्महता प्रयासेन वा यल्लब्धं प्राप्तं वस्तु तदपि आलस्यान्निरुत्साहाद् रक्षितुं पालयितुं न शक्यते नापि तत् पार्य्यते। तत् प्रोचुर्नीतिविदः—

"अलसो मन्दबुद्धिश्च सुखी च व्याधि-पीड़ितः।
निद्रालुः कामुकश्चैव षडेते कर्म्मगर्हिताः" इति॥

आलस्य विरोधिन उत्साहोद्यमाध्यवसायाः पुरुषस्य कर्म्मणि प्रवर्त्तयितारः। तस्मात्तान् सेवन्ते नियतं भूतिमिच्छन्त इति भावः॥ ३९॥

अलसस्य दैवात् सञ्चितमपि न वर्द्धते आलस्यात्तद्दर्शयति न चेति। अलसस्य रक्षितमपि द्रविणादि बुद्धेर्मान्द्यात्तन्नैव वर्द्धते।

**न भृत्यान् पोषयति ॥ ४१ ॥**

**न तीर्थं प्रतिपादयति ॥ ४२ ॥**

---

न तद्वृद्धिं यातीति। लोकस्यालस्यमन्तःशत्रुरतो देहमलवत् सर्व्वदा तत्परिहरेत्। 'स चालसस्य रक्षितं विवर्द्धते' इति सूत्र-पाठे तु अयमर्थः। यद्यलसो लब्धं वस्तु रक्षितुं शक्नोति तदा तद् वृद्धिं गमिष्यतीति। तदुक्तं भारते विदूरनीतौ—

'षड् दोषाः पुरुषेणेह हातव्या भूतिमिच्छता।

निद्रा तन्द्रा भयं क्रोध आलस्यं दीर्घसूत्र'ति प्रागुक्तम्।

तत्रैव 'षडेव तु गुणाः पुंसां न हातव्याः कदाचन।

सत्यं दानमनालस्यमनसूया क्षमा धृति'रिति।

आलस्यप्रसङ्गादत्रोक्तम् ॥ ४० ॥

मन्दस्य सेवकपोषण-शक्त्यभावं वक्ति नेति।

पूर्व्वतोऽलसस्येत्यनुकृष्यते। स भृत्याननुवृत्तिपरान् सेवकान् न पोषयति न पालयति। 'न प्रेषयतीति' पाठे तु न प्रेरयति इत्यर्थः। पोषणप्रेरणयोरभावे सामर्थ्यमान्द्यमेव हेतुः। तत् पोषणाभावे तत्कार्य्याभावाद्राष्ट्र-कार्य्यहानमिति भावः। 'भृत्यो-दासे भृतौ भृत्या' इति विश्वः। भृञ् भरणे, भ्रियते। 'भृञो-ऽसंज्ञायामिति' क्यप्। सोमदेवस्त्वाह 'अलसः सर्व्वकर्म्मणा-मनधिकारी'ति। तत्र विषये राजपुत्रैरुक्तम् 'आलस्योपहतान् योऽत्र विदधात्यधिकारिणः। सूक्ष्मेष्वपि च कृत्येषु न सिध्येत्तानि तस्य हि' इति नीतिवाक्यामृतटीकायाम् ॥ ४१ ॥

## अलब्धलाभादिचतुष्टयं राज्यतन्त्रम् ॥४३॥

---

तीर्थप्रतिपादनासामर्थ्यं प्रकाशयति नेति ।

एतच्छास्त्रसंकेतिततीर्थं सप्तदशसूत्रव्याख्याने निगदितं प्रसङ्गादन्यदुच्यते । तीर्थं काश्यादिस्थानम् । न प्रतिपादयति गमनादिभिर्न तत् सम्पादयति । स्वालस्यतः स्वपरगमनतत्कर्म्मा-नुष्ठानासम्भव इति भावः । अथवा तीर्थं शास्त्र-यज्ञ-विद्वत्-क्षेत्रादीनि सर्व्वाणि तानि न सम्पादयति न रक्षतीति । नीति-वाक्यामृते तु—तीर्थं धर्म्मसमवायिपात्रम्, कार्य्यसमवायिपात्र-ञ्चेति वर्णितम् । "तीर्थं शास्त्राध्वरक्षेत्रोपाय नारीरजःसु च । अवतारर्षिजुष्टाम्बुपात्रोपाध्याय मन्त्रिषु" इति मेदिनी । मन्त्रि-ष्विति अष्टादशसंख्यका मन्त्र्यादयः । अमरोऽप्याह "निपाना-गमयोस्तीर्थम् ऋषिजुष्टजले गुरौ" इति । तॄ प्लवनतरणयोः, तीर्य्यते येन तत्तीर्थम् । तरतेः 'पातॄतुदि' इत्याद्यौणादिकात्थक् । प्रतिपूर्वात् पदेर्ण्यन्तात् लटि रूपम् ॥ ४२ ॥

सम्प्रति राज्यतन्त्रं निर्द्दिशन्नाह अलब्धेति ।

अत्रालब्धस्याप्राप्तस्य धनादेर्लाभः प्राप्तिः । तच्चतुष्टयम् । चत्वारो भवन्ति दशाभेदेन । तदुक्तमर्थसमुद्देशे सोमदेवसूरिभिः । 'अलब्धलाभो, लब्धपरिरक्षणम्, रक्षितपरिवर्द्धनं चार्थानुबन्धः' इति । सामादिभिरुपायैः पुरुषेणार्थं उपार्ज्जनीयः । लब्धोऽर्थः पुनर्यत्नेन सम्यग् रक्षणीयः । रक्षितोऽर्थो वृद्धिं नेयः । वर्द्धितं पात्रेषु निक्षिपेत् । तच्चतुष्टयं राज्यस्य राजकर्म्मणो राष्ट्रस्य वा तन्त्र

## राज्यतन्त्रायत्तं नीतिशास्त्रम् ॥ ४४ ॥

मायत्तम् । अथवा राजतन्त्रं राज्ञः प्रधानं तच्चतुष्टयमित्यर्थः । आयादधिकव्ययम् असद्व्ययञ्च न कुर्य्यादिति । तदुक्तं शुक्राचार्य्यैः-

"आगमे यस्य चत्वारो निर्गमे सार्द्धपञ्चमः ।
तस्यार्थः प्रक्षयं याति कुप्रभूतोऽपि चेत् स्थितः" इति ।
'तन्त्रं प्रधाने सिद्धान्ते शास्त्रभेदे परिच्छदे ।
श्रुतिशाखान्तरे हेतावुभयार्थप्रयोजके' इति मेदिनी ।

चतुष्टयमिति । चत्वार्-शब्दात् संख्याऽवयवार्थे तयट् । तन्त्रमिति । तनु विस्तारे, तननं तन्यतेऽनेन वा । ष्ट्रन्प्रत्ययसिद्धम् । अथवा तन्त्रयतेश्चौरादिकाद् घञा अचा वा सिद्धम् ॥ ४३ ॥

नीतिशास्त्रस्य राज्यतन्त्राधीनत्वं प्रकटयन्नाह राज्येति ।

राजकर्म्मणां तदधीनेषु राज्यतन्त्रेषु । आयत्तमनुगतं नीतिशास्त्रम् । तच्च धर्म्मार्थकामाख्य-त्रिवर्गशासनशास्त्रं नारदेन्द्रगुरुशुक्रभारद्वाजविशालाक्ष-भीष्म-पराशर-मनुभिः प्रणायि । ततः पश्चाद् विष्णुगुप्तेन सारमुद्धृत्य संक्षिप्य चार्थशास्त्रं गम्भीराशयमेकं व्यरचि । तदुक्तं पूर्व्वसूरिभिः—

"प्रजानामायुषो ह्रासं विज्ञाय च महात्मना ।
संक्षिप्तं विष्णुगुप्तेन नृपाणामर्थसिद्धये ॥" अत्र विष्णुगुप्तः कौटिल्यः । नीयते बोध्यतेऽनया दण्ड इति दण्डनीतिः । एवं रणनीतिरर्थनीतिरिति । नयतेः क्तिन्प्रत्ययः । अथवा नीतिप्रत्यासक्तं

राज्यतन्त्रेष्वायत्तौ मन्त्रावापौ ॥ ४५ ॥

मन्त्रं स्वविषये कृत्येष्वायत्तम् ॥ ४६ ॥

---

शास्त्रं नीतिशास्त्रम्। शासु अनुशिष्टौ, शिष्यतेऽनेनेति 'सर्व्व-धातुभ्यः ष्ट्रन्।' प्रागुक्तगुर्व्वादिविरचित-शास्त्रानुसारेण राज्य शासनस्य समीचीनत्वात् कौटिल्यैस्तु राजनीतिशास्त्रे स्पष्टमुक्तम् "अर्थशास्त्रं धनुर्वेदं यत्नाद्रक्षेन्महीपति"रिति ॥ ४४ ॥

सम्प्रति मन्त्रावापयो राज्यतन्त्रायत्तत्वं प्रदर्शयति राज्यमिति। राज्यं राजकर्म्मसमूहो राष्ट्रं वा। तन्त्रवृत्तं प्राङ्निगदितम्। तदायत्तौ समधीनौ मन्त्रावापौ द्वौ स्तः। अत्र तन्त्रं नृपाश्रितो देशो वेति कैश्चिदुक्तम्। मन्त्रलक्षणमपि पूर्व्वमुट्टङ्कितम्। यद्यपि आवापो भाण्डपचनं तरुमूलकृतजलाधारो वा। तथापि प्रकरणादत्रारिचिन्तायामपि तद्वृत्तिः। यथा 'परं प्रत्यावापः फलति कृतसेकस्तरुरिव' इति। 'तन्त्रं कुटुम्बकृत्ये स्यात् सिद्धान्ते चौषधोत्तमे। इति कर्त्तव्यतायाञ्चे'ति मेदिनी। यद्वा मन्त्रस्यावापोऽनुलोम-रीत्या निगूढ़भावेन वर्द्धनम्। तथात्वे एक-त्वनिर्द्देशो भिन्नपाठश्चेति केचित्। तन्त्रि धारणे, तनु विस्तारेच, अनयोरौणादिकाद् इन् घञौ स्तः ॥ ४५ ॥

मन्त्रावापयो राज्यतन्त्राधीनत्वमुक्त्वा सम्प्रति मन्त्रस्य स्व-विषयकार्य्यायत्तत्वं वक्ति मन्त्रमिति। स्वस्य राज्ञोविषये। कर्म्मसु अमात्योत्पत्त्यादिषु अर्थशास्त्रोक्तेषु समनुगतं मन्त्रं ज्ञेयम्। यतो मन्त्रपूर्व्वः सर्व्वोऽप्यारम्भो नृपाणां भवति। तदुक्तं सोमदेव-

**आवापो मण्डले सन्निविष्टः ॥ ४७ ॥**

---

सूरिभिः 'मन्त्रपूर्व्वः सर्व्वोऽप्यारम्भः क्षितिपतीनाम्' इति। तदथ शुक्रेणाप्युक्तम्—

"अमन्त्रसचिवैः सार्द्धं यः कार्य्यं कुरुते नृपः।
तस्य तन्निष्फलं भावि षण्डस्य सुरतं यथा॥"

यद्वा स्व-विषयकृत्येषु षाड्गुण्यलक्षण-कर्म्मस्विति नीतिवाक्यामृते। अन्यत्र च "आकार्य्यसिद्धे रक्षितव्यो मन्त्रः।" यावन्मन्त्रकृतः कार्य्यसिद्धिर्न भवति तावन्मन्त्रो रक्षितव्य इत्यर्थः। मन्त्रं गुह्यवादः। 'गुह्यवादेऽपि च पुमान्' इति मेदिनी। तन्त्रमिति। पाठे तु स्वदेशकार्य्यनिकरेषु यदायत्तं तदेव तन्त्रं ज्ञेयमिति तदर्थः। गुह्यवादो रहस्यालोचनम्। आयत्त इति। यती प्रयत्ने, आयतते। अकर्म्मकलक्षणः क्तः स्यात्। कृत्यमिति। 'कृत्यो विद्विषि कार्य्ये च कृत्या क्रिया-दिवौकसोः' इति रभसः। कृत्यं कार्य्यं करणमिति। 'कृञः शचः' इत्यनेन चकारात् क्यप्। अथवा कृती च्छेदने, कृत्यते। 'ऋदुपधात्' इति क्यप्॥ ४६ ॥

आवापस्य मण्डलान्तर्नीतत्वं कथयति आवापेति। आवापोऽरिचिन्ता तत्कार्य्यान्वेषणं वा। स च मण्डले द्वादशराजके सन्निविष्टः परिन्यस्तः। अरिकार्य्यचिन्तायां यथा 'परं प्रत्यावापः फलति कृतसेकस्तरुरिव' इत्यनेकार्थकैरवाकरकौमुदी। यथा तरुर्महीरुहः परं प्रत्यावापेन सलिलसेकेन सम्यक् फलवान् भवति, तथा अरातिरपि बलं प्राप्य विवर्द्धते इति। मण्डले द्वादशराजयुक्ते सम्यक् परिन्यस्तः। नानाविधं मण्डलं काम-

सन्धिविग्रहयोर्योनिर्मण्डलम् ॥ ४८ ॥

---

न्दकीयेऽष्टमसर्गे प्रसिद्धमस्ति। बार्हस्पत्यसूत्रेऽपि समप्रकृतिकं मण्डलं प्रोक्तम्। अर्थशास्त्रे षष्ठाधिकरणे मण्डलयोनिविवरणेऽप्यजस्त्रेयम्। मण्डलं द्वादशराजकम्। यथाहि 'स्यान्मण्डलं द्वादशराजके च, देशे च बिम्बे च कदम्बके च' इति विश्वः। डुवप् वीजतन्तुसन्ताने श्रावपन्ति। 'धातूनामनेकार्थत्वाद् गणकृतमनित्यमिति' न्यायादन्यार्थत्वम्। 'हलश्चेति' घञ्। मडि भूषायाम्, मण्डयते मण्डयति वा। 'वृषादित्वात्' कलच् ॥ ४७ ॥

सन्धिविग्रहयोः कारणत्वं मण्डलस्य प्रदर्शयति सन्धीति। अत्र धनादिदानेन बन्धुभिः प्रीत्युत्पादना मित्रीकरणं सन्धिः। "पणबन्धः सन्धिः" इति सोमदेवाः। तदेवाह युक्तिकल्पतरौ भोजभूपः। यत्र शत्रुणा सह पणबन्ध. क्रियते केनचित्पदार्थेन गृहीतेन वा शत्रोस्तेन गृहीतेन यो भवति स पणः, तेन सन्धिर्भवति। "अपराधो विग्रहः" इति सोमदेवसूरिः। यदा यस्य विजिगीषोः कोऽप्यपराधं करोति तदा विग्रहो भवेदिति तदर्थः। अथवा परमण्डले दाह-लुण्ठन-च्छेदादि विग्रहः। सन्धिर्बहुविधो ग्रन्थान्तरे प्रपञ्चितोऽस्ति। विग्रहश्च प्रकाश-कूट-तूष्णीं भेदेन त्रिविधः। तदुक्तं शुक्राचार्य्यैः —

"दुर्बलो बलिनं यत्र पणदानेन तोषयेत्।
तावत् सन्धिर्भवेत्तस्य यावन्मात्रं प्रजल्पितः" ॥

गुरुभिरपि विग्रहहेतुरुच्यते।

"यदि स्यादधिकः शत्रोर्विजिगीषुर्निजैर्बलैः।

नीतिशास्त्रानुगो राजा ॥ ४८ ॥

---

क्षोभेन रक्षितैः कार्य्यः शत्रुणा सह विग्रहः" ॥

एतत् कौटिलीये कामन्दकीये च पुष्कलं वर्णितमस्ति। नीतिवाक्यामृते षाड्गुण्यसमुद्देशे राजमण्डलं तदधिकारस्य प्रोक्तम्। एतयोर्द्वयोर्मण्डलमेव योनिः स्यात्। सन्धिः सन्धानम्। संपूर्व्वात् 'उपसर्गे धोः किः'। विरुद्धं विविधं वा ग्रहणं विग्रहः। विपूर्व्वाद् ग्रहेः "ग्रह वृ दृ" इत्यादिना अप्। योनिरिति। यु मिश्रणे। यौति। 'वहि श्रि' इत्यादिना निः। 'योनिः करणे भगतोययोः'। "योनिः स्त्रीपुंसयोश्च स्यादाकरे स्मरमन्दिरे" इति हैममेदिन्यौ ॥ ४८ ॥

भूभुजो नीतिशास्त्रानुसारित्वं प्रदर्शयति नीतीति। नीतिर्न्यायः। आन्वीक्षिक्यादिः। दण्डनीतिर्वा। अर्थशास्त्रमिति केचित्। नीयते बोध्यते विषयोऽनयेति। णीञ् प्रापणे, नयतेः क्तिन् प्रत्ययान्निष्पन्नम्। दण्डनीतिरिति। दण्डो नीयते ज्ञायतेऽनयेति। दण्डं नयति, दण्ड्यान् प्रति प्रापयति वेति क्तिन्। नीति-प्रतिपादकं शास्त्रं नीतिशास्त्रमित्यपरे। तच्छास्त्रानुगामी राजा स्यात्। अन्यथा स्वेच्छया कार्य्यानुष्ठानेऽनिष्टापात-शङ्का प्रबलेति। नीति-नियमानुसारेण स्वात्मरक्षणं प्रजापालनञ्च विधेयम्। 'नीतिं वृहस्पति-प्रोक्तां भ्रातृभ्योऽग्राहयत् पुरे'ति महाभारते। तथा चार्थशास्त्रे "वार्त्ता दण्डनीतिश्चेति" बार्हस्पत्याः। कृषिर्गोरक्षणं वणिज्येति वार्त्ता। "दण्डनीतिरित्येका विद्या" इत्यौशनसाः। "चतस्र एव विद्याः"

अनन्तरप्रकृतिः शत्रुः ॥ ५० ॥

---

इति कौटिल्यः। चतस्र इति। अन्वीक्षिकी, त्रयी, वार्त्ता। दण्डनीतिश्च। युक्तिकल्पतरौ च—

"नीतिहीननरेन्द्राणां नश्यन्त्याशु सुसम्पदः।
अतो नीतिः प्रयत्नेन श्रवणीया नृपोत्तमैः" ॥

"बहवोऽविनया नष्टा राजान" इति मानवे। अविनया नृपा वेणराजप्रभृतयः। नीतिनैपुण्यात्तिस्रः शक्तयो वर्द्धन्ते। प्रभावोत्साहमन्त्रजाः शक्तयस्तिस्रः। प्रभावशक्तिः "कोषो दण्डो बलञ्चेति"। उत्साहशक्तिः "विक्रमबलम्"। मन्त्रशक्तिः "सन्ध्यादीनां सामादीनाञ्च यथावस्थापनम्। न तु ज्ञानबलं मन्त्रशक्तिः। 'पञ्चाङ्गमन्त्रो मन्त्रशक्तिः'। नीतिवेदिनां त्रिवर्गः। क्षयः स्थानं वृद्धिश्चेति। अष्टवर्गस्यापचयः क्षयः। उपचयो वृद्धिः। उपचयापचयाभावः स्थानमिति। अष्टवर्गो यथा—

"कृषिर्वणिक्पथो दुर्गः सेतुः कुञ्जरबन्धनम्।
खन्याकरबलादानं शून्यानाञ्च विवेचनम्" ॥

'त्रिवर्गो धर्म्मार्थकामा' वेति च ॥ ४९ ॥

शत्रोः पारिभाषिकं लक्षणं वक्ति अनन्तरेति। अनन्तरप्रकृतिर्नृपः शत्रुः। स्वदेशादव्यवहितदेशस्य राजा अनन्तरभूपः। शत्रुरिति। शत्रवोऽनेकविधाः। शत्रुलक्षणं सोमदेवीये। "य एव स्वस्याहितानुष्ठानेन प्रातिकूल्यमियर्त्ति स एवारिः" इति सामान्यशत्रुलक्षणम्। "समाभिजनः सहजशत्रुः"। "विरोधो

एकान्तरितं मित्रमिष्यते ॥ ५१ ॥

विराधयिता वा कृत्रिमः शत्रुः"। "अनाश्रयो दुर्बलाश्रयो वा शत्रुरुच्छेदनीयः"। 'विषयानन्तरो राजा शत्रुरित्यभिधीयते'। अन्यत् कामन्दकीये पुष्कलमस्ति। शत्रुरिति। शद्लृ शातने, शातयति। एतस्मात् "रु शातिभ्यां क्रुन्"। बहुलमन्यत्रापीति णिलुक्। केचित्तु अत्र प्रकृतिपदोपादानादन्तरङ्ग-करदाष्ट-प्रजा भूभुजां शत्रुरित्यर्थं जगदुरिति ॥ ५० ॥

सामयिकमित्रलक्षणं वक्ति एकेति। मित्रमेकान्तरितमिष्यते। 'शत्रुमित्राभ्यां परमुदासीनः' इति। तदुक्तं सोमदेवैः—"यः सम्पदीव विपद्यपि मेद्यति तन्मित्रम्"। सम्पदीव समृद्धकालवत्। विपद्यपि आपत्कालेऽपि मेद्यति स्नेहं करोति तन्मित्रमित्यर्थः। तदेव जैमिनिनाप्युक्तम्।—

"यः समृद्धो क्रिया स्नेहं यद्वत्तद्वत्तथापदि।
तन्मित्रं प्रोच्यते सद्भिर्वैपरीत्येन वैरिणः" ॥

तच्चिविधम्। नित्यमित्रम्। सहजमित्रम्। कृत्रिममित्रम्। अकारणं पाल्यः पालको वा यो भवति तन्नित्यमित्रम्। यस्य मित्रस्य पूर्व्वपुरुषपरम्परयायातः सम्बन्धो भवति तत् सहजं मित्रं स्यात्। यः पुरुषो जीवितहेतोर्वृत्तिं गृह्णाति, स्नेहं प्रदर्शयति तत्कृत्रिमं मित्रम्। "मित्रमतःपर"मित्यमरः। अतः पूर्व्वनिगदितशत्रोः परमित्यर्थः। अपरञ्च कामन्दकीयेऽप्यस्ति। स्वदेशाव्यवहित-देशाधिपतेः परं योऽधिपस्तन्मित्रमिति भावः। "मित्रं सुहृदि न द्वयो"रिति मेदिनी। ञिमिदा स्नेहने, मेद्यति।

**हेतुतः शत्रुमित्रे भविष्यतः ॥ ५२ ॥**

**हीयमानेन न सन्धिं कुर्व्वीत ॥ ५३ ।**

---

"अमि चिमिदिश सिभ्यः क्तः" इत्यौणादिकात् सिद्धम्। येस्तु ष्ट्रन्प्रत्ययसिद्धमित्युक्तं तन्न, गुणप्रसङ्गात् सूत्रस्य सद्भावाच्चेति ॥५१॥

सुहृद्हृदोः कारणत्वं वक्ति हेतुत इति। हेतुतः कुतश्चित् कारणात्। सदाचरणादुपकाराच्च मित्रम्। असदाचरणादपकाराच्च रिपुरिति। तदुक्तं विष्णुशर्म्मभिः "व्यवहारेण जायन्ते मित्राणि रिपवस्तथा"। अपरञ्च—

"आपत्काले च सम्प्राप्ते कार्य्ये च महति स्थिते।
कोपे प्रसादनं नेच्छेन्मित्रस्येति गुणाः स्मृताः" ॥

इति नारदर्षिणा मित्रगुणा उक्ताः। मित्रदोषाश्च रैभ्येनोक्ता यथा—

"दानं स्नेहो निजार्थत्वमुपेक्षा व्यसनेषु च।
वैरिसङ्गोऽप्रशंसा च मित्रदोषाः प्रकीर्त्तिताः" ॥

मैत्रीभेदकारणमुक्तं शुक्राचार्य्येण यथा,—

"स्त्रीसङ्गतिर्व्विवादोऽथ सदार्थित्वमदानता।
स्वसम्बन्धस्तथा निन्दा पैशुन्यं नित्य-वैरिता" ॥

हेतुत इति। हि—गतौ, हिनोति व्याप्नोति कार्य्यमिति "कमिमनि" इत्याद्यौणादिकात्तुन्। शत्रु मित्रे प्राङ् निरुक्ते अभूताम् ॥ ५२ ॥

हीयमानेन सार्द्धं सन्धिं निषेधयति हीयमानेनेति। हीयमानेन राज्ञा समं सन्धिं धनादिदानेन बन्धुभिः प्रीत्युत्पादन-

तेजो हि सन्धानहेतुस्तदर्थिनाम् ॥ ५४ ॥

---

मैत्रीकरणरूपं कार्य्यं न कुर्य्यादित्यर्थः । "पणबन्धः सन्धि"रिति सोमदेवाः । तथैव "पणबन्धो भवेत् सन्धि"रिति भोजनृपाः । स च षाड़्गुण्ये प्रथमः । यत्र शत्रुणा पणबन्धो विधीयते केनचित् वस्तुना गृहीतेन वा शत्रोस्तेन विहितेन यो भवति स पण उच्यते, तेन सन्धिर्भवतीति सारार्थः । तदुक्तं शुक्रदेवैः—

"दुर्बलो बलिनं यत्र पण-दानेन तोषयेत् ।
तावत् सन्धिर्भवेत्तस्य यावन्मात्रप्रजल्पितः" ॥

कौटिलीये च "हीयमानः सन्दधीत" । "नातप्तलोहं लोहेन सन्धत्ते" इति च । हीयमानः सन् विजिगीषुः सन्धानं कुर्य्यात् । अन्येषां सकाशात् पणबन्धेन दण्डव्यवस्थया सन्धिमुपेयादित्यर्थः । अतप्तलोहम् अन्येन लोहेन सार्द्धं न सन्दध्यात् । द्वयोर्विजिगीषोः एको हीयमानोऽपरोऽभ्युच्चीयमानः । पुनरुक्तिरत्र सुबोधार्था । पुष्कलमन्यत् कामन्दकीये । सन्धानं सन्धिरिति । ततः "उपसर्गे घोः किः" । हीयमान इति । ओहाक् त्यागे, जहाति । शानच् । "घु-मा स्था" इत्यादिनेत्वम् ॥ ५३ ॥

सन्धानस्य हेतुं निर्वक्ति तेजोहीति । तदर्थिनां सन्धानार्थिनाम् । अपरस्य नृपस्य तेजः प्रभावो प्रतापो वेति । सन्धेः हेतुः कारणमिति । "तेजो हि सन्धानकारणम्" इति कौटिलीये । कोषदण्डज-प्रतापस्य तेजस्त्वमिति । कोषो धननिकरा-

नातप्तलोहं लोहेन सन्धत्ते ॥ ५५ ॥

---

लयः । दण्डोदमः सैन्यञ्च । ताभ्यां जातं तेजः । भरतोऽपि तेजोलक्षणं प्राह—

"अधिक्षेपावमानादेः प्रयुक्तस्य परेण यत् ।
प्राणात्यये प्रसहनं तत्तेजः समुदाहृतम्" ॥

स्वस्मात् परस्मिन् राज्ञि प्रभावाधिक्यात्तेन साकं सन्धानं समुचितमिति भावः । अन्यत्नोतिसारेऽस्ति । 'तेजो दीप्तौ प्रभावे च स्यात् पराक्रमरेतसो'रिति मेदिनी । तेजयति, तेज्यतेऽनेन वा 'तिज् निशाने' तत औणादिकादसुन् ॥ ५४ ॥

विजिगीष्वोर्द्वयोरेकस्य प्रतापाधिक्यं विना सन्धानं न स्यात्तद्दर्शयति· नेति । यथा अतप्तम् अध्मायमानम् अदग्धलोहमिति । प्रध्मातं लोहं विना न सन्धत्ते नापि संमिश्रो भवति । यथा अक्षुब्धप्रकृतिः तादृशप्रकृत्या न विगृह्यते । भिन्नप्रकृतिक्षोभो विग्रहकारणं स्यात् । 'लोहोऽस्त्री शस्त्रके लोहे जोङ्गके सर्वतैजसे' इति मेदिनी । लुह गार्द्धे, लोहति, लुह्यते वा । अचा घञा वा सिद्धम् । अथवा लूञ् छेदने, लूयतेऽनेन, ततो बाहुलकाद् हः । अन्ये तु—रुह प्रादुर्भावे, रोहति, रुह्यते वा ततोऽच् । कपिलिकादित्वाल्लत्वम् । अन्यदुक्तमर्थशास्त्रेऽस्ति, विस्तारभिया नेह संगृह्यते । तप सन्तापे । तप्यते इति तप्तः क्तप्रत्ययेन सिद्धम् ॥ ५५ ॥

**बलवान् हीनेन विगृह्णीयात् ॥ ५६ ॥**

**न ज्यायसा समेन वा ॥ ५७ ॥**

---

हीनशक्तिना समं बलवतो विग्रहकरणं वक्ति बलवानिति। प्रबलो नृपः हीनेन दुर्बलेन क्षीणबलेन विगृह्णीयात् विग्रहं कुर्य्यात्। परमण्डले दाहच्छेद-लुण्ठनादिनेति। 'बलवान् हीनेन निगृह्णीया'दिति पाठे तु शत्रौ हीने दुर्बलत्वं गते तेन सह विग्रहं न कुर्य्यादित्येवमर्थः स्यात्। अयञ्च कौटिल्यसम्मतः पाठो भवेत्। तथाहि अर्थशास्त्रे "न हीनेन विगृह्णीया'दिति। विरुद्धं विविधं वा ग्रहणं विग्रहः। स च पञ्चविध-यानेऽन्तर्गतः। विगृह्य यानम्। सन्धाय-यानम्। सम्भूय-यानम्। प्रसङ्ग-यानम्। उपेक्ष्य-यानम्। अन्यन्नीतिसारेऽस्ति। पुनर्विग्रहोऽपि त्रिविधः। प्रकाश-विग्रहः। कूट-विग्रहः। तूष्णीं विग्रहः। ओहाक् त्यागे, हीयते स्मेति। 'घुमास्था' इत्यादिनेत्वम् ॥ ५६ ॥

केन सह विग्रहो न विधेयस्तद्दर्शयति नेति। ज्यायसा ज्येष्ठेन प्रबलेन सार्द्धं किंवा समेन तुल्यबलेन सह नैव विगृह्णीयादित्यर्थः। शक्तित्रयोपचितो ज्यायान्। समान-शक्तित्रयः समः। शक्तित्रयापचितो हीनः, विक्रमो बलमुत्साह इति शक्तित्रयम्। तदाह सोमदेवः "अभ्युच्चीयमानः परं विगृह्णीयाद् यदि नास्ति आत्मबलेषु क्षोभः"। शत्रोः सकाशाद्विजिगीषुर्यद्यप्यधिक-शक्तिर्भवति तदा तेन समं विगृह्णीयात्। यदि आत्मबलेषु स्वसैन्येषु क्षोभो भयं न भवेत्। "ज्यायान् वृद्धे प्रशस्ये च" इति

हस्तिनः पादयुद्धमिव बलवद्विग्रहः ॥ ५८ ॥

आमपात्रं आपेन सह विनश्यति ॥ ५९ ॥

---

हैमः। अतिशयेन वृद्धः प्रशस्यो वा। 'द्विवचन'मित्यादिनेतीयसुनि 'ज्यच' इति वृद्धस्य ज्यादेशः। ज्यादादीयसः इत्यात्वम्। 'समस्तुल्य' इत्यमरः। सम वैक्लव्ये, समति, अचा सिद्धम् ॥५७॥

द्वयो र्बहूनां वा बलवतां परस्परं विग्रहः कीदृशस्तद्दर्शयति हस्तीति। हस्तिनः करिणः पादयुद्धं पादयोः प्रहरणरूपसंग्रामः। एकस्य पद्भ्याम् अन्यस्य पादयोर्युद्धम्। तदिव बलवतोर्नृपालयोर्द्वयोः विग्रहः समरः स्यादिति। हस्तिनः सेनाङ्गत्वेन समरसम्भावना निश्चिता। तथा चामरः "हस्त्यश्वरथपादातं सेनाङ्गं स्याच्चतुष्टयम्"। हस्तः शुण्डोऽस्यास्तीति "हस्ताज्जातौ" इतीनिः। विग्रह इति। विग्रहणं विरुद्धं वा ग्रहणम्। "विग्रहो युधि विस्तारे प्रविभाग-शरीरयो"रिति हैमः। ग्रह उपादाने इत्यस्मात् "ग्रहवृदृ" इत्यादिनाऽप् ॥५८॥

पूर्व्वसूत्रस्योदाहरणत्वेनेदं वक्ति आमेति। यथा आमपात्रम् अपक्वमृदादि भाजनम्। आपेनाद्भिरित्यर्थः। 'छन्दोवत् सूत्राणि भवन्तीति' नियमादापेनेति आर्षपदवज्ज्ञेयम्। तेन सह विनश्यति वारिसाद्भवतीति। 'आपः स्त्री भूम्नी'त्यमरः। आप्लव्याप्तौ, आप्नुवन्ति आप्यन्ते वा। 'आप्नोतेर्ह्रस्वश्चे'ति क्विप्, ह्रस्वत्वश्च। स्मृतौ क्वापि 'आपोभिर्मार्ज्जनं कृत्वे'ति अप् शब्दस्य

**अरिप्रयत्नमभिसमीक्ष्यात्मरक्षया वसेत् ॥६०॥**

**शक्तिहीनो बलवन्तमाश्रयेत् ॥ ६१ ॥**

---

सान्तत्वमपि दृश्यते। बहुवचनवाचकोऽयं प्राणदन्तादिवत् शब्द-स्वाभाव्यात्। 'आमपात्रमामेन सह'ति पाठे अयमर्थो भाति यदामपात्रं तादृशपात्रान्तरेण सह प्रतिघाते सकृदुभयं विनश्यतीति ॥ ५८ ॥

शत्रोश्छिद्रान्वेषणे तत्परतां प्रदर्शयति अरीति। अरीणां दुर्हृदां शत्रूणामिति। प्रयत्नश्चेष्टा उद्यमश्चेति। परकीय राज्यादिलाभे सन्धानं वा। तदभि सम्यक् समीक्ष्य गूढमवलोक्येति। आत्मेति। आत्मरक्षया आत्मनः स्वस्य राष्ट्रस्य च रक्षणपूर्वकम्। वसेदवतिष्ठेत। यदा अमित्रं स्वराज्याद्याक्रमणे दाह-लुण्ठनादिना समुद्यमं करोति तदा नृपो ह्यात्मानं सर्वथा पालयेदिति। भावः। 'अरिप्रयत्नमभि समीक्षेते'ति पुस्तकान्तरस्थपाठेऽर्थस्तु सरल एव। अरीणां यः प्रयत्नः तं सम्यग् अवलोकयेदित्यर्थः। अस्मात् परं "सन्धायैकतो वेति" सूत्रं क्वचिदादर्शग्रन्थेऽस्ति तत् सूत्रमधिकं प्रस्तावविरोधि प्रतीत्य स्वातन्त्र्येण नैव विन्यस्य व्याख्यातम्। यद्वा सन्धानेन पक्षमेकमाश्रित्यावतिष्ठेतेति तदर्थः। अरिः। ऋ गतौ, इयर्त्ति विरोधम्। ततः 'अच इः' इत्यौणादिकात् सिद्धम्। प्रयत्नः। प्रपूर्वाद् यती प्रयत्ने, यतते। ततो नङ् इति कालापाः ॥ ६० ॥

दुर्बलस्य बलवदाश्रयत्वं प्रवक्ति शक्तीति। शक्तिः शौर्य्यं

दुर्बलाश्रयो हि दुःखमावहति ॥ ६२ ॥

---

सामर्थ्यमिति । राष्ट्र-दुर्ग सैन्य-कोषादयश्च । तेभ्यो हीनो रहितः । बलवन्तमिति । बलवन्तं प्रतापान्वितम् । दुर्ग-सैन्य-कोषादि-युक्तं वा । आश्रयेदिति । आधिपत्यं भजेत् । तथाचोक्त-मभियुक्तैः—

'अत्यन्त बलवन्तोऽपि पौर-जानपदाश्रयाः ।
दुर्बलैरपि बाध्यन्ते पुरुषैः पार्थिवाश्रितैः' ॥

"विपदि प्रधानाश्रयो हि श्रेयान्" इत्यौशनसाः । विपत्काले प्रधानं शक्तिमन्तमाश्रयेत्त्राणार्थमित्यर्थः । 'शक्तिरायुधभेदे स्यात् उत्साहादौ बले स्त्रियाम्' इति हैमः । शक्ॢ शक्तौ, शक्यते-ऽनया । 'स्त्रियां क्तिन्' । अन्यत्रोक्त आश्रय इति ।

"उच्छिद्यमानो रिपुणा निरुपायः प्रतिक्रियः ।
शक्तिहीनः संश्रयेत बलिनं धार्मिकं नृपमिति" ॥ ६१ ॥

प्रबलं हित्वा यो दुर्बलाश्रयं करोति तस्यावस्थां वक्ति दुर्बलेति । दुर्बलाश्रयो हीनशक्तेरवलम्बनम् । हि अवश्यम् । दुःखं क्लेशमावहति जनयति । सर्वस्य विपदि स्वस्मात् समधिकशक्तेरेवावलम्बनं समीचीनमिति भावः । तदुक्तं नीतिविद्भिः 'कर्त्तव्यो महदाश्रयः' । अन्यत्र हितोपदेशे 'विशिष्टैश्च विशिष्टतामिति' । विशिष्टैः । प्रबलैः सह मेलने विशिष्टतां श्रेष्ठतां विपत्त्राणञ्च भवतीत्यर्थः । 'दुर्बले निशिते श्याता'मिति रभसः । दुष्टं

**अग्निवद्राजानमाश्रयेत् ॥ ६३ ॥**

**राज्ञः प्रतिकूलं नाचरेत् ॥ ६४ ॥**

---

हीनं बलमस्येति विग्रहः । बल प्राणने ; बलति । ततोऽल् । एतत् सर्वं पूर्वापरतः सूत्रोक्तं कामन्दकीये मुकुटव्याख्याने च इैधे स्पष्टमस्ति ॥ ६२ ॥

आश्रयस्य शक्तिं निर्द्दिशति अग्निवदिति । यथा अग्निरतीव प्रखरस्तथा प्रतापैश्वर्य्यवन्तं राजानं बलहीनः समाश्रयेत् । यथा वा प्रखरोऽप्यग्निर्दाह्यवस्तु विना दाहकः प्रकाशकश्च न भवति, तद्वज्ज्ञेयम् । अथवा अग्नेर्दाहक शोषकादिमत्वेऽपि तदाश्रयं विना लोकयात्रा न सम्पद्यते । तद्वन्नृपतेः प्राचण्ड्येऽपि तदाश्रयं न परिहरेत् । स्वामि-समुद्देशे सोमदेवैरुक्तं राजलक्षणम्—"धार्म्मिकः कुलाचाराभिजनविशुद्धः प्रतापवान् नयानुगतवृत्तिश्च स्वामी"ति । धार्म्मिकः स्वधर्म्म-प्रजारतः । कुलाचाराभिजनः, अस्वेच्छाचारो, आभिजात्यसम्पन्न । विशुद्धः यतेन्द्रियः । प्रतापवान् शौर्य्यवीर्य्यभीमादिगुणान्वितः । नयानुगतः न्यायवान् इत्यर्थः । अग्निरिति । अगि गतौ, अङ्गति । 'अङ्गेर्नलोपश्च' इत्यौणादिकः निर्णलोपश्च । राजेति । राजृ— दीप्तौ, राजति । 'कनिन् यु वृषि' इत्यादिना कनिन्प्रत्ययेन राजन् इति निष्पन्नम् ॥ ६३ ॥

नृपस्य विरुद्धाचरणं निषेधति राज्ञ इति । राज्ञो महीभुजः

## न देवचरितं चरेत् ॥ ६५ ॥

प्रतिकूलं विरोधं राजद्रोहं वा। नाचरेत्तन्नैव कुर्य्यादिति। तत्करणे महानिष्टपातात्। तदुक्तं भारते—

"यस्य कोपो महान् बाधः प्रसादश्च महाफलः।
कस्तस्य मनसापोच्छेदनर्थं प्राज्ञसम्मतः" ॥

अन्यच्च—

"बालोऽपि नावमन्तव्यो मनुष्य इति भूमिपः।
महती देवता ह्येषा नररूपेण तिष्ठति ॥"

वाक्यामृते च—"अस्वामिकाः प्रकृतयः समृद्धा अपि निस्तरीतुं न शक्नुवन्ति" इत्यतो नृपप्रातिकूल्यं हित्वा सर्व्वथा तदानुकूल्यं समाचरेत्। तेन चापद्भ्यो निस्तारः। उक्तञ्च रैभ्येन—

"रक्षिते भूमिनाथे तु आत्मीयेभ्यः सदैव हि।
परेभ्यश्च यतस्तस्य रक्षा देशस्य जायते" ॥

एवमेव कौटिलीयेऽर्थशास्त्रे प्रथमाध्यायेऽस्ति ॥ ६४ ॥

देवस्य राज्ञश्च यदाचरितं तदन्यस्यानुष्ठानं प्रतिषेधति नेति। देवस्यामरस्य ब्रह्मादिभिर्भूपैश्च यत् कार्य्यमाचरितमनुष्ठितं न तद् मानवः चरेदनुतिष्ठेत्। देवानाम् इन्द्रादीनां पारदार्य्यादिकं भूपस्य च संप्रहारे लोकनाशादिरूपं यत् कार्य्यं तत्सर्वं नानुकुर्य्यादिति भावः। केवलं तेषां सेवनोपदेशादि समनुतिष्ठेत्। तदुक्तं पौराणिकैः—

"धर्म्मव्यतिक्रमो दृष्टः महतामपि साहसम्।
तेजीयसां न दोषाय वह्नेः सर्व्वभुजो यथा" ॥

**नोद्धत-वेषधरः स्यात् ॥ ६६ ॥**

**द्वयोरपीर्ष्यतोर्द्वैधी-भावं कुर्व्वीत ॥ ६७ ॥**

---

नृपपक्षे तु—प्राणदण्डाखेटकरणादि रूपं यत् कार्य्यं, तत्सर्व्वं साधारणैर्नानुष्ठेयम्, शक्तेस्तारतम्यात्। यदि नृपो दण्डधरो न भवेत्तदा मानवधर्म्मशास्त्रोक्त-मात्स्यन्यायः कदर्थितः स्यात्। 'देवः सुरे घने राज्ञि देवमाख्यातमिन्द्रिये' इति। दीव्यन्तीति देवाः, पचादिषु पाठाद्दिव् धातोरच् प्रत्ययः ॥ ६५ ॥

उद्धतवेषधारित्वं लोकाप्रीतिकरत्वान्निषेधति नेति। उद्धतः उत्कटो लोकाप्रीतिकरः। वेषः परिच्छदादिविरचनसुषमा। तद्युक्तः सन् राज्ञः सन्निधौ नो गच्छेत्। तथैव देवादिसन्निधानेऽपि नोत्कटवेषधारी भवेत्। राजा इति पूर्व्वपूर्व्वसूत्र-प्रस्तावानुसारेणागतम्। उद्धत इति, उत्पूर्वाद्धन्तेः क्तः। 'उपसर्गेण धात्वर्थो बलादन्यत्र नीयते' इत्यच्छकुल्लार्थतेति। विषल्ट-व्याप्तौ, वेषणं विष्यते वा। वेशेति सूत्रपाठे, 'विश प्रवेशने' विशति, विश्यते वा घञा सिद्धमुभयपदम्। अत्र मूर्द्धन्य-तालव्यान्तयोरलङ्काररचनादिकृतशोभार्थता ॥ ६६ ॥

परस्परेर्ष्या प्राबल्ये सञ्जाते द्वैधी भावरूपमुपायं निर्दिशति द्वयोरिति। ईर्ष्यतोः परस्परम् असूयावतोर्द्वयोर्नृपयोरन्ययोर्वा। द्वैधीभावम्। बलिनोर्वैरिणोर्मध्ये काकाक्षिवदलक्षितस्य उभयत्र वाचा समर्पणं द्वैधम्। अद्वैधस्य तद्भावः तं कुर्य्यात्। द्वैधीभावश्चतुर्विधः, कामन्दकीये भोजराजीय-कल्पतरौ च स प्रसिद्धः। चतुर्षु

## न व्यसनपरस्य कार्य्यावाप्तिः ॥ ६८ ॥

च प्राथमिक उक्तो द्वैधीभावः । बलिना सह सन्धिः, दुर्बलेन सह विग्रह इति द्वितीयः । शत्रोर्वा मूलप्रकृतिभिः सह सन्धाय शत्रुणा सह विग्रह इति तृतीयः । शत्रुणैव वा सन्धिविग्रहसमुदायहेतोर्दुर्गाश्रयस्य व्यापार इति चतुर्थः । केषाञ्चिन्मते षाड्गुण्ये द्वैधीभावोऽन्तर्नीतः । ईर्ष्यतोः । ईर्ष्य ईर्ष्यायाम् । ईर्षणम् । 'गुरोश्चे'ति अप्रत्ययः । द्वैधं द्विप्रकारम् । 'संख्याया विधार्थे धा' ततो 'द्वित्र्योश्च धमुञ्'प्रत्ययः ॥ ६७ ॥

व्यसनासक्तस्य कार्य्यफललाभेऽसामर्थ्यमाह नेति । व्यसनपरस्य तदासक्तस्य । कार्य्यावाप्तिः । कार्य्यफललाभो न भवति । व्यसनं कामज-कोपजदोषः । स च मानवधर्म्मशास्त्रोक्ताष्टादशप्रकारः । व्यसनपरः स्वयं नष्टः परानपि नाशयति । तदाह वल्लभदेवः—

"असतां सङ्गदोषेण साधवो यान्ति विक्रियाम् ।
दुर्य्योधनप्रसङ्गेन भीष्मो गोहरणे रतः" ॥ इति ।

व्यसनहीनो धीरो विचक्षणो निश्चितकार्य्यफलः लोकप्रशंसनीयश्च स्यात् । "व्यसनं विपदि भ्रंशे दोषे कामजकोपजे" । 'व्यसनं त्वशुभे सक्तौ पानस्त्री मृगयादिषु' इति विश्वमेदिन्यौ । कामजदोषे मृगयाक्ष-सुरापानानि । कोपजदोषे वाक्पारुष्य दण्डपारुष्यार्थदूषणानि । असु क्षेपणे । अस्यति, विपूर्व्वादस्यतेर्भावाद्यर्थे ल्युट् । अवाप्तिरिति । आप्ल् व्याप्तौ, अवपूर्वादाप्नोतेः क्तिन् ॥ ६८ ॥

**इन्द्रियवशवर्त्तिनो नास्ति कार्य्यावाप्तिः ॥६९॥**

**नास्ति कार्य्यं द्रुतप्रवृत्तस्य ॥ ७० ॥**

---

असंयतेन्द्रियस्य पुंसः कार्य्यवैकल्यं निर्दिशति इन्द्रियेति। इन्द्रियाण्येकादश। पञ्च ज्ञानेन्द्रियाणि, पञ्च कर्मेन्द्रियाणि, एकादशं मनः। वृत्तमेतेषां प्रागनिगदितम्। 'अवशेन्द्रियचित्तानां हस्तिस्नानमिव क्रिया'। स्यादित्यर्थः। संयतेन्द्रियाणान्तु अशेषकर्म्मसाफल्यम्। तदुक्तं काठके—

"यस्तु विज्ञानवान् भवति युक्तेन मनसा सदा।
तस्येन्द्रियाणि वश्यानि सदश्वा इव सारथे" ॥

कौटिलीये च "इन्द्रियवशवर्त्ती चतुरङ्गवानपि विनश्यति।" इन्द्रियवशवर्त्तीति। असंयतेन्द्रिय इत्यर्थः। तमधिकृत्योक्तम् भारते—

"इन्द्रियाणां हि चरतां यन्मनोऽनुविधीयते।
तदस्य हरति प्रज्ञां वायुर्नावमिवाम्भसि" ॥

चतुरङ्गवानपीति। चतुरङ्गाणि हस्त्यश्वरथपादातानि सेनाङ्गाख्यानि। नाविकाटविकादीनां पदातावन्तर्भावः। नौपोतादीनां यानत्वेन रथेऽन्तर्भावः। महिषादीनां गजाश्वादावन्तर्भावः। अनेनापि इन्द्रियासक्तस्य कर्म्माशक्तिर्वैकल्यञ्च सम्यक् सूचितं भवतीति। इन्द्रस्यात्मनो लिङ्गमिन्द्रियम्। 'इन्द्रियमिन्द्रलिङ्गम्' इत्यादिना घच्, निपातितम् ॥ ६९ ॥

क्षिप्रं कार्य्ये नियुक्तस्य पुंसः कार्य्यासम्प्राप्तिं दर्शयति नेति। द्रुतप्रवृत्तस्याविचारेणाधैर्य्याच्च क्षिप्रमारब्धकार्य्यस्य जनस्य।

## मृगया परस्य धर्म्मार्थौ विनश्यतः ॥ ७१ ॥

---

कार्य्यं कृत्यं नास्ति न सम्पद्यते इत्यर्थः । तदुक्तं कविभिः 'सहसा विदधीत न क्रिया'मिति । कार्य्येऽविमृश्यकारिता कार्य्यहानि-करी स्यात् । उक्तञ्च विष्णुना 'सुचिन्त्य चोक्तं सुविचार्य्य यत्-कृतं सुदीर्घकालेऽपि न याति विक्रियाम्' । परिणामसंस्मृतिं विना पूर्वापरपर्य्यालोचनं विना च किमपि कार्य्यं नैवानुष्ठेयम् । यत्तु कार्य्यं झटित्येव समुपस्थितं तत्तदानीं सूक्ष्मबुद्ध्या सम्पा-द्यम् । 'द्रुतं शीघ्रविलीनयोरिति' हैमः । द्रुधातोः 'गत्यर्था' इत्या-दिना क्तः । अन्यत् सुगमम् । 'दूतप्रवृत्तस्येति' पाठे अक्षक्रीड़ा-सक्तस्येत्यर्थो ज्ञेयः । पूर्वं व्यसननिषेधादक्षक्रीड़ा निषेधोऽभूत् । अत्र तदुल्लेखोऽनावश्यकः ॥ ७० ॥

पूर्व्वं सामान्येन व्यसन निषेधमुक्त्वेदानीं मृगयासक्तस्य धर्म्मार्थहानिं वक्ति मृगयेति । मृगया आखेटः । तत्परस्य तदासक्तस्य पुंसः । धर्म्मार्थौ चतुर्वर्गेषु द्वौ वर्गौ विनश्यतः अवि-हिताचरणाद्दुरितोत्पत्तिद्वारेण ध्वंसमुपयास्यतः । "परित्यजे-दर्थकामौ यौ स्यातां धर्म्मवर्ज्जितौ" इति भारते धर्म्मविरुद्धयोस्त-योर्निषेधात् । यत्तु राज्ञो धर्म्मो मृगयेति तदाह कदाचिदेव तत् कार्य्यं न तु सातत्येन । इदं राज्ञो व्याधस्य च कार्य्यमिति । न तु लोकसाधारणस्य । राज्ञस्तत्कार्य्यं सातत्ये तदासक्तः प्रकाशः । तेनेन्द्रियलौल्याद्धर्म्मार्थयोर्हानं स्यात् । ननु मानव-धर्म्मशास्त्रे मृगवधस्य व्यसनान्तर्गतत्वेन सर्व्वान् प्रति निषेधात् ।

**अर्थेषु पान-व्यसनी न गण्यते ॥ ७२ ॥**

**न कामासक्तस्य कार्य्यानुष्ठानम् ॥ ७३ ॥**

---

मैवं व्याधरान्नोवैधत्वादन्येषामवैधत्वाद् वैधहिंसायाः शास्त्रचोदितत्वाच्चेति सारः । धर्म्मार्थौ प्राङ्निरुक्तौ । मृगयेति । मृग अन्वेषणे । मृग्यन्तेऽत्र 'परिचर्य्या परिसर्य्या मृगये'त्यादि वार्त्तिकात् साधुः ॥ ७१ ॥

पानासक्तस्य कार्य्ये नियोगं प्रतिषेधति अर्थेष्विति । अर्थेषु धनादिषु विषयेष्विति । अर्थनीत्युक्तकार्य्येषु वा । पानव्यसनी सुरादिपानासक्तः । यद्वा पानं मद्यासवादीनाम् । व्यसनं स्त्र्यादीनाम् । एतयोरासक्तः पुमान् नगण्यते नैव क्वापि नियुज्यते । तादृशस्य नियोगे कार्य्यहानिर्लोकापवादश्च । पानासक्तस्य बुद्धेर्भ्रंशत्वं विवेकहानिश्च भवतीति भावः । 'व्यसनन्त्वशुभेसक्तौ पान स्त्री मृगयादिषु' इति मेदिनी । प्राक् सामान्येन व्यसनं प्रतिषिध्य सम्प्रति पानतत्परत्वस्य निषेधः कृतः । व्यसनमस्यास्तीति । अस्त्यर्थे इन् । क्वचिदादर्शे 'अर्थेषणा न व्यसनेषु गण्यते' इत्येवं पाठोऽस्ति तेन अर्थार्ज्जनेच्छा व्यसने न हि परिगणिता भवतीत्यर्थः स्यात् ॥ ७२ ॥

कामान्धस्य कार्य्यारम्भं प्रतिषेधति नेति । कामासक्तस्येति रमण्यादिषु तीव्राभिलाषः कामः । न त्वत्र साधारण-सङ्कल्पः तत्परस्य पुंसः । कार्य्यानुष्ठानं कार्य्यारम्भः न समीचीनः । यतः । कामोपहतमनसः सूक्ष्मगम्भीरकार्य्येऽभिनिवेशो मनः प्रणिधानं

# अग्निदाहादपि विशिष्टं वाक्पारुष्यम् ॥७४॥

वा न भवति। अतोऽनुष्ठिते तत्कार्य्ये हानं भवति फलसम्भावना च विरलेति। तदुक्तं भामतीश्वरैः 'कामाद्युपहतमनाः स्फीतालोकमध्यवर्त्तिनं घटमपि न पश्यति' इति। गीतायाश्च—

"काम एषः क्रोध एष रजोगुणसमुद्भवः।
महाशनो महापाप्मा विद्धेनमिह वैरिणम् ॥"

"कामः स्मरेच्छयोः पुमान्" इति मेदिनी। कमु कान्तौ इति कमेः घञ्। लोकप्रवादश्च—'कामेन रावणो नष्टः देवराजोऽपि गर्हितः' इति ॥ ७३ ॥

मर्म्मन्तुदवाक्यप्रयोगस्य अग्निदहनादपि काटोर्य्यं प्रदर्शयति अग्नीति। अग्निना अनलेन दाहः प्रज्वलनम्। तस्मादपि विशिष्टम् अधिकम्। तदुक्तं कुटुम्बकटुवागिव व्यथयते तुषारेऽनिलः'। धर्म्मशास्त्रेऽपि वाक्पारुष्यं व्यसनेषु अन्तर्नीतम्। तथाहि—'वाग्दण्डजञ्च पारुष्यं क्रोधजोऽपि गणोऽष्टकः'। क्रोधोद्दीपनात् वाक्पारुष्यं भवति तेन स्वपरमानसेऽधिकक्रोधो भाविविवादश्च स्यात्। महाभारते राजधर्मे च,—

"वाक्पारुष्यन्तथोग्रत्वं दण्डपारुष्यमेव च।
आत्मनो निग्रहस्त्यागोऽर्थदूषणमेव च" ॥ इति।

'पारुष्यं परुषत्वे च दुर्वाक्ये पुंसि गीष्पतौ' इति शब्दार्णवे। वाक्पारुष्यं वाग्दण्डो वा। विशेष्ये इति पाठे तु 'अर्थवशाद्विभक्तिविपरिणामः स्यात्'। विशेष्ये विशेष्यमिति। तेन चार्थाभेदः।

**दण्डपारुष्यात् सर्व्वजनद्वेष्यो भवति ॥ ७५ ॥**

**अर्थदूषकं श्रीः परित्यजति ॥ ७६ ॥**

---

पारुष्यमिति-परुषो निष्ठुरभाषी। तस्य भावः पारुष्यम् ब्राह्मणादित्वात् ष्यञ् ॥ ७४ ॥

दण्डकाठोर्य्यादनिष्टं वक्ति दण्डेति। दण्डो दमनम् अपराधिने यथाविधि निग्रहकरणं दण्डः। तत्पारुष्यं निष्ठुरता, तस्मात् सर्वेषां जनानां द्वेष्योऽप्रियो नृपः स्यात्। लोकास्तु रुष्टा भवन्ति। प्रकृतिक्षोभश्च राष्ट्राशान्तिकारणम्। यथा तन्न भवेत्तथा पारुष्यं परिहरेत्। पारुष्यमिति निगदव्याख्यातम्। दण्डेति—

'दण्डोदमे मानभेदे लगुडे यमसैन्ययोः।
व्यूहभेदे प्रकाण्डेऽश्वे कोणमन्थानयोरपि।
अभिमानग्रहे दण्डचण्डांशोः पारिपार्श्विके' ॥ इति विश्वः।

दण्ड निपातने। दण्ड्यति अनेन वेति 'पचाद्यच्'। अथवा 'पुंसि' इत्यादिना घप्रत्ययः। द्वेष्य इति। द्विष् अप्रीतौ 'द्वेष्टुमर्हः' ततो ण्यत् प्रत्ययसिद्धः ॥ ७५ ॥

अर्थदूषकस्य सम्पत् परिहारं वक्ति अर्थ इति। अर्थदूषकं अर्थव्यवहारेऽनभिज्ञं कृपणं कुत्सिते कार्य्येऽर्थदातारं वा श्रीः सम्पदधिष्ठातृदेवता ऐश्वर्य्यं वेति। परित्यजति तद्व्यवहारदोषात् परिहरति। नानाविषयनिपुणं पुरुषं श्रीः स्वयमेव वृणुते। तथाच भारविः। 'वृणते हि विमृश्यकारिणो गुणलुब्धाः स्वयमेव सम्पदः' इति। अन्यच्च विष्णुशर्म्मभिरुक्तम्—

**अमित्रो दण्डनीत्यामायत्तः ॥ ७७ ॥**

**दण्डनीतिमनुतिष्ठन् प्रजाः संरक्षति ॥ ७८ ॥**

---

"उत्साहसम्पन्नमदीर्घसूत्रं क्रियाविधिज्ञं व्यसनेष्वसक्तम् ।
शूरं कृतज्ञं दृढ़सौहृदञ्च लक्ष्मीः स्वयं याति निवासहेतोः" ॥
एवं कोपजदोषरूपे व्यसने वाक्पारुष्य-दण्डपारुष्यार्थदूषणानि स्युरिति । 'अर्थतोषिण'मिति पाठे तु केवलमर्थतत्परं सद्व्ययहीनमित्यर्थो बोध्यः । 'अर्थो विषयार्थनयोर्धनकारणवस्तुषु' इति मेदिनी ॥ ७६ ॥

अमित्रस्याधीन्यकरणोपायं वक्ति अमित्र इति । दण्डनीत्यामिति । दण्डो नीयते बोध्यतेऽनयेति दण्डनीतिः । किंवा दण्डं नयति दण्ड्यान् प्रति प्रापयति ययेति । तस्यामायत्तोऽधीनोऽमित्रोऽरातिः शत्रुरिति । भवतीति शेषः । यश्चासुहृद्वशगो न भवेत्तमनेनोपायेनायत्तीकुर्य्यात् । न मित्रमिति नञ्समासः, तेन अनश्ववत् सपत्नः प्रतीयते । 'द्विष्योऽभियातिरमित्र' इति रत्नकोषः । अम गतौ, अमरोगे चेत्यनयोरमति गच्छतीति । 'अमेर्द्विषति चित्' इत्यौणादिकादित्रन् । दमु उपशमे, दम्यतेऽनेनेति 'जमन्ताड्डः' तेन दण्ड इति सिद्धम् । आयत्त इति । यती प्रयत्ने आयतते, 'अकर्म्मकत्वात्' क्तः ॥ ७७ ॥

प्रजासंरक्षणोपायं वक्ति दण्डनीतिमिति । अनुतिष्ठन् अनुसरन्, दण्डनीत्याश्रयेण सर्व्वाः प्रजाः प्रकृतीः संरक्षति पालयतीति । नृपस्तु राज्यस्थित्यै दण्ड्यान् सर्व्वान् दण्डयते, न हि सा दण्डनीतिः प्रजाह्रानाय भवति । तदुक्तं कविभिः 'स्थित्यै-

**दण्डः सर्वसम्पदाः योजयति ॥ ७९ ॥**

**दण्डाभावे त्रिवर्गाभावः ॥ ८० ॥**

---

दण्डयते दण्ड्यान्' इति । यदि दण्डप्रणयनं न भवेत्तदा राष्ट्रमराजकवद्भवेत् । यद्वा मानवधर्म्मशास्त्रोक्तमात्स्यन्यायः कदर्थितः प्रवर्त्तेत । अतः शिष्टसंरक्षणे अशिष्टदमने राष्ट्रशान्तये वा यथार्हदण्डो विधेयः । 'प्रजा स्यात् सन्ततौ जने' । जन जनने, प्रजायते । 'उपसर्गे संज्ञायाम्' इति जनेर्डः ॥ ७८ ॥

दण्डस्य सकलसम्पदां सम्पर्कं दर्शयति दण्डेति । सर्वसम्पदेति 'विभक्तिविपरिणामोऽर्थवशाद्भवति । सर्वासु सम्पत्सु प्रजानां लघुगुरुभावेनार्थिक-शारीरिक-मानसिकरूपेण दण्डः प्रयुज्यते । अथवा सर्व्वसम्पदा सकलसम्पत्करणेन राजानं दण्डो योजयति प्रेरयतीति । व्याकरणप्रक्रिया सुगमा । यदि दण्डप्रणयनं न स्यात्तदा क्रय-विक्रय-खन्याकर-ऋणदान-ग्रहण-विचार-घट्टहट्ट करादान-उच्चावचदुर्बलपीड़नादौ सर्वं सोपद्रवं स्यात् ॥७९॥

त्रिवर्गमूलत्वं दण्डस्य प्रदर्शयन्नाह दण्डेति । दण्डाभावे सति त्रिवर्गस्य धर्म्मार्थकामानां अभावः स्यात् । यतो दण्डाभावे दुष्टानां प्राबल्यात् प्रजानां त्रिवर्गहानिः राष्ट्राशान्तिश्च प्रवर्त्तेत । स्मर्य्यते च—

"राजभिः कृतदण्डास्तु शुध्यन्ति मलिना जनाः ।
कृतार्थाश्च ततो यान्ति स्वर्गं सुकृतिनो यथा" ॥ इति ।

अथवा त्रिवर्गः 'क्षयः स्थानं वृद्धिश्च' । तदुक्तं 'क्षयः स्थानञ्च वृद्धिश्च त्रिवर्गो नीतिवेदिनाम्' । अष्टवर्गस्यापचयः क्षयः । तदु-

## दण्डभयादकार्य्याणि न कुर्व्वन्ति ॥ ८१

पचयो वृद्धिः । उपचयाऽपचयाभावः स्थानम् । अष्टवर्गो यथा—

"कृषिर्व्वणिक्पथो दुर्गः सेतुः कुञ्जरबन्धनम् ।

खन्याकरबलादानं शून्यानाञ्च विवेचिनम्" ॥ इत्यन्यत् प्रागुक्तम् । दण्डस्त्रिविधः । तदुक्तं —

"वधोऽर्थग्रहणञ्चैव परिक्लेशस्तथैव च ।

इति दण्डविधानज्ञैर्दण्डोऽपि त्रिविधः स्मृतः" ॥

परिक्लेशो वर्ज्जनताड़नादिः । अन्यत् सुगमम् ॥ ८० ॥

प्राग्दण्डाभावे त्रिवर्गाभावमुक्तेदानीं दण्डभीतेरकार्य्य-निवृत्तिं वक्ति । दण्डस्य दुष्टादेर्निग्रहोपायस्य भयात् साध्वसात् । लोका अकार्य्याणि विधानविरुद्धानि नीतिधर्म्मगर्हितानि वा कार्य्याणि नानुतिष्ठन्ति । दण्डप्राशस्त्यं महाभारते राजधर्म्मे—

"दण्डेन नीयते चेदं दण्डं नयति वा पुनः ।

दण्डनीतिरिति ख्याता त्रीन् लोकानतिवर्त्तते" ॥

तत्रैव 'दण्डेन सहिता ह्येषा लोकरक्षणकारिका' । एषा राज-नीतिः । गीतायामपि 'दण्डो दमयतामस्मी'ति । अन्यच्च—

"दण्डः संरक्षते धर्म्मं तथैवार्थं विधानतः ।

काम्यं संरक्षते यस्मात्त्रिवर्गो दण्ड उच्यते ॥"

इति युक्तिकल्पतरौ । 'दण्डो यमे मानभेदे लगुड़े दमसैन्ययो'-रिति विश्वः । दण्ड निपातने, दण्डयति । दण्ड्यतेऽनेन वा । पुंसि इत्यादिना घः, 'पचाद्यच्' वा । ततो दमेर्डः ॥ ८१ ॥

## दण्डनीत्यामायत्तमात्मरक्षणम् ॥ ८२ ॥

महीपतेरात्मसंरक्षणं दण्डनीत्यधीनमिति निर्द्दिशति दण्डेति । दण्डप्रयोजिका नीतिर्दण्डनीतिः । तस्यां नीतावायत्तम् अधीनम् । आत्मनः स्वस्य रक्षणं सर्व्वविपद्भ्यस्त्राणं राज्ञ इति शेषः । महारते राजधर्म्मे च —'दण्डेन सहिता ह्येषा लोकरक्षणकारिका' । एषा दण्डनीतिः । एतस्या लक्षणं प्रागुक्तम् । षड्वर्गैरन्यैरुपायैश्च महीपाल आत्मरक्षणं कुर्य्यात् । तथाच राजधर्म्मे—

"आत्मा देशश्च कालश्चाऽप्युपायाः कृत्यमेव च ।
सहायाः कारणञ्चैव षड्वर्गो नीतिजः स्मृतः" ॥

षड्वर्गो षड्गुणा इति नीलकण्ठाः । शुक्राचार्य्य-कामन्दकनये तु यथास्थाने दूतनियोजनादिभिरेवात्मरक्षणं कार्य्यम् । यथा—

"मन्त्री पुरोहितश्चैव युवराजश्चभूपतिः ।
पञ्चमो द्वारपालश्च षष्ठोऽन्तर्वेशिकस्तथा ॥
कारागाराधिकारी च द्रव्यसञ्चयकृत्तथा ।
कृत्याकृत्येषु चार्थानां नवमो विनियोजकः ॥
प्रदेष्टा नगराध्यक्षो दण्डपालस्त्रिपञ्चमः ।
षोड़शो दुर्गपालश्च तथा राष्ट्रान्तपालकः ॥
अटवीपालकान्तानि तीर्थान्यष्टादशैव तु ।
चारान् विचारयेत्तीर्थे स्वात्मानश्च परस्य च ॥
पाषण्डादीनि विज्ञातान्यन्योन्यमितरेष्वपि ।
मन्त्रिणं युवराजञ्च हित्वा स्वेषु पुरोहितम्" ॥

एतत्सर्व्वं नृपस्यात्मरक्षणोपायभूतम् ॥ ८२ ॥

**आत्मनि रक्षिते सर्व्वं रक्षितं भवति ॥८३॥**

**आत्मायत्तौ वृद्धि-विनाशौ ॥ ८४ ॥**

**दण्डनीत्यादि विज्ञाने प्रणीयते ॥ ८५ ॥**

---

सर्व्वरक्षात आत्मरक्षणस्य श्रैष्ठ्य दर्शयति आत्मेति। स्वयं राज्ञि संरक्षिते निरुपद्रवस्थिते सर्वं राष्ट्रं सुरक्षितं भवति। प्रस्तावादत्रात्मा भूमिपालः। राज्ञि सोपद्रवे परिभूते जनपद-मराजकं स्यादिति। तदुक्तं रामायणे "नाराजके जनपदे" इति। अमायां दीपहीनहर्म्म्य इव नृपविहीनं राष्टं स्यात्। अन्यच्च सिद्धान्तशिरोमणौ 'भोज्यं यथा आज्यरसं विवर्ज्जं राज्यं तथा राजविवर्ज्जितञ्चे'ति। अथवा लोके मानवानां सर्व्वरक्षात आत्मरक्षैव प्रबला भवति। प्राङ्निरुक्तः आत्मशब्दः। 'रक्षित-मवितं गोपायितम्'। रक्ष पालने, रक्ष्यते। ततः क्त प्रत्ययः ॥८३॥

वृद्धिविनाशयोरात्माधीनत्वं वक्ति आत्मेति। आत्मनो नृपस्य आयत्तौ राष्ट्रस्य वृद्धिः प्रसारणं विस्तारः। विनाशः समुच्छेदः। एतौ द्वौ भूपाधीनौ भवतः। भीमकान्तादि गुणराजि-विराजिते राज्ञि राष्ट्रस्य वृद्धिर्भवति। भूपे नीतिहीने पान-स्त्रीमृगयादि-व्यासक्ते निर्गुणे च तस्मिन् सुशासनाभावाद्राज्यहानिश्च भवति। राज्यवृद्धिर्यथा श्रीरामयुधिष्ठिराशोकादेः। राज्यहानं यथा वेण-रावणादेः। "आत्मा चित्तं, नीतिबलात् प्रजानां चित्तं दुःस्थमपि सुस्थं भवति। कुदेशोऽपि सुदेशो भवति। कलिरपि कृतं भवति" इति भारतव्याख्याने श्रीनीलकण्ठाः। तन्मते आत्मादि-सूत्रयोरुक्तयोरात्मपदेन मन एव ग्राह्यमिति प्रागुक्तम् ॥ ८४ ॥

## दुर्बलोऽपि राजा नावमन्तव्यः ॥ ८६ ॥

दण्डनीत्यादीनां विज्ञानाधीन प्रणयनं निरूपयति दण्डेति। अत्रादिपदेन चान्वीक्षिकी वार्त्ता त्रय्यादीनां संग्रहः। 'दण्डनीतिः पालनविद्या' इति नीलकण्ठभट्टः। दण्डनीतेर्निरुक्तिः प्राकृता। विज्ञाने विशेषज्ञानेन सापराध-निरपराध-विवेके तत्प्रणीयते प्रयुज्यते इति सारः। 'दण्डो हि विज्ञाने प्रणीयते' इति सूत्र-पाठे विज्ञाने विशेषज्ञाने सदसद्विवेकरूपे सति दण्डः प्रणीयते निरूप्यते इत्यर्थः स्यात्। यद्वा विशेषज्ञाने सूक्ष्मविचारे दण्डः प्रयुज्यते इति ॥ ८५ ॥

शक्तिहीनस्यापि भूभुजोऽवज्ञां प्रतिषेधति दुर्बल इति। दुर्बलो हीनशक्तिः स्वाम्यमात्य-कोष-सुहृदादिशून्यो नृपो नावमन्तव्यः नावज्ञेयः। तथाच मनुः—

"अष्टाभिश्च सुरेन्द्राणां मात्राभिर्निर्मितो नृपः।
तस्मादभिभवत्येष सर्व्वभूतानि तेजसे"हि ॥

अन्यच्च—"राजानं प्रथमं विन्द्यात्ततो भार्य्यां ततो धनम्।
राजन्यसति लोकेऽस्मिन् कुतो भार्य्यां कुतो धनम् ॥"

सुरेन्द्राणां शक्तिसमूहजत्वेनैव राजा मनीषिणामपि माननीयः। अतो भूपो नावमन्तव्यः। दुष्टं क्षीणं बलमस्येति। "दुर्बले निशिते स्यातां शितशाताविमौ त्रिष्विति" रभसः। राजेति। 'राजा प्रभौ च नृपतौ क्षत्रिये रजनीपतौ' इति मेदिनी। राजृ दीप्तौ, राजति। 'कनिन् युवृषि' इत्यादिना कनिन्। बल प्राणने, बलति। बल्यते वा। 'पचाद्यच्'। 'कर्म्मणि' घञ् वा ॥८६॥

**नास्त्यग्नेर्दौर्बल्यम् ॥ ८७ ॥**

**दण्डेन प्रणीयते वृत्तिः ॥ ८८ ॥**

**वृत्तिमूलोऽर्थलाभः ॥ ८९ ॥**

---

नृपस्य स्वाभाविकप्रतापं वर्णयति नेति। अग्नेर्वह्नेर्दौर्बल्यं शक्तिराहित्यं क्वापि नास्ति। यतः क्षुद्रोऽपि वह्नेर्विस्फुलिङ्गः तृणादिसंयोगेन महानलो भवन् विशालं वनं दहति। तद्वत् क्षुद्रशक्तिरपि राजा प्रजापेक्षया प्रबलः अन्तर्निहिताशेषशक्तित्वात् साधनोपायबाहुल्याच्च। अग्निरिति। 'अग्निर्वैश्वानरेऽपि स्यात् चित्रकाख्यौषधौ पुमान्' इति रभसः। अगि गतौ, अङ्गति 'अङ्गेर्नलोपश्च' इति निर्नलोपश्च। दुष्टं बलमस्येति दुर्बलम्। तद्भावो दौर्बल्यम् ॥ ८७ ॥

योग्यदण्डदानेन वृत्तिप्रणयनं प्रदर्शयति दण्डेनेति। वृत्तिर्वर्त्तनं जीविकावस्थितिरिति यावत्। सा च दण्डेन न्याय्यदण्डप्रयोगेन प्रणीयते प्रयोज्या भवति। 'स्थित्यै दण्डयतो दण्ड्यान्' इति रघौ। स्थित्यै लोकस्थित्यै लोकरक्षणायेत्यर्थः। 'दण्डः संरक्षते प्रजा' इत्यन्यत्र। 'वृत्तिर्व्विवरणाजीव-कैशिक्यादिप्रवर्त्तने' इति विश्व-मेदिन्यौ। यदि न्याय्यदण्डप्रणयनं नाप्रयोक्ष्यत्तदा प्रजासु परस्परविवादाज्जीविकाहानिरभविष्यदिति भावः। 'दण्डो यमे मानभेदे लगुड़े दमसैन्ययो'रिति विश्वः। दण्डनिपातने, दण्डयति, तण्डयतेऽनेन वा। 'पुंसि घः'। 'पचाद्यच्' वा। अथवा दमेर्धातोरौणादिकात् डः। वर्त्ततेऽनयेति, वृतु-वर्त्तने इत्यस्मात् क्तिन् ॥ ८८ ॥

## अर्थमूलौ धर्म्मकामौ ॥ ९० ॥

अर्थार्ज्जनस्य वृत्तिमूलकत्वं निर्व्वक्ति वृत्तिरिति। अर्थस्य धनादेर्लाभः प्राप्तिर्वृत्तिमूला भवति। वृत्तिः प्रजादीनामवस्थानम्। तदेव मूलं हेतुर्यस्यावस्थानस्येति। यदि प्रजानां शान्तिमूला वृत्तिर्न भवति तदा अर्थार्ज्जन-क्रयविक्रयादेर्महती हानिः स्यात्। 'वृत्तिर्वर्त्तनजीवने'। वर्त्तनमवस्थितिः। जीवनं जीविका। यत्र जीविका नास्ति तत्र लोकक्षयः। लाभ इति। डुलभष् प्राप्तौ, लभ्यते। 'अकर्त्तरि' इत्यनेन घञ्। मूलमिति। मूलमाद्ये शिफाभयो'रिति मेदिनी। मूल रोहणे, मूल प्रतिष्ठायाञ्च। 'इगुपध' इत्यादिना तयोः कः स्यात् ॥ ८८ ॥

धर्म्मकामयोरर्थमूलत्वं वक्ति अर्थेति। धर्म्मः श्रेयःसाधनकार्य्यम्। तेनैहिकं शिवम्। पारत्रिकी परमनिर्वृतिश्च। कामः अभिलाषः काम्येषु इच्छा वा। द्वावेतौ अर्थमूलौ अर्थकारणकौ भवतः। अर्थोमूलं ययोर्धर्मकामयोरिति बहुव्रीहिः। विनार्थेन तीर्थदानादिकार्य्यं देशहितसाधनञ्च न सम्भवति। अतोऽर्थः धर्म्मकामयोश्च मूलं प्रधानम्। असदुपायेनार्थार्ज्जनं तदशुभसूचकं भवति। तदुक्तं भारते विदुरनीतौ 'परित्यजेदर्थकामौ यौ स्यातां धर्म्मवर्ज्जितौ'विति। धर्मेति। धर्मो लोकविधारकः। धृञ् धारणे, धरति ध्रियते वा। 'अर्त्ति स्तु सु' इत्याद्यौणादिकोमन्। कामेति। कमु कान्तौ, कमनं कामः। काम्यते वा ततो घञ्। इच्छानतिक्रमे काममिति क्लीवं स्यात्। 'विशेषैर्यद्यवाधितः' इति कामशब्दस्य क्लीवत्वे हेतुः ॥ ९० ॥

अर्थमूलं कार्य्यम् ॥ ८१ ॥

यत्प्रयत्नात् कार्य्यसिद्धिर्भवति स उपायः ८१॥

लौकिकानां कार्य्याणां साक्षात् परम्परया वा अर्थमूलकत्वं प्रदर्शयति अर्थेति । कार्य्यं क्रियते यत्तत् । अर्थो धनधान्यादिः । तन्मूलं तत् प्रधानमित्यर्थः । सचेष्टस्य पुंसः कर्म्मनिरतस्यार्थ-लाभोऽवश्यम्भावीति भावः । तथाहि, 'उद्योगिनं पुरुषसिंह-मुपैति लक्ष्मीः' । 'धनेन बलवान् लोक' इति च विष्णुशर्म्माणः ।

"नो दुर्लभं धनं क्वापि वणिजां वसुधातले ।

सर्वकार्य्येषु जगति मूलमर्थं सदा विदुः" ॥

इति कैश्चिद्विद्भिरुक्तम् । यथा 'धर्मेण हि सहायेन तमस्तरति दुस्तरम्' । तथा अर्थेन सहायेन सफलकार्य्यो विपदश्चोत्तरत्ये-वेति ॥ ८१ ॥

प्रागर्थमूलमुक्त्वोपायं निर्द्दिशति यदिति । येन यस्माद्वा प्रयत्नात् चेष्टनात् कार्य्यसिद्धिः कार्य्यनिष्पत्तिर्भवति स उपायः । नीतौ तु उपायाः सामादयश्चत्वारः । केषाञ्चिन्मते तु सप्तोपाया स्तद्यथा—

"साम दानञ्च भेदश्च दण्डश्चेति चतुष्टयम् ।

मायोपेक्षेन्द्रजालञ्च सप्तोपायाः प्रकीर्त्तिताः" ॥ इति ।

"उपायः सामभेदादौ तथैवोपगतौ पुमान्" इति मेदिनी । अय-गतौ, उपायतेऽनेन 'हलश्चेति' घञ् । 'येनाश्रयेण कार्य्यं सम्पद्यते स उपाय' इत्यपरे । 'उपायाः साधनानि' इति वा । 'उपायो हि कार्य्यनिष्पादनयोग्यसामग्री' इत्यन्येऽप्याहुः । 'यदल्पप्रयत्नात्

## उपायपूर्व्वं कार्य्यं न दुष्करं स्यात् ॥ ८३ ॥
## अनुपायपूर्वं कार्य्यं कृतमपि विनश्यति ॥८४॥

---

कार्य्यसिद्धिरिति' क्वापि पाठः। तदा सत्यर्थे अल्पप्रयत्नेन कार्य्यसिद्धिः स्यादित्यर्थः ॥ ८२ ॥

उपायसमवधाने कार्य्यसौकर्य्यं वक्ति उपायेति उपायपदार्थः प्रागुक्तः। स च पूर्वं प्राग् यस्य कार्य्यस्येति। तत् कार्य्यम्। दुष्करं दुःसाध्यं न स्यात्। तथाच तत्त्वकौमुद्यां मिश्राः—"सन्ति चोपायाः शतशः शारीरदुःखप्रतिकारायेषत् कराः भिषजां वरैरुपमिष्टाः" इति। यत् कार्य्यसाधने ये प्रयोजकाः सम्पादकसामग्रीविशेषा वा ते तत्र उपायत्वेन सूरिभिः कीर्त्तिताः। सति साधननिचये कार्य्यमनायासेन सम्यक् सम्पद्यते। दुष्करमिति। दुर् उपसर्गात् करोतेः 'ईषत् दुः सु षु' इत्यादिना खल्। यद्वा दुःखेन क्रियते दुष्टं करोतीति वा अच्। उपपूर्वात् इय गतौ, उपायतेऽनेन 'हलश्च' इति घञ् ॥ ८३ ॥

उपायहीन-कार्य्यस्य विनाशं वक्ति अनुपायेति। नास्ति उपायो यत्र इति। किं वा अनुपायः उपायाभावः। स पूर्वं यस्य कार्य्यस्येति। कृतमनुष्ठितं सम्पन्नमिति यावत्। अपि सम्भावनायाम्। विनश्यति कार्य्यं निष्फलतां यातीत्यर्थः। सुसाधनाभावात् कार्य्यं बह्वायासेनापि न सम्पद्यते। केचित्तु "उद्यमेन हि सिध्यन्ति कार्य्याणि न मनोरथै"रित्याहुः। व्याकरण-कोषार्थः सुबोधः। 'कृतं युगेऽलमर्थे स्याद्विहिते हिंसिते त्रिषु' इति

**कार्य्यार्थिनामुपाय एव सहाय: ॥ ९५ ॥**

**कार्य्यं पुरुषकारेण लच्यं सम्पद्यते ॥ ९६ ॥**

मेदिनी। विहिते विधानपूर्वककार्य्ये। 'विपूर्वी धाञ् करोत्यर्थे' इति नियमात्। कृतमिति। डुकृञ करणे, करोति भूते क्त: ॥ ९४ ॥

कार्य्यार्थिनामुपायप्राधान्यं निर्दिशति कार्य्येति। कार्य्यमर्थ: प्रयोजनमेषामस्तीति कार्य्यार्थिन:। तेषां कार्य्यार्थिनां कार्य्यसाधने तत् सम्पादने वा उपाय एव सहायो विशेष-प्रयोजक इत्यर्थ:। तस्मात् कार्य्यार्थिना पूर्वं तदुपयोगी उपाय सम्यक् एवाश्रयणीय:। 'अनुप्लव: सहायश्चानुचरोऽभिसर:' इत्यमर:। सह अयते एति वा, अय गतौ इण् गतौ वा। तयोरचासिद्धम्। पूर्व्वमुक्तमन्यत् ॥ ९५ ॥

पुरुषकारेण कार्य्यसम्पादनं लच्चयति कार्य्यमिति। पुरुषकारेण पुरुषसामर्थ्येन पौरुषेयेण कार्य्यं यल्लच्यम् उद्देश्यभूतम् अभीष्टमिति। तत् सम्पद्यते इति। उद्यमोत्साहाध्यवसायादिगुणै: पुरुषेण स्वशक्त्या सर्वं कार्य्यं क्रियते न तूद्यमादिशून्येन। यस्य तु तादृश: पुरुषकार: तदनुसारेण तस्य लच्यं कार्य्यं भविष्यति। एवं कार्य्यसम्पत्तिरपि तादृशी भवति। नीतिविदामत:पुरुषकारो दैवात् प्रबल:। यतो 'दैवेन देयमिति कापुरुषा वदन्ति।' अतो 'दैवं निहत्य कुरु पौरुषमात्मशक्त्या' इति। अन्यच्च 'न हि सुप्तस्य सिंहस्य प्रविशन्ति मुखे मृगा:' इत्यपि तत्प्राधान्यं कीर्त्तितम्। लच्यमिति। लच्च आलोचने, लचणम्।

## पुरुषकारमनुवर्त्तते दैवम् ॥ ८७ ॥

'अचो यत्'। यत्र लच इति पाठस्तत्र तद्धञा सिद्धम्। 'लक्ष्यं स्यादपदेशेऽपि शरव्येऽपि नपुंसकम्, इति मेदिनी। घञन्त-पक्षे रभसोऽप्याह 'संख्यायाश्च न ना लक्षं क्लीवं व्याज-शरव्ययोः' इति ॥ ८६ ॥

दैवस्य पुरुषकारानुसारित्वं प्रदर्शयति पुरुषकार इति। दैवमदृष्टं प्राग्भवीयं कर्म्म वा। पुरुषकारं पौरुषं सामर्थ्यं पुरुषानुष्ठेयैहिकं कर्मेति यावत्। पौरुष प्राबल्यात्तमनुसरति दैवम्। 'पूर्व्वजन्मकृतं कर्म्म तद्दैवमिति कथ्यते' इति पौरा-णिकाः। 'जनलक्षण-करचरण-गतरेखादीनां ग्रहगत्यादिसूचित प्राचीनकर्मविपाकफलं दैवम्' इति ज्योतिर्विदः। स्मार्त्तास्तु दैवकालपुरुषकाराणां समुच्चितानां कार्य्यं प्रति कारणत्वमङ्गी कुर्वन्ति।—

"दैवं पुरुषकारश्च कालश्च पुरुषोत्तम।
त्रयमेतन्मनुष्याणां पिण्डितं स्यात् फलाफलम्" ॥ इति।
"दैवं पुरुषकारेण दुर्बलं ह्यपहन्यते।
न दैवेन विपन्नार्थः पुरुषः सोऽवसीदति" ॥

इति च। नीतिविदां नये पुरुषकारस्य श्रैष्ठ्यम्। अन्ये तु उभयो-र्दैवपुरुषकारयोस्तौल्यं वदन्ति। तथाहि 'एवं पुरुषकारेण विना दैवं न सिद्ध्यति'। अन्यच्च 'उभाभ्यामेव पक्षाभ्यां यथा खे पक्षिणां गतिः'। न तु एकेन पक्षेण। यथा वा 'एकेन चक्रेण रथस्य गतिर्न भवेत्तथा पुरुषकारं विना दैवेन कार्य्यं न

## दैवं विना ऽतिप्रयत्नं करोति यत्तद्विफलम् ॥९८॥

सम्पद्यते। एतन्मते तु दैवं परोक्षम्। पुरुषकारस्तु प्रत्यक्षमेवातः परोक्षात् प्रत्यक्षं प्रबलमिति। चार्वाकशरणास्तु केवलं पुरुषकारं स्वीकुर्वन्ति। तथाच—

"यद् यज्जगति पश्यामि यत्तत् पुरुषचेष्टितम्।
शक्तिहीनैरनुमितं दैवमित्यपि केचन" ॥

स्थावराणां पुरुषाणां पुरुषकाराभावाद्दैवं तान् किञ्चिदुपकरोत्येव, जङ्गमानां पौरुषस्य सत्त्वान्न किमपि तान् उपकरोति। दैवमिति। दैवादागतं दैवम्। 'तत आगत' इत्यणा सिद्धम् ॥ ९७ ॥

आस्तिक्यबुद्ध्या केवलपुरुषकारेण कार्य्यनिष्पत्त्यभावं वक्ति दैवमिति। दैवं विना दैवहीनं यदतिप्रयत्नं समधिकचेष्टां करोति तच्चेष्टनं विफलं वृथा निस्फलमिति यावत्। नानेन पूर्वसूत्रोक्तविषयस्य निरसनं स्यात् परमनेन कौटिल्यस्य नीतिविच्छिरोमणेरास्तिक्यं सूचितं भवति। पूर्व्वपरसूत्रयोर्विरोधपरिहारश्चेत्थम्। तत्र दैवं पौरुषमपेक्षते। न तु स्वतन्त्रं पौरुषाद्दैवं प्रबलमिति। दैवं दुर्बलं पौरुषं प्रबलमिति रहस्यम्। अस्मिन् सूत्रे तु भाक्तं दैवप्राधान्यमुक्तम्। पूर्व्वसूत्रे पुरुषकारस्य प्राबल्यं सारसिकमुक्तम्। यद्यपि पूर्व्वसूत्रे 'पुरुषकारोऽनुवर्त्तते दैवम्' इत्येवं पाठः स्यात्तदा सूत्रसङ्गतिः पाठक्रमेण स्वाभाविकी भवेत्। विगतं फलं यस्येति विफलम्। यतो प्रयत्ने, प्रयतनम्। प्रपूर्व्वाद् यतधातोर्नङ् ॥ ९८ ॥

अनीहमानस्य वृत्तिर्न सम्पद्यते ॥ ९९ ॥

पूर्वं निश्चित्य पश्चात् कार्य्यमारभेत ॥ १०० ॥

इति चाणक्यसूत्रे नीतिदर्शनात्मके प्रथमोऽध्यायः ॥१॥

——००——

---

निश्चेष्टस्य पुंसः वृत्त्यभावं प्रदर्शयति अनीहेति । अनीहमानस्य ईहाविरहितस्य वृत्तिः वर्त्तनं स्थितिर्न स्यात् । कार्य्यं जीविका वा, न सम्पद्यते नैव निष्पद्यते । 'ईहा चेष्टोद्यमाः' । 'वृत्तिर्वर्त्तनजीवने' इत्यमरः । 'ईहोद्यमवाञ्छयोः' । ईह चेष्टायाम्, ततः 'गुरोश्च' इत्यनेन अ-प्रत्ययः ॥ ८८ ॥

कार्य्यारम्भात् प्राङ् निश्चयकरणं सूचयति पूर्वमिति । पूर्वमादौ कार्य्यारम्भात् प्रागिति । निश्चित्यावधार्य्य विचिन्त्य समालोच्येति यावत् । पश्चात् परं कार्य्यमारभेत तदारम्भं कुर्य्यादिति । 'कार्य्यमालोचितं कुर्य्यात्' । तथाच 'सुचिन्त्य चोक्तं सुविचार्य्य यत् कृतम्' । 'अपरीक्ष्य न कर्त्तव्यं कर्त्तव्यं सुपरीक्षितम्' । इत्यादि नीतिविदः । पूर्वमालोचितं सत् पश्चादनुष्ठेयम् । अनालोचितम् अविचारितं यत् तन्न कुर्य्यात् । "अविचारितकार्य्येषु प्रमादाः सम्पतन्ति च" इति । 'पूर्वं तु पूर्वजेषु स्युः पूर्वं प्रागाद्ययोस्त्रिषु' इति मेदिनी । पूर्वं निकेतने, पूर्व पूरणे, पूर्वयति, पूर्वति च, पचाद्यचा सिद्धम् । 'पूर्वं प्रागग्रतः' इति धरणिः । पश्चादित्यव्ययम् । 'पश्चादित्यनेनावरस्य सप्तमी

पञ्चमी प्रथमान्तस्य निपातितः'। निश्चित्येति। निर् पूर्वात् 'चिञ् चयने' चिञ्धातोः क्त्वाच् प्रत्ययस्य ल्यप्॥ १००॥

इति दर्शनभूतचाणक्यसूत्रव्याख्यायां श्रीईश्वरचन्द्रशर्म्मशास्त्रि-कृतायां सारार्थबोधिन्यां प्रथमोऽध्यायः।

—०*०—

# द्वितीयोऽध्यायः।

**कार्य्यान्तरे दीर्घसूत्रता न कर्त्तव्या॥ १॥**

**न चलितचित्तस्य कार्य्यावाप्तिः॥ २॥**

प्रथमेऽध्याये सुखादीनां धर्म्ममूलकादीन् विषयान् प्रदर्श्य विशेषनीति विषयप्रदर्शनार्थं द्वितीयोऽध्यायोऽयमारभ्यते।

आरब्धकार्य्यमध्ये दीर्घसूत्रतां प्रतिषेधति कार्य्यान्तर इति। कार्य्यान्तरे कार्य्यमध्ये आलस्याद्दीर्घसूत्रता दीर्घकालेन कार्य्य-सम्पादकतेति। न कर्त्तव्या नैव विधातव्या। तेन कार्य्यनिष्पत्ति-र्नस्यात्। यद्वा कार्य्यमेकं सम्पाद्य अन्यस्मिन् कार्य्ये विलम्बो नोचित इति। 'सूत्रं तन्तुव्यवस्थयो'रिति विश्वः। दीर्घं सूत्रं व्यवस्था यस्य सः दीर्घसूत्रः, भावे तल्, दीर्घसूत्रता। 'दीर्घसूत्र-श्चिरक्रियः' इति। अतिविलम्बेन कार्य्यसम्पादनमिति। सुगम-मन्यत्॥ १॥

अस्थिरचित्तस्य कार्य्यफललाभ-सम्भावनां प्रतिषेधति नेति।

**हस्तागतावमानात् कार्य्यव्यतिक्रमो भवति ॥३॥**

**दोषवर्जितानि कार्य्याणि दुर्लभानि ॥ ४ ॥**

---

चलितचित्तस्य चञ्चलमानसस्य विकृतचित्तस्य वा। कार्य्यावाप्तिः कार्य्य-लाभो न स्यात्। मनसोऽस्थैर्य्यात् कार्य्यव्याघातः, तेन कार्य्यफललाभोऽपि न भवेदिति। सर्व्वं कार्य्यं मनसः स्थैर्य्य-साधनपूर्व्वमनुष्ठेयम्। मनः स्थैर्य्यं बुद्धेर्विकाशस्तेन कार्य्यदार्ढ्यं वर्द्धते। "अभ्यासवैराग्याभ्यान्तन्निरोधः" इति योगसूत्रं तत्सम्पादकम्। मनसो धैर्य्यसाधनविषये योगवाशिष्ठे बहव उपायाः प्रपञ्चिताः सन्ति। अत्र ते विशेषोपयोगित्वाभावान्नोक्ताः। चित्तम्—चितो संज्ञाने, चेतनम्। भावे क्तः, 'श्वीदितः' इति इण् निषेधः। अव-पूर्वात् 'आपॢ व्याप्तौ' इत्यस्मात् क्तिन् ॥ २ ॥

करगतद्रव्यस्यावज्ञा-करणात् कार्य्यवैपरीत्यं वक्ति हस्तेति। हस्तागतम्। करतले आगतमुपस्थितं यत् तस्यावमानादवज्ञाकरणात्, अनवधानतः हेयज्ञानकरणात् कार्य्यस्य व्यतिक्रमो वैपरीत्यम् अयाथार्थ्यं भवति। अतः करगतेऽपि कार्य्ये अन्यस्मिन् वा विषये समुपस्थिते मनः प्रणिदध्यात्, फलोदयपर्य्यन्तं तत्र प्रणिधानं कार्य्यमिति भावः। 'मनु बोधने' अव-पूर्वान्मनेर्ण्यन्ताद् घञ् परिभवार्थे। व्यतिपूर्वात् क्रमेर्घञ् विपरीतार्थे। तदुक्तम्—

"उपसर्गेण धात्वर्थो बलादन्यत्र नीयते।
गङ्गासलिल-माधुर्य्यं समुद्रेणाम्भसा यथा" ॥

इति आख्यातचन्द्रिकायाम् ॥ ३ ॥

**दुरनुबन्धं कार्य्यं नारभेत ॥ ५ ॥**

**देशकालवित् कार्य्यं साधयति ॥ ६ ॥**

निर्दोषकार्य्यस्य दौर्लभ्यं कथयति दोषेति । दोषवर्जितानि दोषशून्यानि दोषरहितानि । तादृशानि, कार्य्याणि जगति दुर्लभानि दुष्प्राप्याणि । लोकानुष्ठितकार्य्येषु प्रायो दोषो विद्यते । अतो दोषमुक्तं कार्य्यं ग्राह्यमनुष्ठेयञ्च, न परिहर्त्तव्यम् । यथा कस्मिन्नपि कार्य्ये दोषो न भवेत्तथा यतितव्यम् । अत्र आभानकञ्च 'दृष्टं किमपि सर्वत्र न निर्दोषं न निर्गुण'मिति । सर्वदा सर्वथा निर्दोषभवने यत्न आस्थेयः । दोष इति । दुष् वैकृत्ये, दुष्यति, ततः 'पचाद्यच्' । वृजी वर्ज्जने, वर्जनम्, ततः क्तः । दुर्लभम् । डु लभष् प्राप्तौ, लभ्यते । लभेः दुरपूर्वात् खल् ॥४॥

अनिष्टसूचक-कार्य्यारम्भं प्रतिषेधति दुरिति । दुरनुबन्धमिति । दुष्टः अनुबन्धो यस्य तत् । तादृशं दोषयुक्तं कार्य्यम् । नारभेत, नारब्धव्यमिति । यस्मिन् कार्य्ये दोषबाहुल्यं गुणोऽल्पीयान्, तादृशमनिष्टसूचकञ्च कार्य्यं नानुतिष्ठेत ।

"अनुबन्धस्तु बन्धे स्याद्दोषोत्पादे विनश्वरे ।
मुख्यानुयायि बाले च प्रकृतस्यानुवर्त्तने" ॥

इति मेदिनी । मुख्यं पित्रादिकमनुयाति यः शिशुस्तस्मिन् । प्रकृतस्य प्रारब्धस्यानुवर्त्तनेऽनिवर्त्तने । 'दोषोत्पादेऽनुबन्धः स्यात् प्रकृत्यादि विनश्वरे' इत्यमरोऽपि । 'बन्ध बन्धने' अनुबध्यते इत्यनुबन्धः । घञ् प्रत्ययेन सिद्धम् । अन्यत् सुगमम् ॥ ५ ॥

देशकालविदो हि कार्य्यसाधने सामर्थ्यं वक्ति देशेति । देशो

## कालातिक्रमात् काल एव तत्फलं पिबति ॥७॥

जनपदः। कालः पूर्वाह्लादिः, तदानीं कार्य्योपलक्षितसमयो वा। एतौ वेत्तीति, तद्विद् जनः, स्वं कार्य्यम् अनायासेन साधयति सम्पादयतीत्यर्थः। तथाचोक्तं—

"देशं कालं तथात्मानं द्रव्यं द्रव्यप्रयोजनम्।
उपपत्तिमवस्थाञ्च ज्ञात्वा कार्य्यं समारभेत्" ॥

देशः, 'भवेज्जनपदो जानपदोऽपि जनदेशयो'रिति विश्वमेदिन्यौ। दिश् अतिसर्जने, दिशति। 'पचाद्यच्'। अथवा ततो दिश्यते इति घञ्। 'लोकानां कारणं कालो राजा कालस्य कारणम्' इति वासवदत्ताव्याख्याने जगद्धराः। 'कल संख्याने शब्दे च'। कल्यते, कर्म्मणि घञ्। कालयति सर्वम्, ण्यन्तात् पचाद्यच् वा ॥ ६ ॥

कालातिक्रमे कार्य्यहानिं वक्ति कालेति। कालस्य समयस्यातिक्रमादतिपातादतिसमयक्षेपादिति, स्वयं तत् समय एव तस्य कार्य्यस्य फलं शुभाशुभरूपं यत्तत् पिबति अपहरति यस्य कार्य्यस्य य एवोपयुक्तः कालः तस्मिन् तत् कार्य्यं विधेयम्। यथा यौवने उपयमः। वर्षासु वृष्टिः। रोगोत्पत्तिमात्रं योग्यागदप्रयोगः। कार्य्यारम्भात् प्राक् पश्चाद्वा समयक्षेपोऽनभिधेय इति भावः। किं वा कार्य्यं समारभ्य तदसमाप्तौ तत्फलं कालः पिबति। अत एव राजनीतावुक्तं—

"कः कालः कानि मित्राणि को देशो कौ व्ययाव्ययौ।
इति विचिन्त्य मतिमान् कार्य्यं युक्तं समारभेत्" ॥ इति।

# क्षणं प्रतिकालविक्षेपं न कुर्य्यात् सर्वकृत्येषु ॥८॥
# देशे काले च कृतं फलवत् ॥ ९ ॥

'कालो मृत्यौ महाकाले समये यमकृष्णयोः' इति मेदिनी। 'कल शब्दसंख्यानयोः' 'कल प्रेरणे' वा। कलयति, कल्यते च, णयन्तात् पचाद्यच्। कर्म्मणि घञ् वा। यत्तु क्षीरस्वामिभि-रुक्तं तद्व्याख्याने 'कलयति भूतान्यायुर्वा' इति। तन्न अदन्त त्वेन तस्य वृद्ध्यप्रसङ्गात्। अन्ये तु कल उपदेशे, कल्यते, घञा सिद्धमिति प्रोचुः ॥ ७ ॥

सर्वकार्य्येषु कालविक्षेपस्य प्रतिषेधमाह क्षणं प्रतीति। क्षणं समयविशेषः। तं सूक्ष्मकालं प्रति सर्वेषु कृत्येषु कार्य्येषु। कालविक्षेपं समयक्षेपं न कुर्य्यान्नैव विदध्यात्। अत्रेत्थं पाठा-न्तरमपि दृश्यते 'क्षणं प्रति कालस्वरूपं दर्शयति कालकृतेषु' इति। कालकृतेषु तत्कार्य्ययोग्यकाले आरब्धेषु कर्म्मसु। क्षणः निर्व्यापार स्थितिरूपः कालः। अन्यत् सुबोधम्।—

"क्षणः कालविशेषे स्यात् पर्वण्यवसरे महे।
व्यापारविफलत्वे च परतन्त्रत्वमध्ययोः" ॥

इति हैमश्च। उक्तञ्च—

"कृषेर्वृष्टिसमायोगाद् दृश्यन्ते फलसिद्धयः।
तास्तु काले प्रदृश्यन्ते नाकाले तु कथञ्चन" ॥ इति।

'क्षणु हिंसायाम्, क्षणोति'। ततो हि 'पचाद्यच' ॥ ८ ॥

यथोक्तदेशकालानुष्ठितस्य कर्म्मणः फलवत्त्वं कथयति देशेति। देशे जनपदे, तत्कार्य्योपयोगिस्थाने वा। यथा कुङ्कमोत्पत्तिः

**देशकालविहीनं कार्य्यं सुसाधमपि दुःसाधम् ॥१०**
**परीच्यकारिणि श्रीश्चिरं तिष्ठति ॥ ११ ॥**

---

काश्मीरे एव नान्यत्र प्रागज्योतिःपुरे, यथा वा गान्धारे एव द्राक्षोत्पत्तिर्न तु वङ्गे। यथा तपश्चरणं हरद्वारादौ न तु हट्टे मरुस्थाने वा। काले तत्तत्कार्य्योपयोगिसमये, यथा शिक्षा शैशवे कैशोरे च न तु वार्द्धक्ये, माधवे पिकरवो न तु मकरे। दानं ग्रहणसंक्रान्त्यादौ न तु पर्य्युदस्तकाले। चकारेण योग्यपात्रं समुच्चिनोति, तेन योग्येनानुष्ठितं कर्म्म फलवत्। नायोग्येन। योग्यस्य कार्य्ये नियोगः तस्मिन् दानञ्च सफलमिति शेषः। यद्वा नद्यम्बु वृष्ट्यम्बुभिः धान्यादिभिश्च, पालितो हि सम्पन्नो देशः। दिश अतिसर्ज्जने, दिशति। ततः पचाद्यच्। प्राङ्निगदितमन्यत् ॥ ८ ॥

देशकालविरहितकार्य्यस्यातिकष्टसाध्यत्वमाह देशेति। देशकालाभ्यां विरहितं कार्य्यं सुसाधमपि सुसाध्यमनायाससम्पाद्यमपि दुःसाधमतिकष्टेन साधनीयं स्यादिति। अतोऽयोग्यदेशे काले चारब्धं कार्य्यं न फलाय भवतीति भावः। विहीनम्। ओहाङ् त्यागे, हीयते। 'घु मा स्था' इत्यादिना इत्वम्। दुःखेन साध्यते यत्तद्दुःसाधम्। सुगममन्यत् ॥ १० ॥

कस्मिन् मानवे रमा चिरं तिष्ठति तदाह परीच्येति। परीच्यकारिणि समीच्यकारिणि प्रेक्षापूर्वकारिणि पुंसीति यावत्। तादृशे मानवे श्रीः सम्पदैश्वर्य्यम्। चिरं सुदीर्घकालं तिष्ठति। तदुक्तं सूरिभिः 'अपरीच्य न कर्त्तव्यं कर्त्तव्यं सुपरी-

नीतिज्ञो देशकालौ परीक्षेत ॥ १२ ॥

सर्वाश्च सम्पद उपतिष्ठन्ति ॥ १३ ॥

---

क्षितम्' इति। अन्यच्च राजनीतौ—

"परीक्ष्य प्रथमं भृत्यान् उत्तमाधममध्यमान्।

योजयेत्तादृशेष्वेव नृपतिः स्वेषु कर्म्मसु" ॥

परीक्ष्य सर्वतः सम्यग् दृष्ट्वा मनसि समालोच्य वा करोतीति परीक्ष्यकारी, तस्मिन्। कृञ् करणे, करोति। 'साधुकारिणि च' इति णिनिः। परीक्ष्यकारी प्रेक्षापूर्वकारी, तथाहि कलापटीकायां—

"यस्यामुत्पद्यमानायामविद्यानाशमर्हति ॥

विवेककारिणी बुद्धिः सा प्रेक्षेत्यभिधीयते" ॥ ११ ॥

नीतिनिपुणस्य देशकालपरिदर्शनमाह नीतीति। नीतिज्ञो नीतिशास्त्रविद्, यथार्थन्यायज्ञः व्यवहारदक्ष इति। देशकालौ प्रागुक्तावेतौ सम्यक् परीक्षेत परितो दृष्ट्वा सर्वं कार्य्यमनुतिष्ठेत। तात्कालिकदेशं कार्य्योपयोगि-समयञ्चाज्ञात्वा अनालोच्य किमपि कार्य्यं न कुर्य्यात्। अत्र समयेऽस्मिन् स्थाने च तत्कर्म्म सम्भविष्यति नवेति मनसि विचार्य्य तद्देशे काले च कर्म्म कुर्य्यादिति। स्पष्टार्थमन्यत्। अत्र नीत्युपपदाज्जानातेः 'आतोऽनुपसर्गे' कः ॥ १२ ॥

पूर्वोक्त-समीक्ष्यकारिणां पुंसां न केवलं श्रीश्चिरं विराजते अपि सर्वसम्पदो नितरां वर्त्तन्ते तदाह सर्वाश्चेति। सर्वा निखिलाः सम्पदः सम्पत्तयः। देश काल-वस्तुपरीक्षकस्य

**भाग्यवन्तमप्यपरीक्ष्यकारिणं श्रीः परित्यजति ॥ १४ ॥**

**ज्ञानानुमानैश्च परीक्षा कर्त्तव्या ॥ १५ ॥**

---

इत्यर्थम्। उपतिष्ठन्ति स्वयमेवागच्छन्ति। तदुक्तं शुक्रदेवैः—'उत्साहिनं पुरुषसिंहमुपैति लक्ष्मी'रिति। सम्पत् सम्पत्तिश्चेति। ग्रन्थान्तरे 'सर्वोपायेन परिगृह्णीत्' इति सूत्रे पाठान्तरमप्यस्ति। सर्वैरुपायैः परिगृह्णीयात् सर्वाः सम्पदः इत्यर्थः। पद गतौ, सम्पद्यते सम्पदनं वेति 'सम्पदादिभ्यो'दिति वार्त्तिकात् क्विप्॥ १३ ॥

यद्यसमीक्ष्यकारी सौभाग्यवान् स्यात्तदा तत्रापि श्रीर्जहातीति तदाह भाग्येति। भाग्यवन्तं लक्ष्मीमन्तम् अपि अपरीक्ष्यकारिणम् असमीक्ष्यकर्त्तारं श्रीः सम्पत् परित्यजति सन्त्यजतीति। अपि शब्दादन्यमप्यभाजनं श्रीः परित्यजत्येव। अतः सर्वदा सर्वतः परीक्ष्यैव कर्म्म कुर्य्यात्। तदुक्तं नीतिज्ञैः 'अपरीक्ष्य न कर्त्तव्यं कर्त्तव्यं सुपरीक्षितम्' इत्युक्तम्। भाग्यमिति। 'भाग्यं कर्म्म शुभाशुभम्' इति हैमः। भज सेवायाम्, भज्यते 'ऋहलोर्ण्यत्'। 'चजोः' इत्यादिना कुत्वम्। 'भागाद्यच्च' इति क्षीरस्वामी। भाग्यं विद्यतेति मतुव। 'श्रीर्वेषरचना शोभा भारती सरलद्रुमे। लक्ष्म्यां त्रिवर्ग-सम्पत्तौ' इति विश्वमेदिनीकारौ। 'श्रिञ् सेवायाम्' सर्वैर्जनैः श्रीयते इति 'क्विब्वचि' इत्यौणादिकसूत्रेण क्विप्॥ १४ ॥

विषय-परीक्षया उपायमाह—ज्ञानेति। 'इन्द्रियार्थ सन्नि-

**यो यस्मिन् कर्म्मणि कुशलस्तं तस्मिन्नेव नियोजयेत् ॥ १६ ॥**

---

कर्षोत्पन्नमव्यपदेश्यमव्यभिचारि-व्यवसायात्मकं ज्ञानं प्रत्यक्षम्' इति न्यायसूत्रम् । ज्ञानं विषयाऽवबोधनं विषय-प्रतीतिः । तदुपाय-शास्त्रजनितं वा । अनुमानम्-अनुपश्चात् प्रत्यक्षानन्तरं ज्ञानम्, नित्यसम्बन्धिनोः एकस्य दर्शनेनापरज्ञानमनुमितिः । अनुमितिकरणमनुमानम् । ताभ्यां श्रुतानुमान-ज्ञानाभ्यां परि सर्वतः ईक्षणं प्रकृष्टमीक्षणं वा कर्त्तव्यम् । अनीक्षितकार्य्यकरणेऽवश्यं हानं स्यात् । अत्रानुमानैरिति बहुवचनादुपमान-शब्दयोः संग्रहः । उपमानशब्दाभ्यामपि वस्तु याथार्थ्यम् अवबुध्यते । तदुक्तं न्यायदर्शने 'प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानि' । कापिले पातञ्जले चोपमानं हित्वा प्रत्यक्षानुमानागमाः त्रय एव प्रमाणानि गृहीतानि । तत्र तत्रोपमानमनुमानेऽन्तर्नीतम् । प्रमीयते वस्तुयाथार्थ्यं निश्चीयते येन तत् प्रमाणमिति करणे ल्युट् । परीक्षेति । ईक्ष दर्शने, परीक्ष्यते । 'गुरोश्च' इत्यः, ततष्टाप् । ज्ञा अवबोधने, जानातेः करणे ल्युट् । प्रत्यक्षादिभिश्चतुर्भिरुपायैर्विषयानुशीलनं कार्य्यमिति भावः ॥ १५ ॥

यस्मिन् कर्म्मणि यो योग्यस्तत्र तन्नियोगमाह य इति । यो जनः सचिवादिः । यस्मिन् राष्ट्रादौ कर्म्मणि । कुशलो निपुणो दक्ष इति । तं जनन्तस्मिन्नेव कर्म्मणि नियोजयेत् । तस्मै तद्योग्यकार्य्यभारार्पणं कुर्य्यात् । तथा च भोजभूपः—

# दुःसाधमपि सुकरं करोति ॥ १७ ॥

---

'स्थानेष्वेव नियोज्यानि भृत्याश्चाभरणानि च ।
नहि चूड़ामणिः प्राज्ञैः पादादौ प्रतिबध्यते' ॥

अन्यच्च चाणक्यराजनीतौ—

'परीक्ष्य प्रथमं भृत्यान् उत्तमाधममध्यमान्' ।

इत्याद्युक्तं प्राग् ।

'प्राज्ञं नियोजयेत् कार्य्ये ततो राज्ञस्त्रयोगुणाः ।
यशश्चैव तथा स्वर्गः पुष्कलश्च धनागमः' ॥ इति च ।

'कुशलः शिक्षिते त्रिषु । क्षेमे च सुकृते चापि पर्य्याप्तौ च नपुंसकम्' इति विश्वमेदिन्यौ । 'पर्य्याप्तः कुशलेऽभिज्ञे' इति च । शल चलने, कौ पृथिव्यां शलति, ततः पचाद्यच् । कुशान् लातीति वा कः । निजर्थे लक्षणा वा कौ शलति चालयति राजकार्य्याणि । अथवा 'कुः पापेषदर्थयोः' । बुद्धिवैभवात् कोः पापात् शलतीति च ॥ १६ ॥

योग्यजन-नियोगस्य फलमाह दुरिति । दुःखेनायासेन साध्यते सम्पाद्यते यत् तद्दुःसाधम् । क्लेशेन साध्यं कार्य्यमिति । तादृशं कार्य्यम् नियुक्तेन निपुणेनानायाससाध्यं कर्त्तुमर्हति । तथा च प्रधाने कठोरकर्म्मणि वा राज्ञा नियुक्तः सुदक्षो लोकः स्यात्तदा स दुष्करं कर्म्मानायासेन सम्पादयिष्यतीति भावः । साध संसिद्धौ, दुःसाधनं, दुःसाध्यते वा घञा सिद्धम् । सुष्ठु

अज्ञानिना कृतमपि न बहु मन्तव्यम् ॥१८॥

याहच्छिकत्वात् कृमिरपि रूपान्तराणि किं न करोति ? ॥ १९ ॥

सुखं करोति इति अच्। सुक्रियते वा 'इषद्:सुषु' इत्यादिना करोतेः खल् ॥१७॥

अज्ञजनकृतकार्य्यस्य बहुफलाभावमाहाज्ञानिनेति। अज्ञानिना अल्पज्ञेन मूढ़ेन वा कृतं यत् कार्य्यं तन्न बहु अधिकफलदं सम्पूर्णं वा। अपि निश्चितं न मन्तव्यं नैव बोद्धव्यम्। यतस्तस्य कार्य्यसम्पादने शक्त्यभावात् कार्य्यमपि तथैव विकृतं विफलं वा भविष्यतीति। तदुक्तं राजनीतौ—

'नियोज्य मूर्खं कार्य्ये च राज्ञो दोषा स्त्रयस्तथा।

अयशश्चार्थनाशश्च नरके पतनं तथा' ॥

तत्रैव च 'गुणवन्तं नियुञ्जीत गुणहीनं विवर्जयेत्'। इति।

'अज्ञस्तु जड़मूर्खयो'रिति विश्वः। अत्राज्ञानिनेति आर्षवत्सौत्रिकं पदं बोध्यम्। अज्ञेनेति सुष्ठु। यथा वा 'तरुणज्वरो' 'अक्षरणीति' वज्ज्ञेयम्। अथवा ज्ञानमस्यास्तीति ज्ञानी, न ज्ञानीत्यज्ञानीति किञ्चित् समाधानम् ॥ १८ ॥

स्वेच्छामात्रपूर्वककार्य्यानुष्ठाने पौरुषं तत्फल विगानञ्चाह याहच्छिकेति। याहच्छिकत्वात् स्वैराचारित्वात् अविवेकात् अविमृश्यकारित्वादिति यावत्। कृमिरपि क्षुद्रकीटविशेषोऽपि

सर्वाश्च सम्पदः सर्वोपायेन परिग्रहेत् ॥ २० ॥

---

कैव कथा मनुजानाम्। रूपान्तराणि कर्त्तव्यस्यान्यथाभूतानि किं न करोति अवश्यं करोत्येव। अतः शिक्षा-विवेकपूर्वकं कर्म्म-करणं श्रेयः न यथेच्छम्। तेन कार्य्यवैकल्यमनिष्टपातश्च। 'यदृच्छा स्वैरिते'त्यमरः। 'ऋच्छ गतौ' ऋच्छनम् ऋच्छा। 'गुरोश्च हल' इत्यप्रत्ययः। या ऋच्छा, 'विशेषणम्' इत्यादिना समासः। यदृच्छयतीति 'चरतीत्या'दिना ठक्। 'कीटे च क्रमि-वत् क्रमिः' इति रभसः। 'क्रमिर्ना क्रमिवत् कीटे लाक्षायां क्रमिले खरे' इति मेदिनी च। क्रमु पादविक्षेपे, क्रामति। 'क्रमि-तमि इत्' इति किः। 'बाहुलकात् सम्प्रसारणमपि' ॥ १९ ॥

अखिलोपायैः सर्वसम्पद्ग्रहणस्य सौहित्यमाह सर्वाश्चेति। सर्वोपायेन सकलकौशलेन सामादिभिर्वा। सर्वाः सम्पदः अखिल-सम्पत्तीः भू-रत्न-मान-धर्मविद्यादीन्। परिग्रहेत् सम्यग्गृह्णी-यात् उपार्ज्जयेदिति। अन्यतो हि न्यायतो धनानि ग्राह्याणि। यदाह, शुक्रः—

"देवद्विजातिशूद्राणामुपभोगाधिकं धनम्।
क्षीणकोशेन संग्राह्यं प्रविचिन्त्य विभागतः" ॥

अन्यच्च—

"पौराणां राष्ट्रजातानां ग्राह्यं साम्ना च नान्यथा।
दर्शयित्वा तथा दायान् ग्राह्यं वित्तं ततो नृपैः ॥"

**सिद्धस्य कार्य्यस्य प्रकाशनं कर्त्तव्यम् ॥ २१ ॥**

**ज्ञानवतामपि दैवमानुष-दोषात् कार्य्याणि दुष्यन्ति ॥ २२ ॥**

---

"तथा शाश्वतलक्ष्मीकान् पुरोहित-समन्विणः ।
श्रोत्रियांश्चैव सामन्तान् सीमापालान् तथैव च ।
गृहं गत्वा प्रयाचेत यथा ते तुष्टिमाययुः ॥"

तथा कीर्त्ति-सौशील्य-स्वास्थ्य-शिष्टाचरण-दाक्षिण्य-विद्याग्रहणादीनि समासाधनीयानि । यद्यपि परिपूर्वाद् ग्रहेः पत्नीपरिजनाद्यर्थता । तथापि स्वामित्वेन स्वीकारार्थत्वमत्र बोध्यम् । 'आदानमूलशापाः परिग्रहाः' । ग्रह उपादाने, परिगृह्यते, परिग्रहणम् । परिग्रहेदित्यार्षवज्ज्ञेयम् । 'ग्रह' इत्यप् । 'विभाषा ग्रह' इत्यप्रत्ययो वा ॥ २० ॥

सम्पन्ने कार्य्ये तस्य प्रकाशः नासम्पन्ने तदाह सिद्धस्येति । सिद्धस्य निष्पन्नस्य कार्य्यस्य कर्म्मणः । प्रकाशनं लोके प्रचारः । नासम्पन्नस्य प्रकाशः कर्त्तव्यः । तेन कार्य्यनाशः क्लेशः शत्रोः सन्धानलाभश्च । यतो जाते प्रकाशे पश्चात् कार्य्यं यदि विघ्नबाहुल्यात् शत्रोरन्वेषणाच्च न सम्पत्स्यते तदा कर्त्तुरसामर्थ्यं वैफल्यञ्च स्यादिति भावः । सिद्धेति । 'सिद्धे व्यासादिके देवयोनौ निष्पन्नमुक्तयोः । नित्यप्रसिद्धे' इति हैमः । 'सिद्धे निर्वृत्तनिष्पन्नौ' । 'षिधु संराद्धौ' सिध्यति । 'गत्यर्था' इत्यादिना क्तः । 'प्रकाशः स्फुटहासयोः उद्योतेऽतिप्रसिद्धे च' । 'प्रकाशोऽतिप्रसिद्धे

## दैवं शान्तिकर्म्मणा प्रतिषेद्धव्यम् ॥ २३ ॥

स्यात् प्रहासातपयोः स्फुटे' इति विश्वः। 'काशृ दीप्तौ' प्रकाश्यते। प्रपूर्वात् काशेः ल्युट् ॥ २१ ॥

ज्ञानवतां लोकानामपि दैवमपरिहार्य्यमाह ज्ञानेति। ज्ञानवतां प्रज्ञावतां विदुषाम्। अपि निश्चितम्। दैवं ग्रहवैगुण्यं अद्भुतादि च। तच्च त्रिविधं, दिव्यं भौममन्तरिक्षञ्च। दिव्यम् अशनिपातादि। आन्तरिक्षं धूमकेतूद्गमादि। भौमं भूकम्पादि। मानुषं हिंसा-द्वेष-विरुद्धषड़यन्त्राततायित्वादि। तयोर्द्दोषात् कार्य्यप्रहानादनुष्ठीयमानानि कार्य्याणि दुष्यन्ति विनश्यन्ति चेति। अतः कार्य्यनिष्पादने सततं विदुषामपि जागरूकत्वेन भाव्यम्। अज्ञानात्तु कार्य्ये दोषोऽवश्यम्भावीति। तदुक्तम् वृहच्चाणक्य—

"विषमां हि दशां प्राप्य दैवं गर्हयते नरः।
आत्मनः कर्म्मदोषांश्च नैव जानात्यपण्डितः॥"

'ज्ञा अवबोधने' ज्ञायते इति जानातेर्ल्युट्। ज्ञानं विद्यते येषान्ते ज्ञानवन्तः तेषामिति। तच्च विषयेन्द्रियसन्निकर्षजनितम्। देवादागतं दैवम्। 'तत आगतः' इत्यण्। मानुष इति 'मनोरपत्यम्'। 'मनोर्जातावञ्यतौ षुक च'। सिद्धान्तकौमुद्या बालमनोरमायामन्यत् ॥ २२ ॥

दैव विघ्न प्रशमनोपायमाह दैवमिति देवागतविपदि, भूकम्पाशनिपात-प्रबलप्रभञ्जन-ग्रहर्त्तवैगुण्य-दुर्भिक्ष-महामारीषु।

## मानुषीं कार्य्यविपत्तिं कौशलेन वारयेत् ॥२४॥

---

शान्तिकर्म्मणा। आथर्वणमन्त्रशास्त्रोक्त-शान्तिस्वस्त्ययनाद्यनुष्ठानेन तत्प्रतिषेद्धव्यम्। जातविघ्नप्रतिकारकरणं शान्तिः। भाव्यनिष्ट-प्रशमनकरं स्वस्त्ययनमिति। यथा कवचधारणाच्छस्त्रादेर्विनिवारणेन देहरक्षणम्। तदुक्तं 'यथा शस्त्रप्रहाराणां कवचं विनिवारक'मिति। तथा मणिमन्त्रौषधादीनामचिन्त्यशक्त्या प्रशमनकरणम्, दैवविघ्नस्य सङ्कोचश्च। यद्वा संयम-नियमपालनेन निर्दिष्टायुर्वृद्धिः। असंयम-स्वैराचारेण तस्य ह्रासश्चेति। आथर्वण-कौशिकसूत्रे शान्तिपौष्टिकं कर्म्म पुष्कलं वर्णितमस्ति। पुष्कर-शान्त्यद्भुतशान्ति-महामृत्युञ्जय-नवग्रहयाग-प्रत्यङ्गिरानुष्ठानानी"त्येतानि ज्ञेयानि। तदुक्तं—

'वर्त्त्याधार-स्नेहयोगाद् यथा दीपस्य संस्थितिः।
विक्रियाऽपि च दृष्टैव अकाले प्राणसंक्षयः" ॥

वर्त्त्याधारस्नेहाग्निषु सत्सु दीपनिर्व्वाणं प्रबलसमीरणेन दृश्यते, उत्तालतरङ्गायिते नवनिर्म्मित-सुदृढ़-विशालपोतस्य प्रभञ्जनप्राबल्येन च वारिधौ मज्जनं भवतीति दैवं मन्तव्य ॥ २३ ॥

मनुष्यकृतविघ्नोपशमनोपायमाह मानुषीमिति। मानुषीं मनुष्यसम्बन्धिनीं तत्कृतां वा, कार्य्ये कर्म्मणि विपत्तिमापदं कौशलेन बुद्धेर्नैपुण्येन वारयेत् प्रतिषेधयेत्। मानुषी विपत्, अग्नि-गरदानं, धनापहरणं, गुप्तषड़यन्त्रं, जिघांसा, अभिचारादिः। एतत् सर्वं प्रतिभाचातुर्य्येण निरत्ययस्थानाध्यसनादिना

## कार्य्यविपत्तौ दोषान् वर्णयन्ति बालिशाः ॥२५॥

---

प्रतिषेद्धव्यम्। यथा युधिष्ठिरादीनां कौरवेभ्य आत्मत्राणम्। मानुषोमिति। मनोरपत्यं मनुष्यः। 'मनोर्जातावञ्यतौषुक् चेति' षुक्। स्त्रियान्तु 'हयगवय' इत्यादि-वार्त्तिकस्य प्रतिप्रसवेन ङीप्। 'हलस्तद्धितस्य' इति यकारलोपः। मनुषी, ततो 'टिड्ढा' इत्यादिना ङिपी मानुषी, जातिविवक्षायां वा ङीषः परत्वादनञन्तत्वाद् ङीन्। विपदनं विपदनया वेति। विपूर्वात् पद्धातोः 'सम्पदादिभ्यो'दिति वार्त्तिकेन क्विप्, ततः क्तिन्। कुशलस्य निपुणस्य कर्म्म कौशलम्। शल चलने सम्बरणे च, कुत्सितं शलति संवृणोति, ततः पचाद्यच्। 'पर्य्याप्तः कुशलोऽभिज्ञ' इति कोषः॥ २४ ॥

कार्य्ये विघ्ने जाते तत् कर्त्तुर्दोषख्यापनं बालिशेन क्रियते तदाह कार्य्येति। अनुष्ठिते कार्य्ये कर्म्मणि विपत्तौ विघ्ने समुपस्थिते तत्कर्त्तुर्दोषान् कार्य्यफलहानिजनकान् बालिशा मूर्खाः वर्णयन्ति कथयन्ति। न तु विद्वांसः। यतः—

"गच्छतः स्खलनं क्वापि भवत्येव प्रमादतः।
हसन्ति दुर्जनास्तत्र समादधति सज्जनाः"॥

खलास्तु मक्षिका-व्रण न्यायेन प्रायो दोषाननुसन्दधते। प्राज्ञस्य तु गुणदोषविवेके अधिकारिता नान्यस्य। तदुक्तं दण्डाचार्य्यैः:—

"गुणदोषानशास्त्रज्ञः कथं विभजते जनः।
किमन्धस्याधिकारोऽस्ति रूपभेदोपलब्धिषु" ॥

**कार्य्यार्थिना दाक्षिण्यं न कर्त्तव्यम्॥ २६॥**

**क्षीरार्थी वत्सोमातुरूधः प्रतिहन्ति॥ २७॥**

---

'बालिशस्तु शिशौ मूर्ख' इति मेदिनी। शो तनुकरणे, बालिं श्यति 'आतोऽनुप' इत्यादिना कः। अथवा बालिशस्य मत्स्य-वेधनस्यार्थं, मूर्खत्वादपूज्यत्वादिति॥ २५॥

कार्य्यार्थिनां दाक्षिण्य-निषेधमाह कार्य्येति। कार्य्यार्थिना पुंसा दाक्षिण्यमौदार्य्यं सारल्यञ्च न कार्य्यम्। समुपस्थिते कार्य्ये अति सारल्यात्तत्र शत्रुभिः कृतसन्धाने च कार्य्यवैफल्यं स्यादतो न तत् कर्त्तव्यम्। तदुक्तं 'नवगोप्यानि यत्नतः'। 'मतिमान्न प्रकाशयेत्' इति च। कार्य्यमर्थः प्रयोजनमस्येति मत्वर्थीयः। तेन कार्य्यार्थिना। दक्षिणस्योदारस्य भावो दाक्षिण्यम्। 'दक्षिणे सरलोदारौ'। 'दक्षिणो दक्षिणोद्भूत-सरलच्छन्दवर्त्तिषु' इति मेदिनी। दक्ष वृद्धौ शीघ्रार्थे च। दक्षते। 'द्रु दक्षिभ्यामिनन्'। केचित्तु परस्मैपदमिच्छन्ति दक्षधातोस्तच्चिन्त्यम्॥ २६॥

प्रयोजनविशेषे क्षीरार्थिनः कार्य्यमाह क्षीरेति। क्षीरं दुग्धं पय इति। तत् प्रार्थी जनः। वत्सो गवादीनाम्। मातुर्धेन्वादेः। उधोऽधो देशे जङ्घादेशे वा प्रतिहन्ति बध्नाति। यद्वा क्षीरार्थिना गोपेन वत्सः स्वयं मातुः ऊधः स्तनदेशे क्षीरनिर्गमनार्थं तदाननं बहुवारं च प्रतिहन्यते। अत्र मातुर्जङ्घा स्तनदेशो वा, स नैव बन्धनाघातयोग्यः परं कार्य्यानुरोधाद् योग्य एव। एवमनुष्ठेय कार्य्येऽपि तत् सिद्धर्थं प्रयोजनवशादसारल्यादिकं

## नास्ति दैवात् कार्य्यविपत्तिः ॥ २८ ॥

## न दैव प्रमाणानां कार्य्यारम्भः ॥ २६ ॥

कार्य्यमिति। विष्णुशर्म्मभिरप्युक्तं 'मातृजङ्घा हि वत्सस्य स्तम्भो भवति बन्धने' इति। वत्स इति। वद व्यक्तायां वाचि, वद स्थैर्य्ये वा, वदति सामर्थ्यम्। 'वृतृवदिहनि' इत्यौणादिकः सः। 'वत्सः पुत्रादिवर्षयोः। तर्णके नोरसि क्लीवम्' इति मेदिनी। 'पुत्रादौ तर्णके वर्षे वत्सो वत्सन्तु वक्षसि' इति रुद्रश्च। तृणभोजित्वात् तर्णको गोवत्सः। मातुरूधः इत्यत्राध इति पाठान्तरं क्वापि दृश्यते ॥ २७ ॥

दैवात् कार्य्ये विपत्त्यभावमाह नेति। दैवाच्छुभादृष्टादिष्ट-सूचकं प्राक्तनकर्म्मणो वा। कार्य्येऽनुष्ठेयकर्म्मणि। विपत्तिः कार्य्यव्याहतिर्नास्ति। यद्वा सत्त्वे प्रबलपुरुषकारे दैवात् कार्य्य-विपत्तिर्नास्ति। यतः—

"दैवं पुरुषकारेण दुर्ब्बलं ह्यपहन्यते।
न देवेन विपन्नार्थः पुरुषः सोऽवसीदति" ॥

इति च। एवं पुरा ध्रुव-मार्कण्डेय-विश्वामित्र-चाणक्यादिभिः पुरुषकारप्राबल्यं प्रदर्शितम्। अन्यत् व्याख्यातपूर्वम्। 'अप्रयत्नात् कार्य्यविपत्तिर्भवे'दिति क्वदिदादर्शग्रन्थे सूत्रान्तरमस्ति। अन्य-सूत्रेण तस्य गतार्थत्वान्नेह व्याख्यायते ॥ २८ ॥

दैवप्रमाण-पुरुषाणां कार्य्यारम्भ-प्रतिषेधमाह नेति। दैवं प्रागुक्तम्। तदेव प्रमाणं येषां पुरुषाणां तेषाम्। कार्य्यारम्भ-

## कार्य्यवाह्यो न पोषयत्याश्रितान् ॥ ३० ॥

---

स्तदुपक्रमः अभ्यादानं न युक्तम् । यतो दैवशरणानां पुरुषकारो-दुर्ब्बलः दैववाधा तु प्रबला । अतो दैवभयात् कार्य्ये विरति-सम्भावना स्यात् । तत्र कार्य्यारम्भो न समीचीनः । प्रमीयते येन तत्प्रमाणम् । प्रपूर्वान्मातेर्ल्युट् । 'दैवं दिष्टं भागधेय'मित्यमरः । देवादागतन्दैवम् । 'तत आगतः' इत्यण् ।

"प्रमाणं नित्यमर्य्यादा शास्त्रेषु सत्यवादिनि ।

इयत्तायाञ्च हेतौ च क्लीवैकत्वे प्रमातरि" ॥

इति मेदिनी । आरम्भणमारम्भः । रभ् राभस्ये, ततो घञ् । 'रधिजभोरचि' इति नुम् । मतान्तरे तु अत्र सूत्रे रभिधातो रग्रहणात् । तस्मात् 'रभे रशव् लिटोः' इत्यनेन नुम् प्रत्ययो वक्तव्य इत्युक्तं प्राग् ॥ २८ ॥

कार्य्यवहिर्भूतस्य भृत्यादिपोषणेऽशक्तिमाह कार्य्येति । कार्य्याद् वाह्यो बहिःस्थः कार्य्यशून्योऽकर्म्मण्य इति यावत् । तादृशः पुरुषः कार्य्याभावात्तदनुष्ठानेऽसामर्थ्याच्च आश्रितानन्-गतान् कर्म्मकरान् । न पोषययि न पालयति । सक्तु राज्य-शासन शिल्पवाणिज्यादिकर्म्मसु तदनुरोधात्तान् पालयति नासक्तु तेषु । वह प्रापणे, उह्यते । वहिर्भवो वाह्यः । इसप्रत्ययः । ततो वहेर्ण्यत् । अत एव ववयोरभेदः । आङ्पूर्वात् 'श्रिञ् सेवायाम्' आश्रियते, ततः क्तः । आश्रयं प्राप्तः ॥ ३० ॥

**यः कार्य्यं न पश्यति सोऽन्धः ॥ ३१ ॥**

**प्रत्यक्ष-परोक्षानुमानैः कार्य्याणि परीक्षेत ॥३२॥**

---

कार्य्याद्रष्टुर्दोषमाह य इति। यो नृपः कार्य्यं राज्यपालनादि कार्य्यं न पश्यति नावलोकयति, स्वयं तदनुचरो वा सोऽन्धः चक्षुर्विहीनः । यद्वा यो लोकः साधारणं कार्य्यं न पश्यति तेन च स्वानिष्टं स्यादतः सोऽन्धः। तथा चोक्तम् 'राजा पश्यति कर्णाभ्याम्'। 'राजानश्चारचक्षुषः' इति च। राजविषये तु कार्य्यावलोकने विश्वस्ताः सुयोग्याः कर्म्मकरा दूता वा एव युक्ताः। 'अन्धस्तु तिमिरे क्लीबं चक्षुर्हीनेऽभिधेयवत्' इति मेदिनी। विद्वांश्च शास्त्रचक्षुषा पश्यति। तदुक्तं 'सर्वस्य लोचनं शास्त्रं यस्य नास्त्यन्ध एव सः' इति। अन्ध दृष्ट्युपघाते, अन्धयति। ततः पचाद्यच् ॥ ३१ ॥

कार्य्यपर्य्यवेक्षणे उपायानाह प्रत्यक्षेति। प्रत्यक्षं विषयेन्द्रियसन्निकर्षजनितज्ञानजनकं प्रमाणम्। अक्षमक्षं प्रति वर्त्तते इति प्रत्यक्षं प्रतिविषयमिन्द्रियम्। तेन विषयेन्द्रियसन्निकर्षजन्यं ज्ञानम्। तथा च न्यायसूत्रम् 'इन्द्रियार्थसन्निकर्षोत्पन्नमव्यपदेश्यमव्यभिचारि-व्यवसायात्मकं ज्ञानं प्रत्यक्षम्'। अनुमितिकरणमनुमानम्। अक्षाणामिन्द्रियाणां परमतीतं परोक्षमप्रत्यक्षम्। यद्वा शिष्टपरम्पराश्रवणजनितं ज्ञानमिति। एतैः प्रत्यक्षादिभिरुपायैः कार्य्याणि परीक्षेत। परि सर्वत ईक्षेत

**न परोक्ष्यकारिणां कार्य्यविपत्तिः ॥ ३३ ॥**

**परीक्ष्य तार्य्या विपत्तिः ॥ ३४ ॥**

---

सूक्ष्मभावेनावलोकयेत् । तादृशावलोकने न कार्य्यहानिः । अक्षमिन्द्रियं प्रतिगतम् । 'अत्यादयः' इत्यादि वार्त्तिकात् समासः ॥ ३२ ॥

समीक्ष्यकारिणां कार्य्ये विपत्त्यभावमाह नेति । परीक्ष्य-कारिणां प्रेक्षापूर्व्वकारिणां समीक्ष्यकारिणामिति यावत् । कार्य्ये न च विपत्तिर्न कार्य्यहानिर्भवति । नापि प्रतिबन्धकोपस्थितिः । यथा परीक्ष्यकारिणां विक्रमार्कभोजाशोकानाम् । असमीक्ष्य-कारिणान्तु भवत्येव विघ्नः । यथा वेण-रावण-दुर्य्योधन-शिशु-पालानाम् । अत्र कोष-व्याकरणादि निगदव्याख्यातेन व्याख्या-तम् ॥ ३३ ॥

परीक्षया विपदुत्तरणमाह परीक्ष्येति । परीक्षां विना आप-दुद्धार-सम्भावना नास्ति । यत्र विपत् सम्भाव्यते तत्रैव गत्वा स्वबुद्धेः शक्तेश्च परीक्षाप्रदर्शनं विधेयम्, न तु केवलं गृहे स्थित्वा तच्चिन्तनं युक्तम् । यथा रणक्षेत्रगतस्यैव जयः पराजयो वा न तु गृहे शयानस्य । अतः परीक्षया विपत्तिर्विपत्तार्य्या तरणीया भवति नान्येनोपायेन । अत्र विपत्तिरिति पञ्चम्यर्थे प्रथमा । परीक्ष्य इति परीक्षया इत्यर्थः । 'छन्दोवत् सूत्राणि भवन्ती'ति नियमात् । क्वचिदादर्शग्रन्थे सूत्रमिदं नास्ति पूर्वसूत्रेणोक्तार्थ-त्वादिति तदभिप्रायः ॥ ३४ ॥

**स्वशक्तिं ज्ञात्वा कार्यमारभेत ॥ ३५ ॥**

**यः स्वजनं तर्पयित्वा शेषं भुङ्क्ते सोऽमृत-भोजी ॥ ३६ ॥**

---

कार्य्यारम्भे स्वकीय-शक्तिज्ञानस्यावश्यकत्वमाह स्वेति। स्वस्यात्मनः शक्तिः सामर्थ्यं तत्कार्य्यं प्रति योग्यतेति यावत्। तज्ज्ञात्वा मानसे समालोच्य कार्य्यमारभेत। तत्प्रक्रमणं कुर्य्यात्, शक्तेः प्राचुर्य्यात्। यथागस्त्यस्य चुलुकेन जलधिपानम्, नैरावतस्य, तच्छक्तेरभावात्। यथा वा सेतुबन्धप्रबन्धः श्रीरामस्य नान्यस्य नरपतेः। ततः कार्य्यारम्भात् प्राक्,—

स्वशक्तेः प्राबल्य-दौर्बल्ये विचिन्त्य कार्य्यं समारभेत।

राजनीतिपक्षे 'शक्तयस्तिस्रः प्रभावोत्साहमन्त्रजाः'।

'कोषदण्डबलं प्रभुशक्तिः'। 'विक्रमबलमुत्साहशक्तिः'।

'पञ्चाङ्गमन्त्रो मन्त्रशक्तिः'। अन्यत्र 'शक्तिरस्त्रान्तरे गौर्य्या-मुत्साहादौ बले स्त्रियाम्' इति मेदिनी। शक्यते जेतुं यया सा शक्तिः। शक्धातोः 'स्त्रियां क्तिन्' ॥ ३५ ॥

स्वजनतृप्तिसाधनपूर्वकमात्माशनमाह य इति। स्वस्यात्मनो जनाः कुटुम्बाः परिवाराः अतिथयश्च तान् तर्पयित्वा भोजना-प्यायनादिभिः परितोष्य। तदवशेषं भक्ष्यादि-परिशेषं यो भुङ्क्ते अश्नाति, स एव लोकेऽस्मिन्नमृतभोजी। केवलात्मतृप्तिजनक-भोजनस्य शास्त्रे विगानात्। तथा च 'अघं स केवलं भुङ्क्ते यः

## कार्य्यानुष्ठानादाय-मुखानि वर्द्धन्ते ॥ ३७ ॥

पचत्यात्मकारणात्'। 'यो भुङ्क्ते स्तेन एव सः' इति च। आत्मनः शरीरे परस्य सुखदुःखाद्यनुभवे चाविशेषात्। अतः परतृप्तिपूर्वकमेवात्मप्रसाधनं कार्य्यम्। बन्धुतिथि-पोष्य-दीनान्धादीनां भरणं प्रशस्तस्वर्गसाधनम्। तथा च स्मृतौ—

"भरणं पोष्यवर्गाणां प्रशस्तं स्वर्गसाधनम्।

नरकः पीड़ने चैषां तस्मात्तान् विभृयाद्बुधः" ॥ इति।

स्वजनादीनां तर्पणं विना यो भुङ्क्ते स पापभुक्। तादृशभोजनं पश्वादीनामप्यस्ति। सामाजिकानाञ्च तेन नोपकारः ॥ ३६ ॥

कार्य्याणामनुष्ठानेन धनादेरधिकमायमाह कार्य्येति। कार्य्याणां कर्म्मणाम् अनुष्ठानादुद्योगपूर्वकमारम्भकरणात्। आयमुखानि आयस्य धनाद्यागमस्य मुखानि अधिकधनादेरागमाः प्रधानानि विषयावेति। वर्द्धन्ते क्रमशो वृद्धिमुपयास्यन्ति ते च रत्नधान्य-भूम्यादयः। वणिजांस्तु वणिज्यया नियतं तदनुष्ठानेन धनवृद्धिर्भवत्येव। ये तु अलसाः कार्य्योद्यमाध्यवसायहीनास्तेषां धनवृद्धेः कैव कथा, परं सञ्चितधनहानिः समुचित लाभ सम्भावना च विरलेति भावः। तदुक्तं 'नहि सुप्तस्य वीरस्य रणे शौर्य्यं प्रवर्द्धते' इति। मुखमिति। खनु अवदारणे। खन खनने च, खन्यतेऽनेन। 'डित् खनेर्मुट् चोदात्तः' इत्यच्। स च डित् धातोर्मुडागमः। तदुक्तं निरुक्ते—

**नातिभीरोः कार्य्यचिन्ता ॥ ३८ ॥**

**स्वामिनः शीलं विज्ञाय कार्य्यार्थी कार्य्यं साधयेत् ॥ ३९ ॥**

---

"प्राक् खनो मुड्दात्तश्च ततोऽत्र प्रत्ययो भवेत्।
प्रजा सृजा यतः ख्यातं तस्मादाहुर्मुखं बुधाः" ॥

'सुखानि' इति सूत्रपाठे धनादेरायजनितसुखानि स्युरित्यर्थोऽवबोध्यः ॥ ३७ ॥

अशेषभयग्रस्तस्य जनस्य कार्य्यचिन्ताभावमाह नेति। अतिभीरोरधिकभयग्रस्तस्य पुंसः। कार्य्यचिन्ता कार्य्यानुष्ठानविषये मनसि कर्त्तव्यालोचनं न भवतीति शेषः। भीतेराधिक्याद्बोधमान्द्यम्। तस्माच्च तादृशस्य पुंसः कार्य्यचिन्ता विरलेति भावः। भीरुरिति। 'भीरुरात्तं त्रिलिङ्गः स्याद्दरयोषिति योषिति' इति विश्वमेदिन्यौ। ञिभी भये, बिभेति। 'भियः क्रुक्लुकनौ' इति क्रुः। 'क्रुकन्नपो'ति वार्त्तिकात् सिद्धम्। चिन्ता। चिति स्मृत्याम्। चिन्तनम्। 'चिन्ति पूजि' इत्यादिना अङ् 'नास्ति भीरो'रिति सूत्रपाठेऽर्थस्तु सुबोध्य एवेति ॥ ३८ ॥

प्रभोः स्वभाव-ज्ञानपूर्वकं कार्य्यार्थिनां कार्य्यसाधनमाह स्वामीति। स्वामिनः प्रभोर्नृपतेराश्रयदातुरिति यावत्। शीलं चरितमाचरणं मनोऽभिप्रायमिति। विज्ञाय सम्यगवबोध्य। कार्य्यार्थी कार्य्यप्रार्थी कर्म्मकरः। यस्य यत् कर्त्तव्यं कार्य्यं

धेनोः क्षीरं शीलज्ञो भुङ्क्ते ॥ ४० ॥

क्षुद्रे गुह्यप्रकाशनमात्मवता नक्रियेत ॥ ४१ ॥

---

तत्साधयेत् सम्पादयेत्। प्रभोरभिप्रायानुसारेण कर्म्मानुष्ठाने कार्य्यहानि स्तन्नैष्फल्यञ्च न स्यादिति भावः। 'शीलं स्वभावे सद्वृत्ते' इति विश्वः। 'निष्ठा च शीलं चारित्रं चरित्रं तथा' इति रत्नकोषः। शील समाधाने, शीलनम्। ण्यन्तादृ घञ्। अथवा 'शीङो धुक् लुक् वलज्वालन' इत्यौणादिको लक्। स्वमस्यास्तीति, 'स्वामिन्नैश्वर्य्ये' इति तत्पदं साधु ॥ ३८ ॥

धेनोः स्वभावज्ञातुस्तत्क्षीरभोजने अधिकारमाह धेनोरिति। धेनोः पयस्विन्याः क्षीरं पयः। शीलज्ञो धेनोः स्वभावविद् भुङ्क्ते पिबति। शीलं जानातीति जानातेः कः। यस्या धेनोर्यादृश वारि-तृण-शस्पादीनां प्रदानेन तृप्तिः पुष्टिश्च भवति। तस्यै तादृगेव पेयं भक्ष्यं च देयम्। तेन पयोवृद्धिः स्वाशानुरूपं क्षीरमपि दुग्ध्वा पातुं समर्थः स्यान्नान्यथा। 'धेनुर्गोमात्रके दोग्ध्र्यां' इति हैमः। 'शीलं स्वभावे सद्वृत्ते'त्यमरश्च। धेट् पाने, धीयते। 'धेट इच्च' इत्यौणादिकोनुः ॥ ४० ॥

मतिमतां नीचे जने रहस्य प्रकाशकरणे अनिष्टमाह क्षुद्रेति। क्षुद्रे नीचे मन्दमतौ अनीतिज्ञे इति यावत्। आत्मवता मनस्विना धीमता न क्रियते। आत्मवता राज्ञा, 'आत्मवान् राजा' इति वृहस्पतिसूत्रम्। अत्रात्मा मनः, आत्मवान् प्रशस्तमना इत्यर्थः। तदुक्तं नीतिविद्भिः—

**आश्रितैरप्यवमन्यते मृदुस्वभावः॥ ४२॥**

---

"अर्थनाशं मनस्तापं गृहदुश्चरितानि च।
वञ्चनाञ्चापमानञ्च मतिमान्न प्रकाशयेत्"॥

अन्यच्च—

"आयुर्वित्तं गृहच्छिद्रं मन्त्र-मैथुन-भोजनम्।
तपोदानञ्चापमानं नव गोप्यानि यत्नतः"॥

अत्र 'भोजनम्' इतिपदे भेषजमिति पाठान्तरमस्ति। यथा वा सच्छिद्रे भाजने वारिरक्षणे क्षरत्येव तत्। तद्वत् क्षुद्रे गुह्यवादप्रकाशे अनिष्टं भवत्येव। एवमविश्वस्तं नैव विश्वसेत्। तथा च भारते 'न विश्वसेदविश्वस्ते विश्वस्ते नातिविश्वसेत्'। गुह्यमिति। गुह् सम्बरणे, गुह्यते, गूहनं वा। ततः 'शंसिदुहिगुहिभ्यो वा' इति काशिकातः क्यप्। 'क्षुद्रे दरिद्रे कृपणे निष्कृष्टेऽप्य नृसंशयो'रिति हैमः। 'क्षुदिर् संपेषणे'। ततः 'स्फायि-तञ्चि' इत्यादिना रक्॥ ४१॥

अनुगतैः कोमलस्वभावस्य प्रभोरवज्ञाकरणमाह आश्रितैरिति। आश्रितैरनुगतैरनुवृत्तिपरैर्भृत्यजनैर्वा। मृदुस्वभावः कोमलप्रकृतिर्विमलमतिर्नृपोऽन्य प्रभुर्वा। अवमन्यते अवज्ञायते। अथवा राज-द्वेष्टृभिरनुगतैर्लोकैश्छिद्रं निरूप्य नृपस्यावमाननं क्रियते इति तद्रहस्यार्थः। अतः स्वोचितशक्तिप्रकाशेन राज्ञा स्थातव्यम्। 'मृद्वतीक्ष्णे च कोमले' इति हैमः। म्रद मर्द्दने, म्रद्यते। 'प्रथिम्रदि' इत्यादिना कुः। सम्प्रसारणञ्च।

## तीच्णदण्डः सर्वैरुद्वेजनीयो भवति ॥ ४३ ॥

---

'मृद चोदे' इति क्र्यादिगणीयाच्च भवति । यत ऋकारवतो-धातोरुपादाने सम्प्रसारणं न स्यात् । तदा रेफवतो भौवादिकस्योपन्यासो युक्तः । यतः 'त्रयाणां कुः सम्प्रसारणम्' इति सिद्धान्तकौमुदी सङ्गच्छते नान्यथा ॥ ४२ ॥

कठोरदण्डप्रदानेन प्रजानां चोभाधिक्यमाह तीच्णेति । तीच्णस्तीव्रः कठोर इति । तादृश दण्डः दैहिकार्थिक-शासनं दमनश्चेति । तद् यस्यास्ति सः नृपः । सर्वैः प्रजावर्गैरन्यैश्च लोकैरुद्वेजनीय उपद्रवहेतुर्भवति । अतः सर्वथा अपराधिषु दम्यमानेषु तीव्रदण्डो न विधेयः । तदुक्तं रघौ 'स्थित्यै दण्डयते दण्ड्यान्' । अन्यच्च राजनीतौ । 'त्यजेत् स्वामिनमत्युग्रम् अनुग्रात् कृपणान्त्यजेत्' । स च दण्ड स्त्रिविधः—

"वधोऽर्थग्रहणञ्चैव परिक्लेशस्तथैव च ।
इति दण्डविधानज्ञैर्दण्डोऽपि त्रिविधः स्मृतः" ॥

ब्रह्मबन्धूनान्तु बधो नास्ति, तदुक्तं भारते—

"वपनं द्रविणादानं स्थानान्निर्वासनन्तथा ।
एषैव ब्रह्मबन्धूनां बधो नास्तीति दैहिकः" ॥

आततायिनान्तु बधः समुचितः । तदुक्तम् 'आततायिबधे दोषो हन्तुर्भवति कश्चन' । अन्यदर्थशास्त्रे पुष्कलमास्ति । 'दण्डो यमे मानभेदे लगुड़े दम-सैन्ययो'रिति विश्वः । दण्ड निपातने, दण्डयति, अनेन वा । पचाद्यच्, दमेर्डश्च 'पुंसि' घप्रत्ययो वा ।

## ततो यथार्ह-दण्डः स्यात् ॥ ४४ ॥

"तीक्ष्णं सामुद्रलवणे विषलोहाजिमुष्कके।
क्लीवं यवाग्रजे पुंसि तिग्मात्मत्यागिनो स्त्रिषु" ॥

इति मेदिनी। तिज् निशाने, तेजयति 'तिजेर्दीर्घश्च इति क्स्नः। सर्वं गतौ, इत्यतः पचाद्यचा सर्वं इति ॥ ४३ ॥

तथा योग्यदण्डमपराधिष्वाह तत इति। यतः प्रखरदण्डालोकोद्वेगो भवति। ततो यथार्हो यथायोग्यः, लघुगुर्वपराधभेदेन दण्डो दमनं विधेयम् लघ्वपराधे गुरुदण्डः, निरपराधे दण्डो लघुदण्डो वा तथा गुर्वपराधे लघुदण्डः, गुर्वपराधेऽदण्डप्रभृतयोऽप्रयोज्याः। दण्डः शास्तिः। स च त्रिविधः प्रागुक्तः।

अन्यच्च—

"अदण्ड्यान् दण्डयन् राजा दण्ड्यांश्चैवाप्यदण्डयन्।
अयशो महदाप्नोति नरकञ्चैव गच्छति ॥
अनुबन्धं परिज्ञाय देशकालौ च तत्त्वतः।
सारापराधौ चालोक्य दण्डं दण्ड्येषु पातयेत्" ॥

अपरञ्च—

"अधर्म्मदण्डनं लोके यशोघ्नं कीर्त्तिनाशनम्।
अस्वर्ग्यञ्च परत्रापि तस्मात्तत् परिवर्ज्जयेत्" ॥

इति स्मृतौ। युक्तिकल्पतरौ च।—

"दण्डः संरक्षते धर्म्मस्तथैवार्थं विधानतः।
कामं संरक्षते यस्मात् त्रिवर्गो दण्ड उच्यते" ॥

## सारं महाजनः संग्रहः पीड़यति ॥ ४५ ॥

"राजदण्डभयाल्लोकाः पापाः पापं न कुर्वते"।

इत्यन्यत्रत्रैव, मानवे सप्तमाध्यायेऽपि। सोमदेवोऽप्याह 'चिकित्सागम इव दोषविशुद्धिहेतुर्दण्डः'। यो दण्डः अपराधिनां क्रियते स सर्वं दोषविशुद्धेः हेतुः कारणम्। यथा चिकित्सागमः वैद्यकं सर्वदोषसन्निपातानां विनाशहेतुर्भवति, तथा दण्डः। तदुक्तं गर्गेण—

"अपराधिषु यो दण्डः स राष्ट्रस्य विशुद्धये।
विना येन च सन्देहो मात्स्यन्यायः प्रवर्त्तते" ॥
"शूले मत्स्यानिवापक्ष्यन् दुर्बलान् बलवत्तराः"।

इति मानवोक्तो मात्स्यन्यायः। सापराधे दण्डप्रणयनं विना भवेदिति। प्रागुक्तमन्यत् पदनिरुक्त्यादिकम्॥ ४४ ॥

महाजन-संग्रहस्य सार-पीड़नत्वमाह सारमिति। दीनस्य कार्य्ये यदि महाजनसंग्रहो भवेत्तदा कर्म्मणः सारं श्रेष्ठभागं पीड़यति हरते, अवहन्ति च। महाजनस्यायं महाजनः। संग्रहः सम्मेलनम्। सूत्रस्यास्य पाठान्तरमस्ति, तद्यथा 'अल्पसारं श्रुतवन्तमपि न बहु मन्यते लोकः'। तथा च श्रुतवन्तं विद्वांसं सुधीरम् अल्पसारं सन्तमपि लोका न तमाद्रियन्ते। अल्पो-नाधिकः सारः स्थिरांसो यस्य स तम् 'श्रुतं शास्त्रावधृतयोः' इत्यमरः। अस्यैवं पाठो रुचिकरः। 'सारोबले मज्जनि च' इति मेदिनी 'संग्रहो बृहदुद्धारे ग्रहसंक्षेपयोरपि' इति हैमः।

**अतिसारः पुरुषमवसादयति ॥ ४६ ॥**

**यः संसदि परदोषं वक्ति स स्वदोषबहुत्वं प्रख्यापयति ॥ ४७ ॥**

---

मेदिनीकारोऽपि 'संग्रहो वृहदुद्रङ्गे मुष्टिसंक्षेपयोरपि'। छन्दोवत् सूत्रपाठो बोध्यः। सृ गतौ, सरति कालान्तरम्। 'सृस्थिरे' इत्यनेन घञ्। ग्रह उपादाने, संग्रहणम्। संपूर्वात् 'ग्रहवृद्दृ' इत्यादिना अप्। श्रुतमिति। श्रु श्रवणे, श्रवणम्। शृणोतेः क्तः ॥ ४५ ॥

गुरुभारेण पुरुषस्यावसन्नत्वमाह अतीति। अतिभारः। कार्य्याधिकगुरुता, शक्तेरधिककार्य्यगुरुत्वेनावनमनं वा। पुरुषं जनमवसादयति, तच्छक्तिहानिं करोति। कार्य्यभारेण परिश्रान्तो भवति। गुरुत्वेनाधःपतनयोग्यता भार इति केचित्। 'भारः स्याद्वीवधे विष्णौ पलानां द्विसहस्रके' इति मेदिनी। 'भारः सहस्रद्वितये पलानामपि वीवधे' इत्यजयः। 'भारो गुरुत्वे द्रव्याणां भारः स्यादवसादके' इति कैश्चिदपि। भृञ् भरणे, भ्रियते। 'अकर्त्तरि च' इति घञ्। प्रागुक्तमन्यत् ॥ ४६ ॥

सभायां योऽन्यदोषं प्रकाशयति तस्य तेन स्वदोषख्यापनावसरमप्याह य इति। समितौ परदोषमन्यदीयकुत्सनं वक्ति सूचयति। स जनः स्वस्यात्मनो दोषबहुत्वं दोषाणां प्राचुर्य्यं प्रत्याययति प्रकटयति। येन यस्य दोषः प्रख्याप्यते तेन स्वस्यापि

## आत्मानमेव पीड़यत्यनात्मवतां कोपः ॥ ४८ ॥

निन्दावसरो विज्ञाप्यते । अतः परकीयदोषप्रख्यापनं न युक्तम् । तेनारातित्वमपि वर्द्धते । तदुक्तमभियुक्तैः—

"यदीच्छसि वशीकर्त्तुं जगदेकेन कर्म्मणा ।
परापवाद-सस्येभ्यो गां चरन्तीं निवारय" ॥

गां दोषसूचक वाक्यमिति । संसत् । सं परितः सीदन्ति अस्याम् । षद्लृ विशरणादौ, परिसदनम् । 'सम्पदादित्वात् क्विप्' । दोषः । दूष वैकल्ये, ततोऽच् । संसदीति पदेन प्रकाश्ये इति व्यक्तम् । प्रयोजनविशेषे गुप्तदोषकथने परोक्षे न दोष इति सूच्यते ॥४७॥

अनात्मवतां कोपेन स्वात्मनो व्यथामाह आत्मानमिति । आत्मानं मानसम् । अनात्मवतां हीनजनानामप्रशस्तमनसां वा । कोपः क्रोधः इति । पीड़यति व्यथयति दुःखयति च । अथवा अनात्मवतां क्षुद्रचित्तानां स्वेषां कोपो रोषः आत्मानं स्वं मानसं पीड़यति नाशयति । ते च क्रोधोद्दीपनेन कालेऽधैर्य्यादात्मानमपि घ्नन्ति । पिढ़यतीत्यत्र नाशयतीति पाठान्तरमादर्शग्रन्थान्तरेऽस्ति । अमनीषिणां क्रोधः अधैर्य्यादविवेकाच्चात्मनाशकारो स्यात् । मतिमतां कोपोन तादृशः । यतः 'साधोः प्रकुपितस्यापि मनो नायाति विक्रियाम्' । अन्यच्च 'विकार हेतौ सति विक्रियन्ते येषां न चेतांसि त एव धीराः' इति । पक्षेऽनात्मवन्तः मुग्धचित्ताः तेषां कोप आत्मानं व्यथयति । कुप क्रोधे, कोपनम् । ततो भावे घञ् ॥ ४८ ॥

**नास्त्यप्राप्यं सत्त्ववताम् ॥ ४९ ॥**

**साहसे खलु श्रीर्वसति ॥ ५० ॥**

---

प्रशस्तमनसां जगति सर्वप्राप्ति-सम्भावनामाह नेति । सत्त्ववतां मनीषिणां जनानां विशेषतः उद्योगि-जनानामप्राप्यम् अलभ्यं नैव विद्यते । तेषां प्रयत्नेन मनीषया च सर्वमेव लभ्यम् ।

"सत्त्वं गुणे पिशाचादौ बले द्रव्यस्वभावयोः ।

आत्मत्व-व्यवसायेषु वित्तेष्वस्त्री तु जन्तुषु" ॥

इति मेदिनी । सीदन्त्यस्मिन् गुणाद्याः । सद् धातोः 'अन्येभ्योऽपि दृश्यन्ते' इति त्वन् । यत्नोद्यमाध्यवसायैर्मतिमतां सर्वं सुशकं भवति । केचिदाहुः 'यत्ने कृते यदि न सिध्यति कोऽत्र दोषः' । अस्यायमर्थः—यत्ने कृते मति यदि कार्य्यं न सिद्ध्यति तदा तस्मिन् यत्ने कोऽपि दोषो वर्त्तते, अत्र पुनर्यत्नो विधेयः ततः कार्य्यं सेत्स्यति । सत्त्ववतामित्यत्र 'सत्यवता'मिति पाठे त्वयमर्थः । सत्यवतां सत्यशीलानां सत्यवादिनामिति ॥ ४९ ॥

कुत्र श्रीर्विराजते तदाह साहस इति । साहसे मानसोद्दीपनमूलकसामर्थ्ये शारीरशक्तौ वा । खलु निश्चितम् । श्रीर्लक्ष्मीर्वसति नियतमधिष्ठानं करोति । तत्र कैश्चिदुक्तम् । 'साहसाद् भजते लक्ष्मीः' । पुरुषमिति शेषः । अन्यच्च—

"शूरं कृतज्ञं दृढसौहृदञ्च

लक्ष्मीः स्वयं याति निवासहेतोः" ।

साहसः । 'साहसन्तु दमे दुष्करकर्म्मणि अविमृष्यकृतौ धार्ष्ट्ये'

## व्यसनार्त्तो विस्मरत्यप्रवेशेन ॥ ५१ ॥

---

इति हैमः । सहसि बले भवम् । 'तत्र भवः' इत्यण् । श्रीरिति । श्रिञ् सेवायाम्, श्रयति लोकम् । 'क्विव्वचि' इत्यादि वार्त्तिकात् क्विव् दीर्घौ । केचित्तु 'श्रीयते सर्वैः' इति विग्रहीतम् । तदसाधुः, यतः क्विपः कृत्त्वेन कर्त्तरि विधानेन कर्म्मण्यसम्भवात् । बाहुलकस्यागतिकगतित्वात् । 'लक्ष्मीः श्रीरिव दृश्यते' । 'क्वचिदादर्शग्रन्थे 'साहसेन कार्य्यसिद्धिर्न भवति' इत्येवं सूत्रस्य पाठान्तरमस्ति । तदा साहसेन कार्य्यसिद्धग्रभावकथनं सूत्रकारस्याशयस्तन्मते प्रकटितोऽभूत् । न तत् साधु मन्ये, साहसहीनस्य बुद्धिमान्द्यात् कार्य्यसिद्धेरदर्शनात् ॥ ५० ॥

व्यसन-पीड़ाग्रस्तस्य कार्य्यविस्मरणमाह व्यसनेति । व्यसनेन कामादिजनित-दोषेणार्त्तः पीड़ितः सम्यक् तदासक्तो वा । अप्रवेशेन तदुत्साहादिराहित्यात् सम्यदमार्गे गमनाभावेन सः श्रियं विस्मरति । यद्वा कार्य्याप्रवेशेन तत्कार्य्यं विस्मरति । व्यसनानि यथा—

'मृगयाक्षो दिवास्वप्नः परीवादः स्त्रियोमदः ।' इत्यादीनि मानवोक्तानि अष्टादशविधानि ।

एते महीपतेरन्येषाञ्चैव दोषाः सर्वथा परिहार्य्याः । 'व्यसनन्त्वशुभे शक्तौ पान स्त्री मृगयादिषु' इति विश्व-मेदिन्यौ । असुक्षेपणे, दैवादिकादस्यतेः भावाद्यर्थे ल्युट् । आङ्पूर्वादृच्छतेः क्तः ।

**नास्त्यनन्तरायः कालक्षेपः ॥ ५२ ॥**

**असंशयविनाशात् संशय-विनाशः श्रेयान् ॥५३॥**

---

'उपसर्गादृति' इत्यादिना वृद्धौ आर्त्त इति। अन्ये त्वाहुः अर्द्द हिंसायाम्, अर्द्दनम्। अर्द्दयतेः क्तप्रत्ययेनार्त्त इति ॥ ५१ ॥

कालक्षेपेऽन्तराय-सत्तामाह नेति। यस्य कालक्षेपः समयातिपातो नास्ति सोऽनन्तरायः। अन्तरायः प्रत्यूहो विघ्नश्च। अनन्तरायः विघ्नहीनो जनः शीघ्रं कार्य्यं सम्पादयति। तत् फलञ्च लभते। अतः कार्य्ये विघ्नराहित्यं भवेत् समयक्षेपो न भवेत्तथैव यतितव्यम्। यदा योऽनन्तरायः पुमांस्तस्य कार्य्ये कालक्षेपा नास्ति। 'कालक्षेपे' इति सूत्रपाठे, कालक्षेपे सत्यन्तरायो विद्यते इत्यर्थः स्यात्। 'विघ्नोऽन्तरायः प्रत्यूहः।' अन्तर्मध्ये अन्तरस्य व्यवधानस्य वा अयनम्। अय गतौ, इण् गतौ च इत्येतयोर्घञ् अच् वा। क्षेपः। 'क्षिप प्रेरणे' क्षिप्यते इत्यस्माद् धातोर्घञ् ॥ ५२ ॥

असंशयविनाशेऽहितसम्भावनामाह असंशयेति। असंशयस्य विनाशात् समुच्छेदात् संशयस्य सन्दिग्धकार्य्यस्य विनाशः श्रेयान् शुभजनकः। अथवा नास्ति संशयो यस्मिन् शत्रौ सः। तन्नाशात् सन्दिग्धशत्रुनाशः प्रशस्तः। किं वा असंशयस्य निःसन्देहस्य विनाशात् संशयस्य सन्देहस्य विनाशः श्रेष्ठः। कुत्रापि सन्देहे सति तत्र प्रवृत्तिर्न भवति। सन्देहरहिते सर्वस्मिन्

## अपरधनानपेक्षं केवलमर्थदानं श्रेयः ॥ ५४

प्रवृत्तिर्भवति । 'विचिकित्सा तु संशयः' । एकधर्म्मिणि विरुद्धानेक कोट्यवगाहि ज्ञानं संशयः, यद्वा उभयकोटिस्पृक् विज्ञानम् । पिशाचो वा स्तम्भो वेति । शीङ् शयने, शेते । संपूर्वात् शीङः एरच् । नश अदर्शने, विनशनं विनाशः । विपूर्व्वात् नश्धातो घञ् । 'अतिशायने प्रशस्यः' । 'अतिशायने तमबिष्ठनौ' । 'अजादिगुणवचनादेव' । 'प्रशस्यस्य श्रः' ईयसुनि रूपम् । 'श्रेयो मुक्तौ शुभे धर्म्मे' इति विश्वः ॥ ५३ ॥

स्वीयार्थस्य स्वेच्छया परहितार्थं दानमाह अपरेति । परस्य यद्धनं तस्यापेक्षामकृत्वा केवलं निःस्वार्थदानमात्रं श्रेयो युक्तमिति । अपरस्य धनापेक्षा नास्ति यस्मिन्नर्थदाने तत् । एवं दानं श्रेयः श्रेष्ठं भवति । प्रत्युपकारापेक्षया दानं स्वार्थानुसन्धानपूर्वक दानञ्च न सम्यक् इति । तदुक्तं गीतायाम्—

"दातव्यमिति यद्दानं दीयतेऽनुपकारिणे ।
देशे काले च पात्रे च तद्दानं सात्त्विकं स्मृतम्" ॥

एवं भारते च—

"दरिद्रान् भर कौन्तेय मा प्रयच्छेश्वरे धनम् ।
व्याधितस्यौषधं पथ्यं निरुजस्य किमौषधैः" ॥

श्रुतेश्च 'त्रयोधर्म्मस्कन्धा यज्ञोऽध्ययनं दानञ्चे'ति । तैत्तिरीये 'दानेन द्विषन्तो मित्रा भवन्ति, दानेन सर्वं प्रतिष्ठितं, तस्माद्दानं परमं वदन्ति' । 'तस्मादेतत्त्रयं शिक्षेद्दानं दमं दयाञ्चे'ति । 'दान-

**न्यायागतोऽर्थः ॥ ५५ ॥**

**तद्विपरीतोऽर्थाभासः ॥ ५६ ॥**

---

मेकं कलौ युगे' इति स्मृतावपि। 'धनन्तु गोधने वित्ते' इति विश्वः। धन धान्ये, धनति। ततः अच्। 'अर्थ उपयाच्ञायाम्' अर्थ्यते। 'अकर्त्तरि च' इति घञ्। अर्थस्य तिस्रो गतयो भवन्ति। दानं भोगः संचयश्चेति ॥ ५४ ॥

अर्थस्य वैशिष्ट्यमाह न्यायेति। न्यायेन सुनीत्या समुचितोपायेन परोद्वेगाकरणेन। आगतं प्राप्तं समुपार्ज्जितं यद्धनं तदेव सम्यगर्थः। आदर्शग्रन्थान्तरे अस्मात् प्राग् 'दानं धर्म्मः' इति पृथक् सूत्रितमस्ति। न तत् शोभनम्, तत्पूर्वसूत्रेण तस्य गतार्थत्वात्। 'अपर-धनानि निक्षेप्तुः केवलं स्वार्थम्' इति पूर्वसूत्रस्थानीयत्वेन सूत्रान्तरमादर्शग्रन्थान्तरे दर्शनात्। तस्यायमर्थः। अन्येषां धनानां स्वस्मिन् निक्षेपकरणं न्यासकरणं रक्षणमिति। तत् केवलं स्वार्थं स्वीयार्थपूरणमिति। यत्र तत् स्वत्वावधारणलेखपत्रमस्ति। न तत्रैवं मन्तव्यम्। लेखपत्रेण यस्य यद्द्रव्यन्तस्य तदवधारणात्। 'न्यायो नीतौ दर्शने च न्याय्यमौचित्यमित्यपि' इति प्राञ्चः। 'अर्थो विषयार्थनयोर्धनकारणवस्तुषु' इति मेदिनी। न्यायः। 'परिन्योर्नीणोः'। इङ् गतौ, नियमेन ईयते इति। इति घञ् ॥ ५५ ॥

सदुपायलब्धार्थभिन्नो योऽर्थस्तमाह तदिति। तस्मान्न्यायागताद्विपरीतोऽन्यथा प्रकारेण लब्धो योऽर्थो धनादिः सोऽर्था-

## यो धर्म्मार्थौ न पीड़यति स कामः॥ ५७॥

भासः। अर्थतुल्योऽर्थसदृशो न तु यथार्थोऽर्थः। तदन्यायमार्गागतत्वात् स्वस्य परेषाञ्चानिष्टापादकमिति। तत्र सोमदेवैरुक्तं 'यो भृत्यात्मपीड़ाभ्यामर्थं सञ्चिनोति स कदर्य्यः'। यो जनो भृत्यमात्मानञ्च पीड़यति विपुल-धने विद्यमानेऽपि अन्येभ्यो न प्रयच्छति, स्वयं भुङ्क्ते स कदर्य्यः। 'यः किमप्यसञ्चित्योत्पन्नमर्थं व्ययति स तादात्विकः'। यथार्थार्ज्जनं कृत्वाऽनुचितं व्ययति असद्व्ययं करोति, न जानाति च ममैतत् प्रयोजनम् अर्थेन सेत्स्यति। आगमादप्यधिकं ददाति स धनवान् तादात्विक उच्यते। तदुक्तं कविपुत्रेण—

"आगमाभ्यधिकं कुर्य्याद् यो व्ययं यस्य भच्चति।
पूर्वजोपार्ज्जितं नान्यदर्ज्जयेच्च स सीदति"॥ इति।

शुक्रोऽप्याह—

"आगमे यस्य चत्वारो निर्गमे सार्द्धपञ्चमाः"।

इति पूर्वमुक्तम्।

"अन्यायेनार्जितोऽर्थः आयत्यां दुःखदायकः"॥

इति कविसमयश्च। अतः चौर्य्य दस्युता-शाठ्यादिभिरर्थोनोपार्जनीयः। एवमायादधिकव्ययकरणमपि गर्हितमिति। 'अनर्थसेवी' इति सूत्रान्तपाठे असत्यथार्थार्जनकारो इत्यर्थः स्यात् ॥५६॥

धर्म्मार्थयोरविरोधि-काममाह य इति। धर्म्मश्चार्थश्च धर्म्मार्थौ द्वौ यो न पीड़यति नापहन्ति सः कामस्तृतीयवर्गः। 'धर्म्मार्थ-

तद्विपरीतः कामाभासः ॥ ५८ ॥

---

कामाश्चेति नीतिविदां त्रिवर्गः। 'अर्थकामौ पुरुषार्थौ' इति चार्वाकाः। तदेव कामशास्त्रकाराणां मतम्। 'धर्म्मार्थकामाः सममेव सेव्याः' इति कविसमयः। 'धर्म्मार्थकाममोक्षाश्चेति चत्वारः पुरुषार्थाः' इति धर्म्मविदः। 'धर्म्माविरुद्धो भूतेषु कामोऽस्मि भरतर्षभः' इति गीतायाम्। 'परित्यजेदर्थकामौ यौ स्यातां धर्म्मवर्जितौ' इति भारते विदूरनीतौ च। धर्म्मविरुद्धावर्थकामौ परित्यजेदित्यर्थः। मोक्षस्य नीतावनुपयोगित्वात्तस्यात्र नादरः। मुमुक्षूणां स श्रेयान्। धर्म्मविरुद्धे कामे इन्द्रियाणि भोगलौल्यात् क्षिप्रं विषयेषु प्रवर्त्तन्ते। तेनापदः सम्भविष्यन्ति। 'कामः स्मरेच्छयोः पुमान्, रेतस्यपि निकामे च कामेऽपि स्यान्नपुंसकम्' इति रभसः। कमु कान्तौ, कमनम्। ततो घञ् ॥ ५७ ॥

धर्म्मार्थप्रतिकूलं काममाह तदिति। तस्माद्धर्म्मार्थानुकूलकामात्। विपरीतो भिन्नो-धर्म्मार्थयोः पीड़ाजनको यः कामः स कामाभासः। यथार्थकामतुल्यो भवति। काम इवाभास्यते प्रकाश्यते नतु स्वाभाविकः कामः। तेन न स्वपरेष्टं स्यात्। स्वानिष्टकरे विषये इच्छा दुष्कामः। तथा परानिष्टकरे विषयेऽपि। कामाभास इत्युक्तः आपत्काले समुपस्थिते कामाभासोऽपि दुष्परिहरणीयः, सांसारिककार्य्यस्यानवस्थितेः। तथाहि

## ऋजुस्वभावः परिजनो दुर्लभः ॥ ५९ ॥

आततायिनि समुपस्थिते तदुच्छेदकामो न कामाभासः । आभास इत्यत्राङ् ईषदर्थे नतु सम्यगर्थे । यथाच,—

"अकामस्य क्रिया काचित् कुत्रचिन्नेह दृश्यते ।

यद्‌यज्जगति पश्यामि तत्तत् कामस्य चेष्टितम्" ॥

इत्युक्तमभियुक्तैः । भासृ दीप्तौ, आभास्यते । ततो घञा सिद्धम् ॥ ५८ ।

सरलप्रकृतयः परिजना जगति असुलभा इत्येतदाह ऋज्विति । ऋजुः सरलः कापट्य-शाठ्य-क्रौर्य्यरहित इति । ऋज्विति भावप्रधाननिर्देशो वा । स्वस्यात्मनोभावः स्वभावः । तादृशी प्रकृतिर्येषां परिजनानां ते । दुर्लभा दुष्प्राप्या भवन्तीति शेषः । परिजनाः कुटुम्बाः परिवारा इति । गृहपतेः सौभाग्यादेव ते क्वापि लभ्यन्ते । यस्य तु तादृशः स्वजनवर्गस्तस्य कार्य्य-सिद्धिरवश्यम्भाविनी । सुखञ्च तादृग् ज्ञेयम् । यस्य त्वनीदृशः तस्य सर्वं विपदास्पदम् । 'ऋजावजिह्मप्रगुणौ' इति । अर्ज अर्जने, अर्जति । 'अर्जिदृशि' इति साधुः । नतु अपस्पादित्वात् कुः । 'अप दुः सुषुस्थः' इत्युणादिसूत्रस्य प्राप्तेरभावात् । गुणाभावाच्च न कुप्रत्ययः । परितो जनाः परिजनाः पोष्यवर्गाः । तथा च स्मृतिः—

"माता पिता गुरुर्भार्य्या प्रजा दीनाः समाश्रिताः ।

अभ्यागतोऽतिथिश्चाग्निः पोष्यवर्ग उदाहृतः" ॥ इति ॥५९॥

**अवमानागतमैश्वर्य्यमवमन्यते साधुः ॥ ६० ॥**

**बहूनपि-गुणानेको दोषो ग्रसते ॥ ६१ ॥**

---

अवज्ञया समागतार्थस्य साधोस्तत्रावमानमाह अवेति। अवमानेन परिभवेनावज्ञयेति। तेनागतं प्राप्तमैश्वर्य्यं वा, साधुः सत्यपरायणः परिव्राड् वेति। अवमन्यते, स्वीयसम्मानहाना-त्तदवजानाति। यतो 'मानो हि महतां धन'मिति। अन्यच्च— 'प्राणान्तेऽपि प्रकृतिविकृतिर्जायते नोत्तमानाम्'। सामान्यं वस्तु स्वतोऽवमन्यते साधुना। विशेषतोऽवमानादागतमैश्वर्य्यं राष्ट्रञ्चावमन्यते, साधुत्वनाशभयात्। 'अवमाननावज्ञावहेल-नम्' इति। 'मनु बोधने' मन्यते। मनेरवपूर्वाद् घञ्। ईश्व-रस्य भाव ऐश्वर्य्यम्। इत्यतः ईश्वेरच्। 'गुणवचन' इत्यादिना ष्यञ्। 'साधुर्वाद्धुषिके चारौ सज्जने चाभिधेयवत्' इति विश्वः। 'साध् संसिद्धौ' साध्नोति हितम्। 'कृ वा पा' इत्यादिनोण्। ऐश्वर्य्यमणिमाद्यष्टौ प्रकृयः ॥ ६० ॥

दोषस्य प्राबल्यादनिष्टकरत्वाच्च बहून् गुणान् सोऽपहरतीति तदाह बहूनिति। प्रबल एको दोषो लोकप्रसिद्धः सन्। बहून् नानाविधान् शौर्य्य-धैर्य्यादिगुणान् ग्रसते समाक्रमति। गुणः स्वोत्कर्षाधायकः। दोषो ह्यात्म-मालिन्य-करः। एक एव दोषः अशेषगुणहानिकर इत्यतः सर्वथा दोषः परिहार्य्यः। तदुक्तं कविना 'दारिद्र्यदोषोगुणराशि-नाशो' इति। 'किं कुलेन विशालेन गुणहीनस्तु यो नरः' इति स्वीय लघुचाणक्ये।

**महता साहसं न परेण कर्त्तव्यम् ॥ ६२ ॥**

**कदाचिदपि चारित्रं न लङ्घयेत् ॥ ६३ ॥**

---

"गुणो मौर्व्यामप्रधाने रूपादौ सूद इन्द्रिये ।
स्तुतौ ना न स्त्रियां भेदे रूपाचरविलेखने" ॥

इति मेदिनो। अन्यच्च 'धनुर्वंशो विशुद्धोऽपि निर्गुणः किं करिष्यति'। गुण आमन्त्रणे, गुण्यते। ततो घञ्। बहु स्यात्त्रयादि संख्यासु विपुलेऽप्यभिधेयवत्' इति विश्वः। बहि वृद्धौ, 'लङ्घिव'ह्योर्न लोपश्चे'त्युप्रत्ययः ॥ ६१ ॥

महतो जनस्य परेण साहसकरणनिषेधमाह महतेति। महता शक्तिमता मतिमता च। परेण तादृशेन बलवता शत्रुणा सार्द्धम्। साहसं शक्तेरत्युद्यमम् अबुद्धिपूर्वकं करणं वा न कर्त्तव्यं नैव विधेयम्। तुल्यशक्तित्वात्तादृशसाहसकरणे स्वस्य हानिः पराजयोऽवश्यम्भावीति भावः। सूत्रमिदमन्यथा व्याख्यायते। परेण महात्मना साहसं न कर्त्तव्यमिति। स्वस्य बलं ज्ञात्वा परसमीपे शक्तेरुद्दीपनं युक्तमेवेति। सहसि बले भवं साहसम्। 'साहसन्तु दमे दुष्करकर्मणि। अविमृश्यकृतौ धार्ष्ट्ये' इति हैमः। सहः शब्दात् 'तत्र भवः' इत्यण्। मह-पूजायाम्, महति। 'वर्त्तमाने पृषद्बृहन्महत्' इति निपातनात् साधुः ॥ ६२ ॥

सौशील्यलङ्घन-निषेधमाह कदाचिदिति। कदाचित् कस्मिं-

न क्षुधार्त्तोऽपि सिंहस्तृणञ्चरति ॥ ६४ ॥

---

श्चिदपि काले लोभाद्रागात् कामाद्वा चरित्रं सौशील्यं औदार्य्यम् शरीरेन्द्रियसुव्यवहारञ्च। न लङ्घयेत् नापि परिहरेत्। चरित्रमेव सर्वकार्य्यसमुन्नतेर्मूलम्। तदुक्तं वृद्धैः 'सर्वदा सर्वयत्नेन चरित्रमनुपालयेत्'। 'शीलेन कुर्य्याद्वश'मिति च। चरित्रमेव चारित्रम्। 'निष्ठा च शीलं चारित्रं चरितन्तथा' इति रत्नकोषः। 'शीलं स्वभावे सद्वृत्ते' इति विश्वः। चारित्र लङ्घनेऽविश्वस्तः स्यात्। सच्चरित्रं सर्वे आद्रियन्ते इति रहस्यम् ॥ ६३ ॥

महाजनोविपत्तावपि न हीनतां याति तद्दर्शयति नेति। सिंहो मृगेन्द्रः इति। क्षुधार्त्तः क्षुधयाशनयार्त्तः पीड़ितः। मांसं परिहरन् तृणं घासं न चरति नैव भुङ्क्ते। अपिना क्षुधाधिक्यं सूचितम्। अतः सुधीजनो विपद्यपि सौशील्यं न लङ्घयेदिति पूर्वसूत्रानुबन्धः। तदुक्तं कविभिः 'सम्पत्तौ च विपत्तौ च महतामेकरूपता' इति। महामतिरापद्यपि स्वचरितं न लङ्घयेदिति रहस्यम्। यथा रामयुधिष्ठिरभोजभूपादयः। 'सिंहः कण्ठीरवे राशौ सप्तमे चोत्तरस्थितः। सिंही तु कण्टकार्य्यां स्या'दिति मेदिनी। हिसि हिंसायाम्, हिनस्तीत्यच्। पृषोदरादित्वात् साधुः। तृणु अदने, तृणते। ततो घञ्। नापि गुणः संज्ञापूर्वकत्वात्। अन्यत् सुगमम् ॥ ६४ ॥

**प्राणादपि प्रत्ययो रक्षितव्यः ॥ ६५ ॥**

**पिशुनः श्रोता पुत्रदारैरपि त्यज्यते ॥ ६६ ॥**

---

महतां जीवनादपि प्रत्ययस्य श्रेष्ठत्वमाह प्राणादिति। प्राणाज्जीवनाद्देहधारणादिति। प्रत्ययो विश्वासः लोकासंशयपात्रतेति। स रक्षितव्यः पालनीय इति। तद्रक्षणेन स्वस्यान्येषाञ्च महोपकारः स्यात्। विश्वासेन विना निर्विघ्नं किमपि कार्य्यं नैव निर्वोढुं शक्यते। अनायासेन कार्य्यसम्पादनस्य मूलं विश्वासः। अत्रापिरवश्यमित्यर्थ।

"प्रत्ययः शपथे रन्ध्रे विश्वासाचारहेतुषु।
प्रथितत्वे च सन्नादावधीनज्ञानयोरपि" ॥

इति विश्वः। इण् गतौ, प्रत्ययनम्। प्रतीयते अनेन वा। यद्वा प्रत्येति। तत 'एरच्'। 'पुंसि' घो वा। 'प्राणो हृन्मारुते बोले काव्यजीवेऽनिले बले' इति मेदिनी। अन प्राणने, प्रणिति, अनेन वा। 'अच्'। 'हलश्चे'ति घञ् वा ॥ ६५ ॥

सूचक-विदुषोऽपि पुत्रादिभिस्त्यागमाह पिशुन इति। यः पिशुनः खलस्वभावः, श्रोता शास्त्रवित् सः पुत्रदारैस्तनुजपत्न्यादिभिरपि, त्यज्यते परित्यज्यते। अथवा पिशुन इति भावप्रधाननिर्देशात् पैशुन्यम्। तादृगविवेकपूर्वक-कुट्टनवाक्य-श्रोतृजनो गर्हितस्वभावात् पुत्रदारैरपि त्यज्यते। अत्यागे तु तस्य प्रमादादिपतृशङ्काधिक्यमपि भवति। पैशुन्यं मानसिकदशविधपापेषु

**बालादप्यर्थजातं शृणुयात् ॥ ६७ ॥**

**सत्यमप्यश्रद्धेयं न वदेत् ॥ ६८ ॥**

---

पापमेकं परिगणितम् । अन्यच्चोक्तं 'दुर्जनः परिहर्त्तव्यो विद्यया-लङ्कृतोऽपि सन्' इति । 'पिशुनं कुङ्कुमऽपि च । कपिवक्ते च काके ना सूचकक्रूरयोस्त्रिषु' इति मेदिनी । पिश् अवयवे, पिंशति । 'क्षुधिपिशिमिथिभ्यः कित्' इत्यनेनोनन् । 'दाराः कलत्रं भार्य्येति' । 'एषामेकार्थवाचकत्वेऽपि लिङ्ग-वचनभेदः' । दॄ विदारणे, दारयति भातॄन्, णिजन्तोऽयम् । 'दारजारौ कर्त्तरि णिलुक् च' इत्यतो घञ् । अन्यदाकरेऽस्ति ॥ ६६ ॥

शिशोः सकाशादपि सत्यार्थं समूहस्य श्रवणयुक्तिमाह बाला-दिति । बालाच्छिशोः सकाशात् । अर्थजातं विषयसमूहं शृणु-यादाकर्णयेत् । तदुक्तं धीरैः 'बालादपि सुभाषित'मिति । सुष्टु-सम्यग् हितं प्रीतिकरं वचो भाषितमुक्तं सुभाषितम् । अपि तु न केवलं विदुषः । यद्वा अपिरत्र निश्चयार्थे, अवश्यं श्रोतव्य-मिति । अन्यच्चोक्तं—

'युक्तमुक्तन्तु गृह्णीयाद् बालादपि विचक्षणः ।
रवेरविषयं वस्तु किं न दीपः प्रकाशत' इति ।

'जातं व्यक्तौघजन्मसु । क्लीवं त्रिलिङ्गमुत्पन्ने' । जनी प्रा-दुर्भावे, जायते । तस्मात् क्तप्रत्ययः । 'जनसन' इत्यादिनात्वम्, 'तितुत्र' इति नेट् ॥ ६७ ॥

लोकोद्वेगकर-सत्यकथननिषेधमाह सत्यमिति । अश्रद्धेयं

# नाग्निमिच्छता धूमस्त्यज्यते ॥ ६९

अप्रीतिकरं लोकोद्वेगकरञ्चेति यावत् । सत्यं यथा भूतवृत्तमपि न वदेत् नापि ब्रूयात् । तदुक्तं मनुना 'न ब्रूयात् सत्यमप्रियम्' इति । 'सत्यं तथ्यमृत'मित्यपि । 'सत्यं कृते च शपथे पथ्ये च त्रिषु तद्वति' इति मेदिनी । कूर्म्मपुराणे उपविभागे च—

'सत्येन लोकं जयति सत्यन्तु परमन्तपः ।
यथाभूत प्रसादन्तु सत्यमाहुर्मनीषिणः ॥'

नीतिविदस्तु परानिष्टासम्भवे स्वेष्टलाभे चासत्यमपि ब्रूयादिति प्राहुः । तदुक्तं भारते—

"विवाहकाले रतिसंप्रयोगे प्राणात्यये सर्वधनापहारे ।
विप्रस्यचार्थे ह्यनृतं वदेत पञ्चानृतान्याहुरपातकानि" इति ।

'सत्यं भूतहितं प्रोक्तम्' । अनिष्टकरत्वादप्रियत्वेन तदश्रद्धेयमिति । स्मृतौ च 'प्राणात्यये अनृतं वदेदात्मनो वा परस्य च ।' इति । अन्यन्महाभारते राजधर्म्मप्रकरणे राजनीतौ । सति साधुः 'तत्र साधु' इति यत् ॥ ६८ ॥

द्वयोः सम्बद्धयोर्वस्तुसतोर्मध्ये एकमिच्छतः अन्यस्य परिहारे निषेधमाह नेति । अग्निं वह्निमिच्छता अभिलसता पुरुषेण, धूमो वह्निशिखा । न त्यज्यते नापि परिह्रीयते । यतस्तयोर्वह्निधूमयोः समनैयत्यसम्बन्धात् । तदुक्तं विश्वनाथैः 'साध्येन हेतुरैकाधिकरण्यं व्याप्तिरुच्यते'ति । स चाविनाभाव इति निगद्यते ।

## विपश्चित्स्वपि सुलभा दोषाः ॥ ७० ॥

सर्वदा जगति सत्यभाषणं दुर्लभमतो वह्निधूमयोः नियतसम्बन्धत्वे-नैकेच्छायामपरस्मरणवत् विषयस्वाभाव्याद् भाषणत्वेन सत्यभाषणे कदाचिदसत्यमपि समायात्येव । व्यावहारिके विषये सत्यानृतमिथुनीभावः नैसर्गिक एव । पारमार्थिके तु तदभावः । यद्वा सत्यासत्ययोर्नियतविषयसम्बन्धत्वेन विषयव्यवहारे एकेच्छायामपरस्य त्यागः सुदुष्कर इति नवीनाः सूरयः । आदर्शग्रन्थान्तरे तु 'नाल्पदोषाद् बहुगुणास्त्यज्यन्ते' इति सूत्रान्तरमस्ति । अस्यार्थश्च अल्पदोषाद्धेतोर्बहवो गुणा न त्यागार्हा भवन्ति । पूर्वोक्त सूत्रेणास्य गतार्थत्वान्नात्रोक्तम् ॥ ६८ ॥

विदुषामपि दोषस्यापरिहार्य्यत्वमाह विपश्चिदिति । व्यवहारकाले विपश्चित्सु मनीषिषु सुधीष्विति । दोषाः शरीरेन्द्रियमनसां वैकृत्यानि । तेषामयथार्थमनृतत्वञ्चेति । यद्वा शारीरदोषाः आलस्याधैर्य्यादयः । इन्द्रियदोषाः आन्ध्यबाधिर्य्यादयः । मानसदोषाः क्रोधेर्ष्यासूयाकामादयः । विषयदोषाः प्रमाद-मोह-भ्रम-लोभजनकत्वादयः । विषयस्यास्थैर्य्यात् कालस्य विपर्य्ययात् विषयप्राचुर्य्याच्च व्यवहारकाले विद्वत्स्वपि दोषाः भवन्ति । अविद्वत्सु ते नियत सुलभा एव । यथा ते दोषा अन्येषां हानिकरा नस्युस्तथैव सदा वर्त्तितव्यम् । 'आकर्षणे स्त्रियां कृष्टिर्भवेन्नातु विपश्चिति' इति रन्तिदेवः । प्रकृष्टं निश्चिनोति, चेतयति, चिन्तयति वा, 'पृषोदरादित्वात्' विपश्चिदिति साधुः ॥ ७० ॥

# नास्ति रत्नमखण्डितम् ॥ ७१ ॥
# मर्य्यादाभेदकं न कदाचिदपि विश्वसेत् ॥७२॥

---

रत्नस्यापि विभक्ततामाह नेति। सद्रत्नमपि सर्वजात्युत्-कृष्टम् अखण्डितं परिपूर्णं सर्वथा दोषशून्यं वा नास्ति। मालिन्य-वक्रादिदोषास्तेष्वपि महार्घ-मणिषु सम्भवन्ति। अतो विद्वत्-स्वपि तथैव दोषाः सम्भाव्याः। रत्नानां दोषो गुणश्चैषां परीक्षा मूल्यनिरूपणञ्चेति भोजराजकृत कल्पतरौ विद्यते। 'रत्नं स्वजाति श्रेष्ठेऽपि मणावपि नपुंसकम्' इति मेदिनी। 'रमु क्रीड़ायाम्' रमयति। ण्यन्तोऽन्तर्भावितण्यर्थो वा। रमन्तेऽस्मिन् 'रमेस्तच' इति नप्रत्ययः। 'नेड् वशि' इत्यादिना नेट, 'णेरनिटि'। यद्वा बाहुलकात् क्नप्, तुक् चेति। व्यक्तमन्यत् ॥ ७१ ॥

कार्य्यमर्य्यादाहानिकरस्य विश्वासाभावमाह मर्य्यादेति। मर्य्यादा अवधिः संस्था निष्ठेति यावत्। तस्या मर्य्यादायाः कार्य्यनिर्देशस्य भेदकं हानिकारकम्। कस्मिन्नपि काले नैव कोऽपि विश्वसेत् विश्वासं कुर्य्यात्। यदि कोऽपि वारमेकं वारद्वयं वा कर्म्म-रीतिं स्वाम्यादेशञ्च लङ्घयेत्तदा तं नैव विश्व-सेत्। किन्तु कार्य्यविशेषे परीक्षेत। यतोऽयं न्याय्यपथं परिहृत्य वर्त्तते नवेति। 'संस्थातु मर्य्यादा धारणा स्थिति' रित्यमरः। मर्य्या इति सीमार्थेऽव्ययम्। तत्र दीयते इति 'प्रागवदङ्' ॥ ७२ ॥

**अप्रियेण कृतं प्रियमपि द्वेष्यं भवति ॥ ७३ ॥**

**नमत्यपि तुलाकोटिः कूपस्योदक-क्षयं करोति ॥ ७४ ॥**

---

अविश्वस्तजनानुष्ठितस्य कार्य्यस्य द्वेष्यत्वमाह अप्रियेणेति। अनभीष्टजनेनानभीप्सितेनेति। कृतमनुष्ठितं सम्पादितं यत् कर्म्म। तत् प्रियमपि हृद्यं चेद्भवेत्तदाऽप्रियानुष्ठितत्वाद् द्वेष्यं पुनः सन्दिग्धत्वेनाप्रियमरोच्यं स्यात्। अतोऽनुष्ठातुर्विश्वस्तत्वेन प्रियत्वेन तत्कृतकार्य्यस्य प्रीतिकरत्वमिति भावः। 'अप्रिये कृतम्' इति सूत्रस्थः पाठभेदोऽस्ति। तेनायमर्थः अप्रिये शत्रौ कृतं यत्तदुत्तममपि कार्य्यं मन्दं स्यादिति। 'प्रियो वृद्ध्यौषधे हृद्ये धवे' इति हैमः। द्वेष्यः द्वेष्टुमर्हः। द्विष् अप्रीतौ, ततो ण्यत् प्रत्ययः। 'प्रीञ् तर्पणे' प्रीणाति। 'इगुपध' इति कः। 'द्वेष्ये त्वक्षिगत' इत्यमरः। अक्षिगतोऽक्षिविषयं गतः, शाकपार्थिवादिः ॥ ७३ ॥

तुलाकोटेरधो नमनेऽपि कूपात् सलिलोत्तलनकाले कूपोदकस्य वस्तुस्वभावात् क्षयकरणमाह नमतीति। तुलाकोटिः तुलादण्डस्याधोभागोऽग्रांशो वा, नमत्यप्यधोयात्यपि वस्तुस्वभावात् कूपस्य क्षुद्रजलाधारस्योदकक्षयं सलिलशोषं करोत्येव। अतोऽप्रियेण स्वाधीनेनापि सता कृतं कर्म्म द्वेष्यं भवतीति पूर्वसूत्रानुषङ्गः। सूत्रस्य पाठान्तरत्वेऽर्थान्तरमाह तुलादण्डे सुन-

## सतां मतिं नातिक्रमेत् ॥ ७५ ॥

---

तेऽपि कूपोदकस्य शोषणं क्रमेण करोति। देशविशेषे देवमातृ-कभूमौ तुलादण्डस्य एकस्मिन् पार्श्वे जलसंग्रहपात्रम्, अपरस्मिन् पार्श्वे गुरुभारद्रव्यं विन्यस्य ग्रामवासिनः क्षेत्रे सलिलसेकार्थं तदुत्तोलनं कुर्वन्तीति। 'तुला सादृश्यमानयोः। गृहाणां दारुबन्धाय पीठिकायामपीष्यते' इति विश्वमेदिन्यौ। तुल उन्माने तोलयति। चौरादिकादच्। 'अतुलोपमाभ्याम्' इत्यादि निपा-तनाद् गुणाभावः। णिजभाव पक्षे तु 'इगुपध' इत्यादिना कः स्यात्। 'कोटिः स्त्री धनुषोऽग्रेऽस्त्री-संख्याभेद प्रकर्षयोः' इति मेदिनी। कोटिः। कूट कौटिल्ये, कोटयति। 'अचइः' इत्यौणा-दिकादिः। अथवा 'इञजादिभ्यः' इति वार्त्तिकादिञ्॥७४॥

सज्जनानां मतिलङ्घने निषेधमाह सतामिति। सतां साधूनां समीक्ष्यकारिणां प्रेक्षावतामिति यावत्। मतिं ज्ञानमुपदेशं मनीषां वा। नातिक्रमेन्नैव लङ्घयेन्नावहेलयेद् वेति। ये तु विद्याप्रज्ञापारदर्शितादिभिर्वस्तुतत्त्वमवबुध्यादेशं विदधति तेषा-मादेशं हेला प्रमादाविवेकादिभिर्नैव लङ्घयेत्। तदतिक्रमे तु स्वस्य महानिष्टं स्यादिति भावः। 'सन् साधौ धीरशस्तयोः। मान्ये सत्ये विद्यमाने' इति मेदिनी। अन्यत्र च 'महाजनः। सभ्यसज्जन-साधवः'। सदिति। अस् भुवि, अस्ति। 'लटः शतृ' इत्यादि। 'श्नसोरल्लोपः'। 'धीः प्रज्ञा शेमुषी मतिः'। मन-ज्ञाने, मननं मन्यतेऽनया वा। 'मतिबुद्धीच्छयाः' इति क्तिन्।

**गुणवन्तमाश्रित्य निर्गुणोऽपि गुणी भवति ॥७६॥**

**क्षीराश्रितमुदकं क्षीरमेव भवति ॥७७॥**

---

'मत'मिति भिन्नपाठे साधूनां मतं नातिक्रमेदित्यर्थः स्यात् ॥ ७५ ॥

सतामाश्रयेणासतोऽपि सत्त्वं दर्शयन्नाह गुणवन्तमिति। निर्गुणो गुणहीनः। गुणा वैदुष्यशौर्य्यमहत्त्वादयः। तेभ्यो हीनो निर्गुणः। यद्वा नञल्पार्थे। निर्गुण इति अनुदरा-कन्यावदल्पगुणयुक्त इत्यर्थः। गुणवन्तं गुणिनमाश्रित्यावलम्ब्य तद्गुणशिक्षादिना निर्गुणो गुणवान् भवतीत्यर्थः। गुणाः सत्त्वा-दय इति सांख्यवृद्धाः। शुक्लादय इति शाब्दिकाः। श्वेतादयः इति शिल्पिनः। चतुर्विंशति संख्यका गुणा इति नैयायिकाः। सन्ध्यादयः षडिति स्वमते। धीरोदात्तादय इति कविसमयः। अन्ये तु चतुःषष्टिकलाविद्या अपि कामशास्त्र-मन्त्रशास्त्रोक्ता गुणत्वेन, व्यवहरन्ति। 'गुणोज्या सूत्रतन्तुषु'।

'रज्जौ सत्त्वादौ सन्ध्यादौ शौर्य्यादौ भीम इन्द्रिये।

रूपादावप्रधाने चे'ति हैमः।

गुण आमन्त्रणे, गुणयति, गुण्यते च। घञ् अचा वा सिद्धम् ॥ ७६ ॥

प्राज्ञ-सम्मेलनेनाप्राज्ञस्यापि तच्छ्रुतया प्राज्ञत्वमाह क्षीरेति। क्षीरं दुग्धं पय इति। तदाश्रितमुदकं वारि, तद्गुणसंमिश्रणेन

## मृत्पिण्डोऽपि पाटलि-गन्धमुत्पादयति ॥७८॥

---

क्षीरवन्मधुरं शुक्लं वा भवति नान्यत् । तदिदं सूत्रं पूर्वसूत्रस्योदाहरणभूतं ज्ञेयम् । प्रधानाश्रयादप्रधानमति तद्गुणस्य-भूय-आरोपात्तदेव भवति । यथा तटाकोदकं क्षीराब्धौ पतितं तदेव सुस्वादु भवति । यथा वा विद्वत्-सज्जन-सङ्गान्मूढ़ोऽपि ज्ञानिकल्पः स्यात् । 'क्षीरं पानीयदुग्धयो'रिति हैमः । क्षीरम्, 'घस्ल अदने' घस्यते । 'घसेः किच्च' इतीरन् । 'गम हन जन' इत्युपधालोपः । 'खरिच' इति चत्वम् । 'शासिवसि' इत्यादिना षत्वम् । उदकम् । उन्दी क्लेदने, उनत्ति । 'उदक'मित्युणादिसूत्रेण साधुः । न तु उन्दतीति विग्रहः कार्य्यः, उन्दे रौधादिकत्वात् ॥ ७७ ॥

द्रव्यान्तरसंयोगाद् वस्त्वन्तरस्य तद्गुणारोपमाह मृदिति । मृदः पिण्डः पिण्डाकारा मृदिति । सा च पाटलि-प्रसून सुरभिवत्तत्सह मेलनेन गन्धं सौरभमुद्व्यनक्ति । स च गन्धो नैव मृदः स्वाभाविकः किन्त्वपि सम्मेलनादेव तस्मात्तज्जायते । एवं विद्वत् संबन्धादज्ञोऽपि ज्ञानवान् भवतीति पूर्वसूत्रानुसृष्टार्थः । 'यथा सुरभिकुसुमसम्पर्कादस्त्रं तदामोदवासितम्भवति' इति सांख्यदर्शनभाष्ये । मृदिति । 'मृद क्षोदे' मृद्यते । सम्पदादित्वात् साधु । मृदिति पञ्चीकृतपञ्चमहाभूतेषु स्थूलः प्रथमोभूतः ।

**रजतमपि कनकसम्पर्कात् कनकमेव भवति ॥७९॥**

**उपकर्त्तर्य्यपकर्त्तुमिच्छत्यबुधः ॥ ८० ॥**

---

'पिण्डोबोले बले सान्द्रे देहागारैकदेशयोः।
देहमात्रे निवापे च गोलसिह्लकयोरपि ॥'

इति मेदिनी। पिड़ि सङ्घाते, पिण्डयते, पिण्डते वा। ततः पचाद्यच् घञ् वा। 'गन्धः सम्बन्धलेशयोः। गन्धकामोदगर्वेषु' इति हैमः। गन्ध अर्द्दने, गन्धयति। अस्मादच् ॥ ७८ ॥

वस्त्वन्तरसंयोगेऽपरद्रव्यस्यावस्थान्तरत्वं पुनरुदाहरणमुखेनाह रजतमपीति। रजतं रौप्यम्। कनकस्य सुवर्णस्य सम्पर्कात् कनकमेव भवति। न तु लोहादि। तत्रैव संयोगविशेषेणाधिकशक्ति-द्रव्यसम्मेलनेन 'अवस्थितस्य धर्म्मिणः पूर्वधर्म्मनिवृत्तौ धर्म्मान्तरोत्पत्तिर्भवतीति' तात्त्विकनियमः। वस्तुनो लघुसम्बन्धाल्लघुत्वं गुरुसम्बन्धाच्च गुरुत्वञ्चेति। 'यथा तुम्बीफला लम्बो लोहोऽपि प्लवते जले'। यथा वा 'अश्मापि याति देवत्वं महद्भिः सुप्रतिष्ठितः' इति। 'रजतं रङ्गने रूप्ये शाणिते क्षद हारयोः' इत्यजयः। रञ्ज रागे, रजति, रज्यतेऽनेन वा। 'पृषिरञ्जिभ्यां कित्' इत्यतच्। 'कनकं हेम्नि पुंसि स्यात् किंशुके नागकेशरे' इति मेदिनी। कनी दीप्तौ, कनति। 'क्वुनादिभ्यो वुन्' ॥ ७९ ॥

अधुनोपकार कर्त्तुरपकारकरणमाह उपेति। उपकर्त्तरि

तद्विपरीतो बुधः ॥ ८१ ॥

न पापकर्म्मणां संक्रोशभयम् ॥ ८२

---

हितकारिणि पुंसि । अबुधोऽज्ञो मन्दमतिः क्रूर इति यावत् । अपकर्त्तुमपकारं हानं कर्त्तुं मूर्खत्वदोषादिच्छति अभिलषति हिताहित-विवेकशून्यत्वादिति भावः । अतोऽज्ञस्योपकार-करणमपि बुद्धिपूर्वकमुक्तम् । तादृशजनस्य विगानं कृतं विष्णु-शर्म्मणा । 'उपकारिणि विश्वस्ते शुद्धमतौ यः समाचरति पाप'-मिति । कृञ् करणे, उपकरोति, उपपूर्वात् करोतेस्तृच् । 'बुधः कवौ रौहिणेये' इति विश्वः । बुध अवगमने, बुध्यते । 'इगुपध' इत्यादिना कः ॥ ८० ॥

असज्जनविरीतत्वं ज्ञानिनो दर्शयन्नाह तदिति । तत् तस्माद् अज्ञादुपकर्त्तुरपकारकाच्च । बुधः पण्डितो मनो-षीति यावत् । विपरीतो भिन्नः, सन् पृथग्भावमाचरतीति शेषः । प्राज्ञो जनः उपकर्त्तुः प्रत्युपकारं विदधाति । एवमप-कर्त्तुरपि हठान्नापकारमाचरतीति प्राज्ञाज्ञयोर्विवेकः । 'बुधः सौम्ये पण्डिते च' इति मेदिनी । इण् गतौ, एति । विपरि-पूर्वादेतेः क्तः ॥ ८१ ॥

दुष्कृतकर्म्मकर्त्तुः संक्रोशनभयाभावमाह नेति । पापं दुरितं दुष्कृतमिति । तदेव कर्म्म येषां तेषां जनानाम् । संक्रोशस्या-क्रोशस्य परीवादस्येति । तथा नृप दण्ड-परकाल-नरकानामपि

उत्साहवतां शत्रवोऽपि वशीभवन्ति ॥ ८३ ॥

---

भयं भीतिर्नास्ति। ये क्रूराः पापनिरतास्तेषां प्रवृत्तिरपि हीना। अतस्ते पापशीलाः, भयन्तु तेषां प्रागेवास्ताम्। 'पापं दुरितं किल्बिषं नरकजनक'मिति। 'भीतिर्भीः साध्वसं भय'मित्यमरः। 'ञिभी भये' बिभेति। 'अज् विधौ भयादीनामुपसंख्यानम्' इति वार्त्तिकात्तत् सिद्धम्। 'पा रक्षणे' पान्त्यस्मादात्मानम्। 'पानीविषिभ्यः पः' इत्यौणादिकः। भीमादित्वादपादाने। यद्वा 'पा पाने' यत् पिबति भक्षयति कर्त्तारमिति तत् पापम् ॥८२॥

उत्साहिनां गुणवत्त्वेन शत्रु वशित्वमाह उदिति। उत्साहवतामध्यवसायिनां कार्य्यसाधनशक्तिमतामिति। उत्साहो विद्यते येषां ते उत्साहवन्तस्तेषाम्। शत्रवः अरातयः। वशी भवन्ति तद्गुणेनानुगताः स्युः। अध्यवसायादिशक्तेः प्रभावादरयः पराभवभीत्यानुगामिनो भवन्तीति भावः। तदुक्तं वृद्धैः 'परेषां वश्यतायान्तु स्वशक्तिः स्याद्गरीयसी'ति। 'उत्साहोऽध्यवसायः स्या'दित्यमरः। 'उत्साहस्तूद्यमे सूत्रे' इति च। सह मर्षणे, उत्सहनम्। ततो 'हलश्चेति' घञ्। 'विक्रमबलमुत्साहशक्ति'रिति नीतिविदः। 'शत्रुरराति-दुर्हृद्-मित्रमरि द्विषः' इति। शद्लृ शातने, शातयति, इति ण्यन्तः। 'रुशातिभ्यां क्रुन्' इत्यौणादिकात् क्रुन्। 'बहुलमन्यत्रापि' इति णिलुक् ॥ ८३ ॥

**विक्रमधना राजानः ॥ ८४ ॥**

**नास्त्यलसस्यैहिकामुष्मिकम् ॥ ८५ ॥**

---

भूपालस्य विक्रमेण धनवत्त्वमाह वीति। विक्रमः शक्तेः प्राखर्य्यम्, पराक्रमशक्तिरेव धनं सम्पद् येषां भूपानां ते विक्रमधना राजानो भवन्तीति शेषः। राज्ञोऽन्यत् सर्वं विक्रमायत्तमतस्तदेव रत्नवद्धनमिति लभ्यते। 'विक्रमः शक्तिरासक्तिः क्रान्तिमात्रञ्च विक्रमः' इति धरणिः। स च शक्तित्वेन नीतौ लभ्यते। तिसृणां शक्तीनां वृत्तं प्रागुक्तम्। क्रमु गतौ, विक्रमणम्। विक्राम्यतेऽनेन वा घञा सिद्धम्। 'धनन्तु गोधने वित्ते' इति विश्वः। धन धान्ये, धनति। ततोऽच् प्रत्ययः ॥ ८४ ॥

आलस्यान्वितस्य पुंस ऐहिकामुष्मिकाभावमाह नेति। अलसस्य मन्दशक्तेः कार्य्योत्साहहीनस्येति। ऐहिकमिहलोककार्य्यम्। आमुष्मिकं पारलौकिकम्। एतद् द्वयं मन्दशक्तेरलसस्य नास्ति न भवति। यत आलस्या दैहिककार्य्यानुष्ठानाभावाद् मन्दकार्य्यकरणाच्च। तेन तत्कर्म्मफलं पारलौकिकमपि न स्यात्। अतः सर्वथोत्साहोद्यमाध्यवसाययुक्तेन भाव्यम्। अलसः, लस श्लेषणे, न लसति। अचा सिद्धम्। आमुष्मिकम्। अमुष्मिन्। अदसः 'सप्तम्यास्तल्'। तत्र भव इति भवार्थे ठञ् ॥ ८५ ॥

**निरुत्साहो दैवं परिशपति ॥ ८६ ॥**

**मत्स्यवज्जलमुपयुज्यार्थं गृह्णीयात् ॥ ८७ ॥**

---

आलस्यादुत्साहहीनस्य पुंसः दैवे आक्रोशमाह निरिति। नास्ति उत्साहोऽध्यवसायो यस्य सः। दैवमदृष्टं नियतिम्। परि सम्यक् शपति आक्रोशति। पौरुषभिन्नं यत् कर्म्मफलन्तद्दैवमिति केचित्। 'दैवं पुरुषकारेण दुर्बलं ह्युपहन्यते' इति नीतिविदः। उक्तव्याख्यातेन व्याख्यातमन्यत्। 'निरुत्साहाद्दैवं पतती'ति पाठान्तरत्वे उत्साहाभावाद् दैवमपि नष्टं स्यादित्यर्थो बोध्यः। तदर्थं कविपुत्र आह—'उत्साहहीनस्य न पौरुषेयं, तथाविधस्यापि न दैवकार्य्य'मिति ॥ ८६ ॥

कठिनबन्धनमुपलभ्यापि स्वकार्य्यसाधनमाह मत्स्यवदिति। यथा मत्स्यो मीनो जलं जालञ्च मत्स्यबन्धनमानायः। तमुपयुज्य सम्प्राप्य प्रविश्यापि, अर्थं स्वावश्यकं वस्तु गृह्णीयात्। तद्वल्लोकः कठोरबन्धनमुपलभ्यापि स्वल्पप्रयोजनं महाप्रयोजनं वा साधयेत्। 'मत्स्यार्थीवज्जलमुपयुज्ये'ति पाठे तु यथा झषार्थी मत्स्यप्रयोजनवान् जलमुपयुज्य सलिलं प्रविश्यावतर्य्य च स्वार्थं गृह्णाति तद्वद् लोको गहनं बन्धनं वोपलभ्य प्रकृष्टं कार्य्यं साधयेत्। 'मत्स्यो मीनेऽथ पुंभुम्नि देशे' इति। 'जालं वृन्दगवाक्षयोः' क्षारकानायदम्भेषु' इति रभसः। मत्स्य। मदी हर्षे, माद्यति।

**अविश्वस्तेषु विश्वासो न कर्त्तव्यः ॥८८॥**

**विषं विषमेव सर्वकालम् ॥ ८९ ॥**

---

'ऋतन्यञ्जि' इत्यौणादिकात् ष्यन् । जलमेव जालम् । जालमिति पाठः सम्यक् । जल धान्ये, जलति घनो भवति । 'ज्वलिति' इत्यादिना णः । यद्वा जले च्रियते 'शेषे' इत्यण् । अथवा जल सम्बरणे, चौरादिकः, जालयति । 'पचाद्यच्' ॥८७॥

अविश्वस्तस्य विश्वासकरणाभावमुपदिशन्नाह एति । नास्ति विश्वासो विस्रम्भो येषु ते जना अविश्वस्ताः तेषु । विश्वासो दृढ़प्रत्ययो न कर्त्तव्यो नैव कार्य्यः । तदुक्तं नीतिनिपुणैः 'न विश्वसेदविश्वस्ते विश्वस्ते नाति विश्वसेत्' इति । अपरञ्च—

'कुसौहृदे न विश्वासः कुदेशे न प्रजीव्यते ।
कुराजनि भयं मित्यं कुपुत्त्रे सर्वदा भयम् ॥'

इति स्मृतौ । 'समौ विस्रम्भविश्वासौ' इत्यमरः । 'अविस्रम्भेषु' इति पाठान्तरम् । तेन नार्थभेदः । 'विश्वस्ते जातविश्वासे विश्वस्ता विधवा स्त्रियाम्' इति मेदिनी । श्वस प्राणने, विश्वसिति, ततः विपूर्वात् 'गत्यर्था' इति क्तः । 'आगमशासनस्यानित्यत्वान्नेट' ॥ ८८ ॥

सर्वदा विषस्य विषत्वमेवाह विषमिति । विषं गरलं यद्विषमेव प्राणादिहारकम् । सर्वकालं सर्वदा भवति नामृतम् कदाचित् । ततोऽविश्वस्तः क्वचिन्न विश्वासभाजन इति पूर्वसूत्रा-

**अर्थं सामान्यैर्वैरिणा संसर्गो न कर्त्तव्यः ॥९०॥**

**आर्य्यार्थमेव नीचस्य सम्बन्धः ॥९१॥**

---

नुषङ्गः। यत्तूक्तं महाकविना 'विषमप्यमृतं क्वचिद्भवे'दिति तदीश्वरेच्छयैवा लौकिके व्यापारे। स्वरूपेण तु विषं नामृत नवान्यच्च। 'क्ष्वेड़न्तु गरलं विष'मित्यमरः। 'कालो मृत्यौ महाकाले समये यमकृष्णयो'रिति। विषम्। विषॢ व्याप्तौ, विषप्रयोगे वा, वेवेष्टि कायम्। ततः 'इगुपध' इत्यादिना कः। कालः। कल संख्याने शब्दे च, कल्यते। ततो घञ्। यद्वा कालयति सर्वमिति ण्यन्तात् 'पचाद्यच्' ॥ ८९ ॥

आर्थिककार्य्यविषये शत्रुसम्बन्धनिषेधमाह अर्थेति। अर्थसामान्यैर्धनसम्पादितकार्य्यैः। वैरिणा शत्रुणा सार्द्धं संसर्गः सम्मेलनं न कार्य्यम्। शत्रुणा सहार्थविनिमये कार्य्यगतार्थसम्बन्धे वानर्थसम्भावना गरीयसीति रहस्यार्थः। 'अर्थसमादाने वैरिणां सङ्ग एव न कर्त्तव्यः' इत्थं पाठान्तरमस्ति। तेनार्थः सुगम इति। 'रिपौ वैरिसपत्नारिद्विट्' इत्यमरः। वैरी वीरस्य भावः कर्म्म वा। 'युवादित्वात्' 'वैरमैथुनिकयोः' इति निर्द्देशाद्वा अण्। वैरमस्यास्तीति इनिः। संसर्गः। सृज विसर्गे, संसृजनम्। ततो घञ्। उपसर्ग योगात् सम्बन्धार्थत्वम् ॥९०॥

हीनजन-सम्बन्धमाह आर्य्यार्थमिति। आर्य्यः स्वामी श्रेष्ठः पूज्यश्च। वणिगपरो वैश्यश्च। यद्वा अर्य्य एवार्य्यः। तदर्थं स्वाम्यर्थं

**अर्थसिद्धौ वैरिणं न विश्वसेत् ॥ ८२ ॥**

**अर्थाधीन एव नियत-सम्बन्धः ॥ ८३ ॥**

---

नीचस्य नीचेन प्राकृतजनेन सह सम्बन्धः कार्य्यः। यदि च नीचसङ्गात् स्वामित्ववित्तलाभ सम्भावनास्ति तदा तत्कर्त्तव्यम्। नान्यथा नीचसङ्गो विधेयः। यतो 'हीयते हि मतिस्तात हीनैः सह समागमात्' इति। यद्वा अर्यो वैश्यस्तद्वृत्तिर्वणिज्या। तदर्थं वाणिज्यार्थं हीनसम्बन्धः कार्य्यः। एवकारान्नान्यस्मिन् धर्म्म-कार्य्यादौ। 'स्यादर्य्यः स्वामि-वैश्ययोः' इत्यमरः। ऋ गतौ, अर्य्यते। 'अर्य्यः स्वामिवैश्ययोः' इति साधुः। नीचः। चिञ् चयने, निकृष्टाम् ई' लक्ष्मीं चिनोति। 'अन्येभ्योऽपि दृश्यते' इति वार्त्तिकाच्चिञ् धातो डः। बन्ध बन्धने, बध्नाति। संपूर्वादच् प्रत्ययेन साधुः॥ ८१ ॥

अर्थार्ज्जने तल्लाभकार्य्ये शत्रुषु विश्वासाभावमाह अर्थेति। अर्थसिद्धौ अर्थलाभे, तदर्ज्जने निष्पत्तौ वा। वैरिणं रिपुं न विश्वासं कुर्य्यादिति। कृते विश्वासे अर्थहानिर्विवादश्च भवि-ष्यतीति भावार्थः। शत्रुष्वविश्वासविषयः प्राक् प्रपञ्चितः। 'सिद्धस्तु मोक्षे निष्पत्तियोगयो'रिति हैमः। सिद्धिः, षिधु संराद्धौ, सिध्यति। ततः क्तिच्। 'रिपौ-वैरि-सपत्न-द्विड़रातय' इति। वीरस्य भावः कर्म्म वा वैरम्। तद्विद्यतेऽस्येति णिनिः॥८२॥

प्रभूभृत्ययोर्विषयव्यापारे च सम्बन्धस्यार्थाधीनत्वमाह अर्थ

शत्रोरपि सखा सुतो रक्षितव्यः ॥ ९४ ॥

इति। अर्थाधीनोधनायत्तः सामान्यवस्त्वायत्तश्च नियतो निश्चित-सम्बन्धः। कर्म्मसु धनादानप्रदानरूपसम्बन्धं विना नियत-सम्बन्धो न स्यात्। विषयस्यानन्त्यात् सम्बन्धा अपि जगति अनन्ताः। दुर्लभश्च निःस्वार्थसम्बन्धः। अर्थसम्बन्धविषये भारते भीष्मदेवैरुक्तम् 'अर्थस्य पुरुषो दासो दासस्त्वर्थो न कस्यचि'-दिति। अर्थलक्षणं सोमदेवेनोक्तम् 'यतः सर्वप्रयोजनसिद्धिः सोऽर्थः'। तदर्थं वल्लभदेव आह—

"गृहमध्यनिखातेन धनेन धनिनो यदि।
भवामः किन्नतेनैव धनेन धनिनो वयम्" ॥

बर्गदेवश्च—

"अर्थानुबन्धमार्गेण योऽर्थं संसेवते सदा।
स तेन मुच्यते नैव कदाचिदिति निश्चयः" ॥

अर्थानुबन्धाश्च त्रयो भवन्ति यथा—'अलब्धलाभो लब्धपरि-रक्षणं, रक्षितपरिवर्द्धन'ञ्चेति ॥ ९३ ॥

शत्रुतो रक्षणं सख्यु स्तनयस्यापि समुचितमिति प्राह शत्रो-रिति। शत्रोररातेर्वैरिणश्च सकाशात् सख्युः सुहृदस्तनयस्य च रक्षणं समुचितम्। अन्यथा तयोस्तेन वैरिणा महानिष्टं साधितं स्यात्। मतिमता सदा तौ रक्षणीयौ। एवं रोगविपदनर्थेभ्य-श्चेति योजनीयम्। 'अथ मित्रं सखा सुहृत्' इत्यमरः। 'आत्म-जस्तनयः सूनुः सुतः पुत्र' इति च। नीतिविद्भिः सखिलक्षण-

**यावच्छत्रोश्छिद्रं पश्यति तावद्धस्तेन स्कन्धेन वा वाह्यः ॥ ८५ ॥**

मित्यमुक्तम् 'एकक्रियो भवेन्मित्रः समप्राणः सखा मतः' इति । 'शत्रोरपि शत्रुसखाद्रक्षितव्य' इत्येवं पाठान्तरत्वे त्वयमर्थः । यथा शत्रोः सकाशाद्रक्षितव्यस्तथा शत्रुसखादपि रक्षणीयः । शत्रु-सख इति 'राजाह-सखिभ्यष्टच्' इत्यनेन विबुधसखवदिति सिद्धम् ॥ ८४ ॥

शत्रोश्छिद्रान्वेषणकाले तस्य स्कन्धेन वाह्यत्वमाह याव-दिति । यावदित्यवध्यर्थे । यावत्कालं शत्रोररातेश्छिद्रं प्रवे-शपथं स्वप्रयोजनार्थमनिष्टार्थं वा पश्यति । तावच्छत्रुः स्नेह-भाजनमिव हस्तेनोपादेयवस्त्विव स्कन्धेनांसेन वाह्योवहनीयः । अन्यथा तस्य च्छिद्र-दोषयोरनुसन्धाने व्याहतिरापतिष्यति । किं वा मदीय दोषपथं स अनुसन्धास्यति दुःसमये अनिष्टं वा साधयिष्यति । अतः स विनयेन धनादिना वा वशीकार्य्यः । यथा च जलार्थिना वारिपूर्णघटः स्कन्धेन वाह्यः सिद्धे प्रयोजने तं पाषाणे भिन्द्यादिति । छिद्र भेदने, च्छिद्रयते । छिदिर् द्वैधी-करणे च, इत्यनयोः क्रमेण घञा 'स्फायि' इत्यादिना रका च सिद्धम् । 'स्कन्धः प्रकाण्डे कायोऽंसे विज्ञानादिषु पञ्चसु । नृपे समूहे व्यूहे च' इति हैमः । स्कन्दिर गति शोषणयोः, स्कन्द्यते । कर्म्मणि घञ् । पृषोदरादिः । यद्वा 'स्कन्देरच् स्वाङ्गे' इत्यौ-णादिकाद्धन्तादेशश्च । 'बाहुलकादसुन्यपि धः' ॥ ८५ ॥

**आत्मच्छिद्रं न प्रकाशयेत् ॥ ८६ ॥**

**शत्रुं छिद्रे परिहरेत् ॥ ८७ ॥**

---

स्वस्य च्छिद्रप्रकाशेऽनिष्टभयान्निषेधमाह आत्मेति। आत्मनो निजस्य छिद्रं दोषं परानुसन्धानपथं न प्रकाशयेत्। शत्रुषु स्वानिष्टकरणावकाशं नैव दद्यात्। तदुक्तं नीतिनिपुणैः 'नात्मच्छिद्रं परे दद्यात् परच्छिद्रं प्रकाशयेत्। गूहेत् कूर्म्म इवाङ्गानि' इति। मानवधर्म्मशास्त्रे सप्तमाध्याये कौटिल्लीयार्थशास्त्रे च परिवर्त्तितपाठः श्लोकोऽयं दृश्यते। तद्यथा—

'नास्य गुह्यं परे विद्युश्छिद्रं विद्यात् परस्य च।
गूहेत् कूर्म्म इवाङ्गानि यत्स्याद्विवृतमात्मनः' ॥

'छिद्रं विवर-रन्ध्र-दोष-श्वभ्र-सुषिरा' इति। अन्यत् कृतव्याख्यानम् ॥ ८६॥

पुनर्योग्यकाले सम्प्राप्ते शत्रुत्यागमाह शत्रुमिति। शत्रुमरातिं वैरिणमिति। तदीये छिद्रे दोषेऽनिष्टपथे विपथे विपदीति यावत्, प्राप्ते इति शेषः। परिहरेत्—त्यजेदित्यर्थः। 'प्रहरेदिति' पाठे तु व्यसने सम्प्राप्ते तं रिपुं प्रहरेत् विपन्नं कुर्य्यात्। तथाचोक्तम् 'तमेव काले सम्प्राप्ते भिन्द्याद् घटमिवाश्मनि' इति। शद्लृ शातने, शातयतीति शत्रुः। 'रुशातिभ्या'मित्यौणादिकात् क्रुन् ॥ ८७ ॥

**छिद्र-प्रहारिणो हि शत्रवः ॥ ९८ ॥**

**स्वहस्तगतमपि शत्रुं न विश्वसेत् ॥९९॥**

---

शत्रूणामनिष्टसाधनकौशलमाह छिद्रेति । छिद्रेषु परानु-सन्धेयदोषपथेषु । प्रहारिणः प्रहारशीलाः शत्रवो भवन्ति । ते च साक्षाद्वैरितासाधने वाधासम्भवादक्षमा भवन्ति । छिद्रे प्रहर्त्तुं शीलमेषामिति प्रहारिणः । यस्य तु शत्रवः सन्ति स सर्वदा जागरूकः स्यात् । केचित्तु छिद्रप्रहारिणः छिद्रान्वेषिण इत्येव मर्थं प्रोचुः । 'छिद्रं विवररन्ध्रवत् । गर्त्ते दोषे' इति हैमः । प्रागुक्तं पदनिरुक्त्यादि ॥ ९८ ॥

हस्तागतशत्रौ तत्स्वभावक्रौर्य्याद्विश्वासाभावमाह । स्वेति । स्वस्यात्मनो हस्तगतं करायत्तमपि शत्रुमरातिम् । न विश्वसेत् नैव तस्मिन् विश्वासं कुर्य्यात् । निश्चित-प्रत्ययोविश्वासः । स्व इत्यधिकपाठ इति केचिदाहुः, हस्तस्य नियतं स्वदेहसम्बन्धात् । तदुक्तं पूर्वविद्भिः—

'न विश्वसेदविश्वस्ते विश्वस्ते नाति विश्वसेदिति' ।

'हस्तः करे करिकरे सप्रकोष्ठ करेऽपि च । ऋक्षे केशात्-परो व्राते' इति मेदिनी । हस्तः । हसे हसने, हसति । 'हसि-मृग्रिण्' इत्यौणादिकात्तन् ॥ ९९ ॥

**स्वजनस्य दुर्वृत्तं निवारयेत् ॥ १०० ॥**

**स्वजनावमानो हि मनस्विनां दुःखमावहति**

**॥ १०१ ॥**

---

आत्मीयानां दुर्वृत्ततावारणं सप्रयोजनमाह स्वेति। स्वस्य जनानां परिवाराणाम् । दुर्वृत्तता दुर्दान्तता गर्हिताचरणमिति। दुर्वृत्तमिति भावप्रधाननिर्देशः। दौर्वृत्त्यमिति। दुष्टं वृत्तमाचरणमस्येति वा । यदि स्वजना दुराचाराः स्युस्तदा स्वस्यापि हानिः स्यादतस्तेषामसदाचरणं निवार्य्यम् । पुत्त्रभृत्यप्रजानान्तु अवश्यमेव तस्य निवृत्तिर्विधेया । तं निवारयेत् तस्य निवृत्तिं कुर्य्यात् । स्वजनस्य यो दुर्वृत्तः दस्युर्दुर्दान्तोऽनिष्टकारो, तं तत्र प्रतिरुन्ध्यात् । 'दुष्टो दुर्वृत्तोदुर्दान्तो दुराचारश्च दुर्मद' इति । 'वृत्तं वृत्तौ दृढे मृते । चरित्रे वर्त्तुलेच्छन्दः' इति हैमः । वृञ् वरणे, वृतु वर्त्तने च इत्यनयोः क्तः स्यात् ॥ १०० ॥

आत्मीयजनानाम् अपमानकरणेन स्वीय क्लेशः स्यात्तदाह स्वेति। स्वस्य जनानाम् स्व-सम्बन्धिनामवमानोऽवज्ञेति यावत् । तेन च मनस्विनां मतिमतां प्रभाववतामिति। दुःखं मनस्तापम् आवहति आनयति। 'अवमानोऽपमानस्तिरस्कारोऽगौरव'मिति। अवपूर्वान्मनेर्घञ् । मनस्वी । प्रशस्तं मनोऽस्येति। आवहतीति, आङ्पूर्वाद् वहेर्लटि तिप् ॥ १०१ ॥

एकाङ्गदोषः पुरुषमवसादयति ॥ १०२ ॥

शत्रुं जयति सुवृत्तः ॥ १०३ ॥

---

गुणेष्वपि एकेन दोषेण पुरुषोऽवसन्नो भवत्यतस्तदाह एकेति। एकस्मिन् अङ्गे दोषः क्षतचिह्नाङ्गवैकल्यादिरूपः। स च पुरुषं मानवम्। अवसादयति गौरवहीनं करोति अवनमति च। अतो दोषमात्रं त्याज्यम्। तदुक्तं कविभिः 'एको हि दोषो गुणसन्निपाते' इति। सर्वथा दोषाद् गुणः श्रेयान्। अङ्गम्। अगि गतौ, अङ्गति। अच्प्रत्ययेन सिद्धम्। दुष् वैकृत्ये, दुष्यति 'पचाद्यच्'। पुर अग्रगमने, पुरति। 'पुरः कुषन्' इत्यौणादिकाद्रूपम्। 'अन्येषामपि दीर्घत्वे' पूरुषोऽपि। अथवा पूरी आप्यायने, पूरयति। बाहुलकात् कुषन्। 'पूरि स्थूलशरीरे शेते इति पुरुष' इति तत्त्वकौमुद्यां मिश्राः ॥ १०२ ॥

सद्गुणावलीयुक्तस्य पुंसः शत्रुजयसम्भावनामाह शत्रुमिति। शत्रुमरिमरातिम्। सुवृत्तः सुकृती सद्वृत्तिसम्पन्नः कुशल इति यावत्। सु शोभनं वृत्तं यस्येति। जयति अभिभवति, उत्कर्षेण वर्त्तते वा। यद्वा वृत्तं वृत्तिः सन्नीतिस्तद्युक्तः। 'वृत्तं वृत्तौ दृढे मृते। चरित्रे वर्त्तुले छन्दः' इति हैमः। प्रागुक्तमन्यत्।—

'निरुत्साहो निरानन्दो निर्वीर्यो निर्गुणः पुमान्।
किं जेतुं शक्यते तेन तस्यात्मा चाप्यरक्षितः' ॥

**निकृति-प्रीया नीचाः ॥ १०४ ॥**

**नीचस्य मतिर्न दातव्या ॥ १०५ ॥**

---

'नीतिशास्त्रविहीनो यः प्रज्ञावानपि हन्यते।
परैः शस्त्रविहीनस्तु चौराद्यैरपि वीर्य्यवान्' ॥

इति गुरुभिरुक्तम्। शत्रुतो यस्य गुणसम्पद्राजिरधिका स शत्रुजेता स्यात् १०३ ॥

दुष्कार्य्य-प्रियत्वं नीचानामाह निकृतीति। नीचा हीनाः क्रूराः शठा इति यावत्। ते स्वभावतः शाठ्य कापट्य प्रतारण प्रिया भवन्ति। तेषां तानि गर्हिताचरणानि रुचिकराणि स्युः। निकृष्टा कृतिः क्रिया परप्रतारणादिरूपा। यद्वा पराभीष्टस्य निकर्त्तनं निकृतिः। यथा वा श्वान उच्छिष्ट प्रियाः। तस्करा अन्धकारप्रियास्तथा परहानिकराः शठाश्चेति। 'निकृतिर्भर्त्सने क्षेपे शठे शाठ्येऽपि च स्त्रियाम्' इति विश्वः। कृती छेदने, कृन्तति। 'इक् कृष्यादिभ्यः' इतीक्। नीच इति निकृष्टामीं लक्ष्मीं चिनोति, चिञ् धातोः 'अन्येभ्योऽपि दृश्यते' इति वार्त्तिकाड्डः ॥ १०४ ॥

हीनमानवस्य ज्ञानोपदेशे निषेधमाह नीचस्येति। नीचस्येति नीचाय हीनाय शठाय इति यावत्। सूत्रे छन्दोवन्नियमाच्चतुर्थ्यर्थे षष्ठी। अथवा दाननिषेधातुर्थ्यभावः। यतो 'विवक्षातोहि कारकाणि भवन्ती'ति। 'मा प्रयच्छेश्वरे धन'-

नीचेषु विश्वासो न कर्त्तव्यः ॥ १०६ ॥

---

मितिवत् । मतिर्ज्ञानं सद्‌बुद्धिश्च । न देया नार्पणीया । अपात्रे दाने फलवैपरीत्यमनिष्टं भवतीति । गोक्षुराशनोपदेशवत् । मूर्खस्य नीचस्य बुद्धिर्विपथगामिनी । उक्तञ्च प्रजागरपर्वणि—

"अकामान् कामयति यः कामयानान् परित्यजेत ।
बलवन्तञ्च यो द्वेष्टि तमाहुर्मूढ़चेतसम्" ॥

तत्रैवान्यच्च—

"अमित्रं कुरुते मित्रं मित्रं द्वेष्टि हिनस्ति च ।
कर्म्म चारभते दुष्टं तमाहुर्मूढ़चेतसम्" ॥

'धीः प्रज्ञा शेमुषी मतिः' इत्यमरः । मनः ज्ञाने, मननं, मन्यतेऽनया वा ततः क्तिन् ॥ १०५ ॥

हीनेषु विश्वासाकरणमाह नीचेष्विति । नीचेषु क्रूर-शठ-वञ्चकेषु । विश्वासो निश्चित प्रत्ययः दृढ़ावधारणम् । न कर्त्तव्यः न विधेयः । तेषु विश्वासान्महानिष्टं स्यात् । परन्ते यदि शिक्षिताः परीक्षिता स्युस्तदा कार्य्यविशेषे नीचा अपि विश्वासार्हा इति । तदुक्तं भागुरिणा—

"शत्रोः सकाशतः प्राप्तं सेवार्थं शिष्टसम्मतम् ।
परीक्षा तस्य कृत्वाथ प्रसादः क्रियते ततः" ॥

'निकृतिः पामरो नीचः शठो हीनस्तथैव च' इति वैजयन्ती । नीचसम्मेलनान्महतो विपदापतति । तथा च 'खलः

**सु-पूजितोऽपि बाधते दुर्जनः ॥ १०७ ॥**

**शिरसि प्रस्थाप्यमानो वह्निर्दहत्येव ॥१०८॥**

---

करोति दुर्वृत्तं नूनं फलति साधुषु' इति । श्वस प्राणने, विश्वसनम् । ततो घञ् ॥ १०६ ॥

दुर्वृत्तजनस्य स्वभावमाह स्विति । दुर्जनः दुर्दान्तः क्रूर इति । स च सुपूजितः सम्यक्सम्मानितः मानदानेनाप्यायितः । अपिः सम्भावनार्थे । बाधते अनिष्टमाचरति । उप कर्त्तारं पोड़यति वा । तदुक्तं वृद्धैः 'दुर्जनः परिहर्त्तव्यो विद्ययालङ्कृतोऽपि सन्' इति । दुर्जनः स्वभावस्य दुरतिक्रमणीयत्वेनाहिवद्दुग्धं पीत्वा गरलं वमतीति । 'पिशुनो दुर्जनः खलः' इत्यमरः । दुष्टोजनो दुर्जनः 'कुगति' इत्यादिना समासः ॥ १०७ ॥

पिशुनेषु सम्मानादेर्भूयस्त्वेऽपि अनिष्टाचरणमाह शिरसीति । यथा शिरसि मूर्द्धनि मस्तक इति । प्रस्थाप्यमानो धार्य्यमाणोऽपि वह्निरग्निरनलः । धर्त्तारमपि निश्चितं दहति । यतः 'अपि निर्वाणमायाति नानलो याति शीतता'मिति । तथा दुर्जनोऽपि सत्कृत उपकृतः सन् तदुपकर्त्तारं सम्यक्पीड़यतीति पूर्वसूत्रानुषङ्गः । तदुदाहरणमुखायमानं सूत्रमिदम् । 'अग्निर्वैश्वानरो वह्निः' इत्यमरः । वह्निः । वह प्रापणे, वहति हव्यम् । 'वहिश्रिश्रुयुद्रु' इत्यादिना निर्निच्च । दह भस्मीकरणे दहति । ततो लटस्तिप् ॥ १०८ ॥

**कञ्चिदपि पुरुषं नावमन्येत ॥ १०६ ॥**

**क्षमन्त इति पुरुषान् न बाधयेत् ॥११०॥**

---

पुरुषावमानना प्रतिषेधमाह कमिति। कञ्चित् पुरुषं मानवं वृथा हेलया, क्रोधेन वा। नावमन्येत तस्यावमानन-मपमानं न कुर्य्यान्नविदध्यात्। कृतेऽवमानने सोऽप्येवं प्राप्ते छिद्रे समयेऽपकारं कर्त्तुमिच्छेत्। तदुक्तं नीतिवृद्धैः 'वृथा विवाद वादश्च परीवादश्च वर्जयेत्'। सौशील्येन सर्वं वशीभूतं कुर्य्यात्। 'कदाचिदपि' इति ग्रन्थान्तरस्थः पाठः। तदाल्वे-नार्थभेदः। 'किमो विभक्त्यन्ताश्चिच्चना'विति कालापाः। किमो द्वितीयान्तादनिश्चितार्थे चिदिति ॥ १०६ ॥

कार्य्येषु क्षमाया औचित्यमाह क्षमन्त इति। परकृतानिष्टं सहन्ते इतिशब्दोऽवधारणे। न तु आक्रोशादनिष्टकारिणो मान-वान्। बाधयेत् पीड़येद् व्यथयेच्च। परेणापकृते तस्यापकाराकरणं क्षमा। 'क्षमारूपं तपस्विनः' इति लघु चाणक्ये। 'क्षमा सर्वस्य भूषणम्' इति च वृद्धाः। वल्लभदेवोऽप्याह—

'क्षमया आर्जवेनैव दयया च मणीषया।

कौशलेन च लोकानां वशीकरणमुत्तमम्' ॥

अतो न वृथा परोपतापी भवेत्। 'क्षन्तव्यमिति पुरुषं न बाधेत' इत्येवं पाठान्तरत्वेनार्थभिन्नत्वमिति। 'क्षमा तितिक्षा पृथ्वी च योग्ये शक्ते हिते क्षमम्' इति धरणिः। क्षमूष् सहने,

**चन्दनादपि जातो वह्निर्दहत्येव ॥ १११ ॥**

**भर्त्राऽधिकं रहस्युक्तं वक्तुमिच्छन्त्यबुद्धयः ॥११२॥**

---

क्षमते, क्षम्यते वा । 'पचादित्वादच्, घञ् वा । 'नोदात्तोपदेशस्ये'ति न वृद्धिः । यद्वा क्षमणं क्षमेति षित्त्वादङ् ॥ ११० ॥

चन्दनादपि जातो वह्निर्दाहकारित्वमाह चन्दनादिति । चन्दनान्मलयजादपि सुशीतलाज्जात उत्पन्नो वह्निरनलो दहत्येव सन्तापयत्येव । वस्तु स्वाभाव्यात् । नह्याकरगुणा अत्र तज्जेन लभ्यन्ते । उपादानोपादेयत्वाभावात् । अथ मलयजेनानलस्य संयोगसम्बन्धः । न तु मृद्घटवदुपादेयोपादान भावः । एवमुपकृतः शठोऽपकारमाचरतीति पूर्वेण सम्बन्धः । यद्वा यस्माद्यदुत्पद्यते तस्य गुणास्तद्वत्त यथा क्षीरगुणं दधि । 'गन्धसारोमलयजो भद्रश्रीश्चन्दन' इत्यमरः । चदि आह्लादे, चन्दयति । ल्युन्ताल्लुपट् । प्राङ्निरुक्तो वह्निरिति ॥ १११ ॥

स्वामिनो गुप्तविषय-प्रकाशे भृत्यादेः विगार्हमाह भर्त्रेति । भर्त्रा स्वामिना नृपेण प्रभुना वा । अधिकमतिशयं सुगुप्तं वृत्तं यद्रहसि निर्जने एकान्त इति । उक्तं कथितमुपदिष्टम् । वृत्तान्तम् अबुद्धयो मूढा विवेकहीनाः । वक्तुं कथयितुमिच्छन्ति । स्वीय बुद्धिमान्द्यादतिगोपनीयमपि विषयं प्रकाशयन्ति, तेनोभयोरप्यनिष्ट' स्यादिति । 'भेरीताड़ितं रहस्युक्तं वक्तुमिच्छन्त्यबुधः' इत्येवं पाठान्तरमप्यस्ति । तस्यायमर्थः—रहस्युक्तं विषयम्

**अनुरागस्तु फलेन सूच्यते ॥ ११३ ॥**

**आज्ञाफलमैश्वर्य्यम् ॥ ११४ ॥**

---

अबुधोऽज्ञः भेरो दुन्दुभीताड़ितमाघातजन्यं शब्दमिव सर्वत्र वक्तु-मिच्छति बुद्धिहानात्। भेरोताड़ित-शब्दः सकलश्रवणयोग्यो भवतीति भेर्य्युपादानम्। भर्त्ति। डुभृञ् धारणपोषणयोः, विभर्त्ति लोकान् कर्त्तरि त्वचा सिद्धः। 'रहस्या स्त्री नदी-भेदे गोपनीयेऽभिधेयवत्' इति मेदिनी। रहसि। रह त्यागे, रह्यते। औणादिकादसुन्। यद्वा रमन्तेऽत्र 'देशेऽच्' इत्यसुन्, होऽन्तादेशश्च ॥ ११ ॥

विषयानुरागस्य तत्फलद्वारा सूचनमाह अन्विति। अनु-रागो विषयेषु आसक्तिर्विषयबोधनस्पृहा। स चानुरागः यस्मिन् विषये यदा भवति तज्जनितफलेन सूच्यते अभिव्यज्यते। अन्ये तु तत्फलं विनानुरक्तिः कीदृशा तज्ज्ञातुं नैव शक्यतेऽतः फलसापेक्ष एवानुराग इति। 'हितेन सूच्यते' इत्येवं पाठे तदा, हितेन हितकरणेन तदनुष्ठानेन वा सूच्यते नतु मौखिककथनेन इति। 'अनुरक्तो गुणान् ब्रूते विरक्तो दूषणानि चे'ति वृद्धाः। 'अनुरक्त्यनुरञ्जनासक्ति राग प्रीतय' इति। रञ्ज रागे, रञ्जनं रज्यते वा। ततो घञ् ॥ ११३ ॥

स्वामिन आदेशस्य फलमाह आज्ञेति। आज्ञायाः निदेश-स्यानुमतेः। फलं परिणामः। ऐश्वर्य्यं विभूतिः सम्पदिति।

दातव्यमिति बालिशः परिक्लेशेन दास्यति
॥ ११५ ॥

---

यद्वा ऐश्वर्य्यमिवैश्वर्य्यम् । यथा विभूतिलाभेन लोकाः परमसुखिनो भवन्ति तद्वत् स्वामिन आज्ञानुवर्त्तिनस्तादृशं फलं स्यादाज्ञापालनेन भाविसुखं पुष्कलमिति भावः । 'अज्ञाऽफलमैश्वर्य्य'मिति पाठे तु अज्ञस्याफलं ऐश्वर्य्यम् निर्दयं भवति । सदयं न स्यादिति । अथवा आज्ञा शास्त्रादेशः । शिष्टनिर्देशो वा । तदनुसारेण यः कर्म्म विदधाति तस्य कर्म्मफलमैश्वर्य्यं भवति । नान्यथाऽविधिनानुष्ठानेन । "आज्ञाफलमैश्वर्य्यम्" इति सोमदेवसूरिणाप्युक्तम् । यदाज्ञावहा लोकास्तदैश्वर्य्यस्य फलं स्यात् । यदादेशं लोका न मन्यन्ते तस्यैश्वर्य्यं निष्फलमेवेति च तस्मादन्यत्र सूत्रे उक्तं "राजाज्ञा हि सर्वेषामलङ्घ्यः प्राकारः" इति । आज्ञा । ज्ञा अवबोधने, आङ्पूर्वाज्जानातेः 'आतश्चोपसर्गात्' इत्यङा सिद्धम् । ईश्वरस्य राज्ञो भाव ऐश्वर्य्यम् 'गुणवचन' इत्यादिना ष्यञ् ॥ ११४ ॥

मूढजनस्य दाने समधिकक्लेशमाह दातव्यमिति । बालिशोऽज्ञो मूढश्चेति । दातव्यमिदं कस्मै देयमिति मनसि कृत्वोक्त्वा च परं मौर्ख्यात् समधिककष्टेन सांशयिकचित्तेन च । पश्चात् स्वार्थबुद्ध्या वा दास्यति । न तु सारल्येनावश्यकर्त्तव्यज्ञानेन । अज्ञत्वाद्विवेकहीनत्वेन तादृगाचरणम् । 'बालिशस्तु शिशौ मूर्खे'

**महद्प्यैश्वर्य्यमवाप्याधृतिमान् विनश्यति ॥११६॥**

इति चाणक्यसूत्रे नीतिदर्शनात्मके द्वितीयोऽध्यायः ॥ २ ॥

---

इति मेदिनी। बालिशः। वाडृ आप्लाव्ये, वाडनम्, डलयो-रेकत्वम्। तत इन्। शो तनुकरणे, वालिं श्यति। 'आतोऽनुसर्गा'दिति कः। परिपूर्वात् 'क्लिश बाधने' ततो घञा सिद्धः ॥ ११५ ॥

लब्धैश्वर्य्यस्याधैर्य्याद्विनाशमाह महदिति। महत् श्रेष्ठमतुलं विपुलधनं वा। अवाप्य सम्प्राप्य। अधृतिमान् धैर्य्यस्थैर्य्य-विहीनः। अपिना तद्रक्षणशक्तिरहितश्च विनश्यति। विनाश-मायास्यति। धैर्य्य-वैदुष्य-संयमवतः पुंसः सम्पत् पश्चात् पुरुषान्तरेऽपि न नाशमुपयास्यति रक्षणदाढ्यादिति। 'विशालं विपुलं महत्' इत्यमरः। 'धृतिर्योगान्तरे धैर्य्ये धारणा-ध्वरतुष्टिषु' इति विश्वः। मह पूजायां, महति। 'वर्त्तमाने पृषद्बृहन्महत्' इत्याद्यौणादिकान्निपातः। धृञ् धारणे, धरणं धृति', ततः क्तिन्। तद् विद्यतेऽस्येति मतुप्। पश्चान्नञः सम्बन्धः। 'न कर्म्मधारयादि'त्यादिन्यायस्य प्रायिकत्वा 'दधृतिमा'निति प्रयोगः साधुः। अत्र धृतिरित्युपलक्षणं, चरित-सुशिक्षा-दाक्षिण्य-वैदुष्याणि ज्ञेयानि। अन्यद् व्याख्यातपूर्वम् ॥ ११६ ॥

इति दर्शनभूतचाणक्यसूत्रव्याख्यायां श्रीईश्वरचन्द्रशर्म्मशास्त्रि-कृतायां सारार्थबोधिन्यां द्वितीयोऽध्यायः।

-०*०-

# तृतीयोऽध्यायः।

—०❀०—

धृत्या जयति रोगान् ॥ १ ॥

नास्त्यधृते रैहिकामुष्मिकम् ॥ २ ॥

---

द्वितीयेऽध्याये नययोग्यानेक विषयोक्त्यनन्तरं धैर्य्यविहीना-न्नस्य कार्य्यफलमुक्त्वा तृतीयाध्यायारम्भे धृतिजयफलादिरुच्यते। धृति जयकरणस्य फलमाह धृत्येति। धृत्या धारणशक्त्या रोगान् व्याधीन् आमयानिति। जयति तान् परीभूतान् करोति। 'धृतिर्योगान्तरे धैर्य्ये धारणाध्वरतुष्टिषु' इति विश्वः। भारते च

"यया तु धर्म्मकामार्थान्‌धृत्या धारयतेऽर्जुन!।
प्रसङ्गेन फलाकाङ्क्षी धृतिः सा पार्थ! राजसी" ॥ इति।

'देशबन्धश्चित्तस्य धारणे'ति योगदर्शने। यस्मिन् कस्मिंश्चि-द्देशे विषये च चित्तस्य मनसो बन्धो निवेश इति तदर्थः। धृति-साधने धारणा तु प्रबला भवति तया रोगा अभिभवन्ति। धृति-साधनप्रक्रिया तु योगशास्त्रे बहुधा वर्त्तते। धृञ् धारणे, धरणम्। ततः क्तिन् ॥ १ ॥

धृतिहीनस्य ऐहिकामुष्मिकाभावमाह नेति। अधृतेर्धृति-विहीनस्य पुंसः स्त्रियो वा। ऐहिकमिहलोकानुष्ठितं कर्म्म-तत्फलञ्च। आमुष्मिकं पारलौकिकं कर्म्म तत्फलञ्चेति, नास्ति।

## गुणवानपि क्षुद्रपक्षस्त्यज्यते ॥ ३ ॥

धैर्य्याभावात् कर्म्मासामर्थ्यं तेन तत्फललाभः। ततः धर्म्मकर्म्मसु वैषयिककर्म्मसु च धैर्य्यं परं प्रयोजनम्। श्रीमद्भर्त्तृहरिणोक्तम्

'धैर्य्यं यस्य पिता क्षमा च जननी शान्तिश्चिरं गेहिनी'ति। मनुना च 'धृतिः क्षमा दमोऽस्तेय'मित्यादिधर्म्मलक्षणे धैर्य्यमप्युक्तम्। तत्रैव—

"अहिंसा सत्यमस्तेयं शौचमिन्द्रियनिग्रहः।

एतत् सामासिकं धर्म्मं चातुर्वर्ण्येऽब्रवीन्मनुः" ॥

एतन्मानवसाधारणस्य धर्म्मलक्षणम्। परलोकप्रसङ्गात्तदत्रोच्यते। इह भवम् ऐहिकम्। अमुष्मिन् भवम् आमुष्मिकम् ॥ २ ॥

गुणवतां क्षुद्रपक्षत्यागमाह गुणेति। गुणवान् शिक्षाशिष्टता-सौजन्ययुक्तः पुमान्। अपि निश्चितम्। क्षुद्रस्य नीचस्य दुष्टस्येति। पक्षयोर्द्वयोर्म्मध्ये एकतरः तदाश्रयः त्यज्यते परिह्रियते। यतः क्षुद्र पक्षस्याश्रये महत्त्व-हानिरवश्यम्भवति। अयमेव तत्पक्षत्यागे हेतुः। तदुक्तं महाभारते—

"असतां सङ्गदोषेण सन्तो यान्ति च विक्रियाम्।

दुर्य्योधनप्रसङ्गेन भीष्मो गोहरणे रतः।' ॥ इत्युक्तं प्राक्।

यथा वा क्षीरं स्वभाव-मधुरम् अम्लयोगाद्दधीभवति। अथवा क्षुद्रस्य जीवस्य पक्षः अन्यायभयान्नाश्रयणीयः। गुणो विद्यते यस्येति मतुप्। 'क्षुद्रः स्यादधमक्रूर-कृपणाल्पेषु वाच्यवत्'

**न दुर्ज्जनैः सह संसर्गः कर्त्तव्यः ॥ ४ ॥**

**शौण्ड-हस्तगं पयोऽप्यवमन्येत ॥ ५ ॥**

---

इति विश्वः । क्षुदिर् संचूर्णने, क्षुणत्ति, क्षुद्यते वा । 'स्फायि-तञ्चि' इत्यादिना रक् ।

'पक्षो मासार्द्धके गेहे पार्श्वसाध्य विशेषयोः' ।

इति मेदिनी ॥ ३ ॥

दुर्ज्जनानां संसर्ग-निषेधमाह नेति । दुष्टा हीना नीचाः क्रूरा इति यावत् । तैः सह सार्द्धम् । संसर्गो मेलनं सम्बन्धो नैव कर्त्तव्यः । तदुक्तं सूरिभिः—

'दुर्ज्जनेन समं सख्यं प्रीतिञ्चापि न कारयेत्' इति ।

एवमेवोक्तं भारते विदुरनीतौ—

'अधमांस्तु न सेवेत य इच्छेद्भूतिमात्मनः' ।

अधमान् नीचान् क्रूरान् । भूतिं समुन्नतिम् । अधमलक्षणन्तु तत्रैवोक्तं—

'न श्रद्दधाति कल्याणं परेभ्योऽप्यात्मशङ्कितः ।

निराकरोति मित्राणि यो वै सोऽधमपुरुषः' ॥

परेभ्यः गुरुभ्यः । आत्मनि शङ्कितः विश्वासहीन इत्यर्थः ।

'पिशुनो दुर्ज्जनः खलः' इत्यमरः । दुष्टोजनः । 'कुगति' इत्यादिना समासः ॥ ४ ॥

श्रेष्ठस्य हीनसंयोगाद्धीनत्वमाह शौण्डेति । शौण्डः मत्तः

## कार्य्यसङ्कटेष्वर्थव्यवसायिनी बुद्धिः ॥ ६ ॥

पानागारिकः तस्य हस्तगतं पयः चीरम् । अवमन्येतावजानीयात् । 'शुण्डा पान गृहे मता । अप्यम्बु हस्तिनी वेश्या हस्तिहस्तसुरासु च' इति मेदिनी । अन्ये त्वन्यदाहुः 'पयोऽपि शौण्डगं सोम्यं पुत्रः पूतो स्वदेहजः' इत्याहुः । एतत्तु विषयान्तरे बोध्यम् । अथवा 'शौण्डोमत्ते च विख्याते पिप्पल्याञ्च भवेत् स्त्रिम्' इति विश्वः । शुण्डायां पानागारे भवः शौण्डः । 'तत्र भवः' इत्यण् । केचित्तु शौण्डः शौण्डिक इत्यभेदार्थं प्रोचुः । सङ्गदोषात् सदप्यसद्भवतीति पूर्वसूत्रसमर्थकमिदम् । यथा विषद्रव्य-सङ्गाज्जीवनं जीवनहारकम् ॥ ५ ॥

कार्य्याणां सङ्कटे समुपस्थिते असन्देहात्मिका बुद्धिः समुचिता तदेवाह कार्य्येति । कार्य्यस्य कर्म्मणः । सङ्कटेषु विषमदशासु तत्रोपस्थित विघ्नसमूहान्वितेषु वा । अर्थस्य विषयस्य । व्यवसायिनी । अर्थावधारणात्मिका अर्थसाधनानुकूला वा बुद्धिर्मतिः स्यात् । सा तु समीचीना । अन्यथा कार्य्यसाफल्यं न स्यात् । यद्वा कार्य्यसङ्कटे समुपस्थिते अर्थविषये निश्चयात्मिका बुद्धिः कार्य्यसम्पादिका यथा स्यात्तथा मतिमता सह संवादः कार्य्यः । प्रायो मन्दमतेः कार्य्येषु मति-व्यामोहो भवति । 'सङ्कटं विघ्नसमूहे सम्बाधे आपदि तथेति' । कटेर वर्षावरणयोः, सङ्कटति । ततोऽच् । 'बुद्धिर्मनीषा धीषणा धीः प्रज्ञा' इत्यमरः ॥ ६ ॥

**मित-भोजनं स्वास्थ्यम्॥ ७॥**

**भक्ष्यमप्यपथ्यं नाश्नीयात्॥ ८॥**

---

स्वास्थ्यरक्षणोपायमाह मितेति। मितं परिमितम्। यस्य यादृक् क्षुन्निवृत्तिस्तस्यनुकूलभोजनमशनमाहार इति। तस्य तादृशं भोजनं स्वास्थ्यजनकम्। देहसुस्थत्वसम्बर्द्धकम्। स्वस्मिन् स्वभावे तिष्ठतीति स्वस्थः। तद्भावः स्वास्थ्यम्। स्वभावतो नैरुज्यम्। शरीरपोषकञ्चेति। तदुक्तं पूर्व्वाचार्य्यैः 'जीर्णे भोजनमात्रेयः'। अत्रात्रेयर्षिरायुर्वेदस्य पूर्वाचार्य्यः। भुक्तद्रव्ये जीर्णे सति पुनर्भोजनं विधेयमित्यवाच। 'अजीर्णे जोजनं विषम्'। अजीर्णेऽपरिपाके भुक्तद्रव्यस्य, पुनर्भोजनं विषवद् व्याधि द्वारा प्राणहारकम्। ततो मितं हितं मेध्यञ्च भोजनमुचितम्। धर्म्मशास्त्रे गीतायाञ्चाहारस्य सात्त्विक राजसिक तामसिकभेदेन त्रैविध्यमुक्तम्। तच्च सामान्येन सामिष निरामिषभेदेन द्विविधम्। तयोर्निरामिषभोजनं प्रशस्तमायुस्करं गदहारकञ्च। सामिषभक्षणं क्षिप्रं बलवर्द्धकम्। परं भक्षद्रव्यस्य जीवदेहत्वेन तद्देहे रोगसम्भवाद्भोक्तुरपि रोगसम्भावना। 'मितभोजनः स्याद्-स्वस्थ' इत्येवं सूत्रपाठे भिन्नादर्शे मितं भोजनं यस्य सः। स यदि अस्वस्थोऽप्रकृतिस्थो रोगो स्यात्तदा मितभोजनः स्यादित्यर्थः। वायुपित्तश्लेष्मणां साम्ये स्वस्थोऽसाम्ये रोगीति। यथेच्छाहारोन्द्रियभोगलोलुपो रोगी भवेदिति॥ ७॥

भक्ष्यद्रव्यस्याहितजनकत्वे तस्याशनायोग्यतामाह भक्ष्यमिति।

## जीर्णभोजिनं व्याधिर्नोपसर्पति ॥ ८ ॥

---

भक्ष्यमदनीयं भोज्यद्रव्यं वेति। अशनयोग्यं यद् द्रव्यं तदपि अपथ्यं मनः शरीरप्रतिकूलं भवेत्तदा हितजनकत्व बुद्ध्या नाश्नीयान्नैवाद्यात्। पथोऽनपेतं पथ्यम्। न पथ्यमपथ्यमशनाऽयोग्यमिति। 'धर्म्मपथ्यर्थन्यायादनपेते' इत्यनेन यता सिद्धम्। अश-भोजने, अश्नातेर्विधिलिङ्। अन्यच्च 'अजीर्णेऽभोजनं पथ्यं जीर्णेऽपथ्यं हरितकी'। अजीर्णे अपरिपक्वे भुक्तद्रव्ये अभोजनं पथ्यम्। भुक्तद्रव्ये जीर्णे सति हरितकी अपथ्यम्। तथा विरुद्धभोजनं न कार्य्यम्। मांसेन दुग्धम्। दुग्धेन लवणम्। तेन सहाम्लञ्च। तथा भुक्तान्नोपरि भोजनम्। अन्यच्चिकित्साशास्त्रेऽनुसन्धेयम् ॥ ८ ॥

परिपक्वभोजिनं प्रशंसन्नाह जीर्णेति। पूर्वभुक्तद्रव्ये जीर्णे परिपाकं गते क्षुदुद्रेके च यो भुङ्क्ते स जीर्णभोजी। तं पुरुषं व्याधिरामयः नोपसर्पति नाक्रामति। तदुक्तं वैद्यके—

'जीर्णे तु भोजनं कुर्य्यान्नाजीर्णे तु कथञ्चन।
अपक्वभोजिनं व्याधिः समाक्रमति निश्चितम्' ॥

एवं चरक-सुश्रुत-भावप्रकाशाद्यनुसारेण ऋतूक्तनियमेन च भोजनं कुर्य्यात्। 'जीर्णं परिपक्वपुराणयोः' इति मेदिनी। जॄष् वयोहानौ, जरणम्। 'ऋल्वादिभ्यः क्तिन्निष्ठावद्वाच्यः' इति वार्त्तिकात् क्तिन्, 'रदाभ्या'मित्यादिना नत्वम्। यद्वा जीर्य्यतेर्धातोः 'गत्यर्था' इत्यादिना क्तप्रत्ययः। व्याधिः, विविधा आधयो-

## अजीर्णे भोजनं विषम् ॥ १० ॥

ऽस्मात् । व्याधानं व्याधिः । वि, आङ्पूर्व्वाद् दधातेरुपसर्गे 'घोः किः' । एवंविधमशनं परिहरेत् । तद्यथा 'बहुस्तोकमकाले वा ज्ञेयन्तद्विषमाशनम्' । अकाले भोजनन्त्यजेत् । तथा च—

"अप्राप्तकालो भुञ्जानोऽप्यसमर्थतनुर्नरः ।
तां स्तान् व्याधीनवाप्नोति मरणञ्चाधिगच्छति" ॥

अप्राप्तकालः कालादतिप्राक् । भुञ्जानोऽसमर्थ शरीरो भवति । तथा सति तां स्तान् व्याधीन् शिरोव्यथादीन् प्राप्नोति । तेषामाधिक्ये मरणमपि प्राप्नोतीति ॥ ९ ॥

भुक्तापाके भोजननिषेधमाह अजीर्णेति । अजीर्णे भुक्तद्रव्यस्यापरिपाके सति यत् पुनर्भोजनन्तद्विषं विषमिव विषं गरलं स्यात् । तद् रोगद्वारा प्राणहारकं भवति । एतच्च लघुचाणक्ये उक्तम्—

"दूरगीता विषं विद्या अजीर्णे भोजनं विषम् ।
विषं गोष्ठी दरिद्रस्य वृद्धस्य तरुणी विषम्" ॥

ीतोयमलिलेऽपि 'अजीर्णेऽभोजनं वारि जीर्णे वारि बलप्रदम्' । अभोजनमपेयमित्यर्थः । क्वचिदादर्शे सूत्रान्ते विषमित्यत्र दुःखमिति पाठे तद्दुःखजनकमित्यर्थः । काले च तद् भोजनं नाकाले । तथा च—

"क्षुत्सम्भवति पक्वेषु रसदोषमलेषु च ।
काले वा यदि वाऽकाले सोऽन्नकाल उदाहृतः" ॥

## शरीरे वर्द्धमानो व्याधिर्नोपेक्ष्येत ॥ ११ ॥

---

रसादीनां पाकं ज्ञातुमाह—

"उद्गारशुद्धिरुत्साहो वेगोत्सर्गौ यथोचितः ।
लघुता क्षुत्पिपासा च यदा कालः स भोजने" ॥

जीर्णे अन्ने पुनर्भोजनस्य फलमाह—

"आहारः प्रीणनः सद्यो बलकृद्देहधारणः ।
स्मृत्यायुः शक्तिवर्णौजः सत्त्वशोभाविवर्द्धनः ।
यथोक्त गुणसम्पन्नमुपसेवेत भोजनम्" ॥ इति वैद्यके ।

'क्ष्वेड़स्तु गरल' विषम्' इत्यमरः । वेवेष्टि कायम् । विष् व्याप्तौ, विष प्रयोगे वा । 'इगुपध' इत्यादिना कः ॥ १० ॥

शरीरे सुप्रसृतस्य व्याधेरुपेक्षाकरणे निषेधमाह शरीर इति । शरीरे देहे तनौ चेति । वर्द्धमानो वृद्धिं प्राप्तः । उत्कटव्याधिरिति । व्याधिर्धातु-वैषम्यजनितावस्था । नोपेक्ष्येत । नालस्याद्वलाद्वेलया वा तुच्छीक्रियेत । व्याधेः शरीरहानिकरत्वं वैद्यके उक्तम्—

"धर्म्मार्थकाममोक्षाणामारोग्यमुत्तमं बलम् ।
रोगा स्तस्यापहर्त्तारः श्रेयसो जीवितस्य च" ॥

शीर्य्यते रोगादिना इति शरीरम् । गतो योगेनौषधादिना च व्याधेरुपशमः कर्त्तव्यः । यतो 'व्याधितस्यौषधं पथ्यं नीरुजस्य किमौषधैः इति रुग्णार्थमौषधमुक्तम् । 'रोगव्याधिगदामयाः' इत्यमरः । व्याधेरुपशमोपायः सम्यगुक्तो वैद्यके । 'जीर्णशरीरे

**शत्रोरपि विशिष्यते व्याधिः ॥ १२ ॥**

**दानं निधानमनुगामि ॥ १३ ॥**

---

वर्द्धमानं व्याधिम्' इति पाठान्तरत्वे जीर्णे वार्द्धक्ये अवसन्ने देहे इति । सर्वथा व्याधेः परिहार्य्यत्वे जीर्णं इति विशेषणं स्वरूपव्यञ्जकम्, यद्वाऽत्यन्तपरिहार्य्यत्वम् । शॄ हिंसायाम्, शृणाति, शीर्य्यते वा । 'कॄ शॄ पॄ कटि' इत्यौणादिकादीरण् । वर्द्धमानः । वृधु वर्द्धने, वर्द्धते । 'वर्द्धच्छेदन पूरणयो'रिति चानश् ॥ ११ ॥

व्याधेररातेरधिकत्वं सूचयन्नाह शत्रोरिति । शत्रो रिपोरपि व्याधिः रोगो गद इति । विशिष्यतेऽधिको भवति । शत्रुभिर्वहिःस्थितैर्विवादे धनादेरपहरणं क्षेत्रादिग्रहणञ्च क्रियते । व्याधिश्च देहस्थो प्राण-देह-धनादेः संहारक इत्यस्य वैशिष्ट्यम् । 'मृतकल्पा हि रोगिणः' इति तदीय राजनीतावुक्तम् । व्याधिर्वायुादेः रसादेश्च वैषम्यनिमित्तम् । 'न च व्याधिसमो रिपुः' इति लघुचाणक्ये च । हितमेध्यभोजनं योग्यकाले स्नानं पानम्, ऐन्द्रियिक धैर्य्यञ्च स्वास्थ्यहेतुः । प्राङ् निरुक्तः शत्रुरिति । व्याधानं व्याधिः । विविधा आधयोऽस्माद् वा, व्याङ्पूर्वाद्दधाते 'रुपसर्गे घोः किः' इत्यनेन सिद्धः ॥ १२ ॥

धनवितरणं कीदृशं स्यात्तदाह दानमिति । दानं स्वीयद्रव्यस्य दयया धर्म्मबुद्ध्या वा योग्यपात्रे सम्यक्त्यागः । तन्निधानस्य दानहेतोर्धनस्य निधेर्वानुगामि अनुयायि स्यात् । स्थित-

# पटुतरे तृष्णापरे सुलभमतिसन्धानम् ॥ १४ ॥

विभवानुसारेण भवतीति । यद्वा निधानं धनाधारः । तथा च 'निधानं भूगतं सद्यः सर्वं समधिगच्छति' इत्यागमः । भागवते च 'एतन्नानावताराणां निधानं बीजमव्ययम्' इति । दानं हितकरमपि वित्तानुसारेण कर्त्तव्यम् । नाधिकं न वा अत्यल्पम् । 'दानं गजमदे त्यागे पालनच्छेदशुद्धिषु' इति विश्वः । अन्ये तु 'निधानं निधनं कुल'मित्याहुः । 'निधनं स्यात् कुले नाशे' इति मेदिनी । निधीयते इति नि-पूर्वाद्धातोर्ल्युट् ॥ १२ ॥

यस्मिन् जने कार्य्यातिसन्धानस्य सौकर्य्यन्तदाह पटुरिति । पटुतरे नानाकार्य्यनिपुणतरे विदुषि, तृष्णापरे लोभपरायणे ऽर्थगृध्नौ जने कार्य्याणामतिसन्धानमनायासेन कार्य्यसाधनच्छिद्रं तत्सिद्ध्यर्थमन्वेषणं वा सुलभमक्लेशकरमिति । पटतरः विशेषपटुर्दक्षः । ईदृशं जनं कार्य्यसहायत्वेनानुसन्दध्यात् । सहायवान् नृपः प्रबलः सहायहीनो विपन्नः । तथा चाह वर्गदेव—

'मदहीनो यथा नागो दंष्ट्राहीनो यथोरगः ।
असहायस्तथा राजा तत्कार्य्यां बहवश्च ते' ॥

'पटुर्दक्षे च नीरोगे चतुरेऽप्यभिधेयवत्, इति मेदिनी । पट गतौ, पटति । 'फलिपाटि' इत्याद्यौणादिकादुः । पटिरादेशश्चेति केचित् । ञि तृष् पिपासायाम्, तर्षणम् । 'तृषि शुषिरसिभ्यः कित्' इति न प्रत्ययः' स्त्रियां टाप् । 'सन्धानमभिषवे

**तृष्णया मतिश्छाद्यते ॥ १५ ॥**

**कार्य्यबहुत्वे बहुफलमायतिकं वा कुर्य्यात् ॥१६॥**

---

चेष्टा संघट्टनयोरपि' इति विश्वः। सन्धीयते इति। डुधाञ् धातोः भावे करणे च ल्युट् ॥ १४ ॥

विषय-लोलुपस्य बुद्धिमान्द्यमाह तृष्णयेति। तृष्णया विषयाभिकाङ्क्षयाभिलाषाधिक्येन च मतिर्बुद्धिर्हिताहित विवेक-ज्ञानं वा। छाद्यते आव्रियते पिधीयते च। तदूक्तं पूर्वसूरिभिः—

'लोभेन बुद्धिश्चलति लोभो जनयते तृषा।
तृषार्त्तो दुःखमाप्नोति परत्रेह च मानवः' ॥

अपरञ्च 'सा तृष्णा चेत् परित्यक्ता को दरिद्रः क ईश्वरः'। परमत्रैतद् बोध्यं लोके सदाशा अभ्युन्नतिराशा परहिताशाश्च चेष्टया सह नियतं हितकारिण्यः स्युः। 'तृष्णे स्पृहा पिपासे द्वे' इत्यमरः। 'पिपासागर्द्धाभिकाङ्क्षातृष्णाशाश्चे'ति च। ञितृष् पिपासायाम्, तर्षणम्। 'तृषिशुषिरसिभ्यः कित्' इत्यौणादिकान्नः। मनज्ञानं, मन्यते अनयेति मतिः। मन्यतेः क्तिन् ॥ १५ ॥

कार्य्याणामनेकत्वे अधिकफलस्य कार्य्यस्य तेषां मध्ये प्राग-नुष्ठानमुचितमाह कार्य्येति। कार्य्यस्य कर्म्मणः। बहुत्वे प्राचुर्य्ये युगपत् समुपस्थितेषु कर्म्मसु मध्ये यस्य कर्म्मणः फलम् आयतिकमुत्तरकालिकं बहुफलं स्यात्तदेव कार्य्य-

**स्वयमेवासन्नं कार्य्यं निरीक्षेत ॥ १७ ॥**

**मूर्खेषु साहसं नियतम् ॥ १८ ॥**

---

मादौ कुर्य्यात् । पश्चाल्लघुफलानां कार्य्याणामारम्भ इति । अत्र वाकारेण क्षिप्रफलदं वा इति सूचितम् । तथा च बहुषु कर्मसु एकपदे उपस्थितेषु यस्य कर्मणः फलाधिक्यं कार्य्यारम्भात् पश्चात् शीघ्रमेव फलं स्यात्तदेवाग्रे कुर्य्यादिति सारः । 'आयतिस्तु स्त्रियां दैर्घ्ये प्रभावागामिकालयो'रिति मेदिनी । यमु उपरमे' आयंस्यतेऽत्रेति क्तिन् । आयास्यति वा आङ्पूर्वाद् यातेर्बाहु-लकाड्डतिः । 'उत्तरः काल आयति'रित्यमरोऽपि ॥ १६ ॥

आसन्नकार्य्यावलोकने स्वस्यैव प्रयोजनमाह स्वयमिति । स्वयमात्मना, एवकारोऽन्यव्यवच्छेदकः । आसन्नं समीपे उपस्थितं कार्य्यं कर्म इति । निरीक्षेतावलोकयेत् । यस्य तु कर्मणो गुरुत्वं फलाधिक्यञ्चास्ति तत् कर्म, स्वावलोकनं विना यद्य-सम्पाद्यं विफलं वा स्यात् तत् स्वयमेव पश्येत् । अन्यपरिदर्शने हानिः स्यादिति भावः । 'स्वयमेवावस्कन्न'मिति पाठे तु परा-क्रान्तं परेणानुष्ठितं कर्म नृपः स्वयमेव पश्येत् । न सचिवादिभि-रिति । निपूर्वा'दीक्षदर्शनालोचनयो'रिति ईक्षतेर्विधिलिङ् । स्वयमिति । सु-सुष्ठु अयते । अय गतौ, इत्यतोऽम् । सद् गतौ, आसीदति स्म, आसद्यते वा 'गत्यर्था' इत्यादिना क्तः ॥ १७ ॥

मूढ़लोकेषु अविवेकात् साहसाधिक्यमाह मूर्खेष्विति । मूर्खेषु बालिशेषु अज्ञेष्विति । साहसमबुद्धिपूर्वकं करणम् ।

मूर्खेषु विवादो न कर्त्तव्यः ॥ १९ ॥

मूर्खेषु मूर्खवत् कथयेत् ॥ २० ॥

नियतं सदैव तिष्ठति। बलवतो मूर्खस्य सदोद्यमशीलस्य साहसं नित्यं विद्यते अतः श्रममूलककठिनकार्य्ये तेषां नियोगो विधेयः। 'साहसन्तु दमे दुष्करकर्मणि अविमृश्यकृतौ धार्ष्ट्ये' इति हैमः। 'अज्ञस्तु जड़मूर्खयोः' इति विश्वः। मुह वैचित्त्ये, मुह्यति। 'मुहेः खो मूर्च्च, इत्यौणादिकात् सिद्धः। साहसम्। सहसि बले भवमिति 'तत्र भव' इत्यण्। यमु उपरमे, नियंस्यतेऽनेनेति क्तः॥ १८॥

मूढ़ैः सार्द्धं विवादकरणनिषेधमाह मूर्खेष्विति। मूर्खेषु हिताहितविवेकशून्येषु अज्ञेषु। विवादो विरुद्धाचरणं वैरता विषयेषु वैमत्यञ्चेति। न कर्त्तव्यो न विधेयः। तैः सह विवादकरणे महानिष्टपाताशङ्केति भावः। ते च सदैव सदुक्तिः, सुभाषितं हितोक्तिश्च सर्वं प्रतिकूलं प्रायो मन्यन्ते प्रागेवास्तां विवादकथा। प्रागुक्तमन्यत्॥ १९॥

यस्य तत् प्रियं भवेत्तं प्रति तादृशाचरणं कुर्य्यात्। तदेववक्ति मूर्खेषु बालिशेषु अज्ञेष्विति यावत्। ते च यथावबुध्यन्ते यथाचरन्ति यथेच्छन्ति तथैव तेषु कथयेत् वदेदिति। अथवा मूर्खा अज्ञत्वात् सूक्ष्मतत्त्वं हितञ्च न प्रतियन्ति। ततस्तेषु सारल्येन कौशलेन च विषयकथनं युक्तम्। न तु सूक्ष्मरीत्या। उपदेशे तु तथैव पात्रयोग्यताविचारः। 'अज्ञे मूढ़ यथाजात-

**आयसैरायसश्छेद्यः ॥ २१ ॥**

**नास्त्यधीमतः सखा ॥ २२ ॥**

---

मूर्ख वैधेय बालिशाः' इत्यमरः । मुह वैचित्त्ये, मुह्यति । 'मुहेः खोमूर्च' इत्यौणादिकात् सिद्धम् । प्रागुक्तमन्यत् ॥२०॥

कठिनकार्य्यसाधने सुदृढ़विषयमेवाश्रयेत् तदेवाह आयसैरिति । आयसैर्लौहैरयस्कान्तादिनिर्म्मितक्रकचैश्च लोहश्छेद्यो द्विधाकरणीयः । न तु काष्ठादिना लोहश्छेदनीयः । तत्र तद्योग्यताविरहात् । 'आयासैरायसं छेद्यम्' । इति पाठे तु आयासैरधिकश्रमैरायसं च्छेदनीयम् । यथा 'कण्टके न तु कण्टकम्' इति । न तत्र हेलया श्रमेण विना वा, स्वाभाविककाठिन्याल्लोहश्छेदनीयः । सूक्ष्मस्थूलकार्य्यसाधने सूक्ष्मस्थूलोपायौ युक्तौ । 'लोहो स्त्री शस्त्रके लोहं जोङ्गके सर्वतैजसे' इति मेदिनी । 'कालायसायसी अश्मसारः' इत्यमरोऽपि । आयस इति । एति, अयते वेति एतेरसुन् । यद्वा अय एवायसः स्वार्थेऽण् । कालायस इत्यत्र तु 'अनोश्मायः सरसाम्' इत्यनेन टच् । सूत्रमदः पूर्वसूत्रोदाहरणभूतमिति केचित् ॥ २१ ॥

दुर्बोधस्य हीनमतेर्वा मित्राभावमाह नेति । अधीमतो बुद्धिहीनस्य निर्बोधस्य । सखा सुहृद् बन्धुश्चेति । नास्ति नैव विद्यते । धीमतः सुधियः सर्व एव लोका नैपुण्यान्मित्राणि भवन्तीति भावः । तथा च 'कृत्स्नो हि लोको बुद्धिमतामाचार्य्यः' । सुहृदश्चेति प्राञ्चः । 'वाग्मिनो हि जगद्वशमानयन्ति' इति वृह-

## धर्म्मेण धार्य्यते लोकः ॥ २३ ॥

दारण्यकभाष्ये। अधर्म्मन्तः स्वयं क्लिश्यन्ति परानपि तापयन्ति। अतस्तेषां कुतः सखित्वम्। 'नास्ति धर्म्मसमः सखा' इत्येवं पाठे तु धर्म्म-समो धर्म्मसदृशः सखा सुहृन्नास्तीत्ययमर्थः। तदुक्तं मानवे—

"एक एव सुहृद्धर्म्मो निधनेऽप्यनुयाति यः।
शरीरेण समं नाशं सर्वमन्यत्तु गच्छति" ॥

अपरञ्च 'धर्म्मः सखा परमहो परलोक याने'। 'धर्म्मान्न प्रमदितव्यम्'। 'धर्म्मेण पापमपनुदति' इति श्रुतिः। 'धर्म्मेण गमनमूर्द्ध'मिति कापिलाः। महाभारते 'धारणाद्धर्म्म इत्याहु-र्लोकचरितं चरेदि'ति च। धारणादिति। जगतो विधारणात् लोकस्थितिहेतुर्धर्म्मः। लोकचरितं लोकानां मानवानां यद् यदिष्टाचरणन्तत्तानुतिष्ठेत्। 'धीमान् पण्डिते च बृहस्पतौ'। धीर्ध्यानं, ध्यायति अनया, ध्यायतेः सम्प्रसारणञ्चेति वार्त्तिकात् क्विप्। 'हलश्चेति' दीर्घः। धीरस्यास्तीति मतुप्। धर्म्मः। धरति विश्वं ध्रियते च लोकैरिति धर्म्मः। धृञ् धारणे इत्यस्मा-'दर्त्तिस्तुसु' इत्यादिना मन्। सखेति। समानः ख्यायते लोकैः 'समाने ख्यः सञ्चोदात्तः' इत्यौणादिकादिन्। सङित्, टिलोपः। 'नौ ख्यो यलोपः' इत्यतोऽनुवर्त्तनाद् यलोपः। समानस्य सभावः ॥ २२ ॥

धर्म्मद्वारा भुवनधारकत्वमाह धर्म्मेणेति। लोको भुवनं

## प्रेतमपि धर्म्माधर्म्मावनुगच्छतः ॥ २४

जीवनिवहश्चेति । धर्म्मेण विश्वधारकेन धार्य्यते धारणं क्रियते । तथा च श्रुतिः 'धर्म्मो विश्वस्य जगतः प्रतिष्ठा' इति । अन्यच्च स्मृतौ 'धर्म्मो धरा धारकः' इति । धर्म्माभावे तु लोकस्थित्य-भावात् सर्वोच्छेदप्रसङ्गः ।

'स धर्म्मो द्विविधः प्रवृत्तिलक्षणो निवृत्तिलक्षणश्चे'ति श्रीभगवच्छाङ्करभाष्ये । शान्तिपर्वणि च

'प्रवृत्तिलक्षणो धर्म्मः निवृत्तौ च व्यवस्थितः' ।

यद्यपि निवृत्तिलक्षणधर्म्मान्निर्वाणाप्तिस्तथापि तयोर्मध्ये प्रवृत्ति-लक्षधर्म्मस्य प्राथम्यं प्रवृत्तिपूर्वकत्वान्निवृत्तेः । अत्र नीतौ च प्रवृत्तिधर्म्मस्याग्रिमत्वं समुपयोगित्वञ्चेति ।

"धर्म्मोऽस्त्री पुण्य आचारे स्वभावोपमयोः क्रतौ' ।

इति मेदिनी । प्रसङ्गादुच्यते एषः । प्रागुक्तमन्यत् ॥ २३ ॥

नापि जीवितान् प्रत्येव नियतं धर्म्मस्यानुसरणमपि तु प्रेतं प्रत्यपि तदाह प्रेतमिति । प्रेतं मृतात्मानं लोकान्तरप्राप्तं तमनु पश्चात् धर्म्माधर्म्मौ पुण्यपापफले गच्छतः अनुसरतः । न केवलं जीवितान् प्रति । तदुक्तं महर्षिमनुना—

"मृतं शरीरमुत्सृज्य काष्ठलोष्टसमं क्षितौ ।
विमुखा बान्धवा यान्ति धर्म्मस्तमनुगच्छति" ॥

न्यायसमये तु धर्म्माधर्म्मयोरदृष्टरूपेणात्मसमवेतत्वात् किमिह काले परलोकेऽपि तौ चात्मानमनुगमिष्यतः । तथाहि—'यतो-

## दया धर्म्मस्य जन्मभूमिः ॥ २५ ॥

ऽभ्युदयनिःश्रेयससिद्धिः स धर्म्मः' इति काणादाः। 'चोदनालक्षणोऽर्थो धर्म्म' इति जैमिनीयाः। 'दशलक्षणको धर्म्मः' इति मानवाः। 'वेद प्रणिहितो धर्म्मः' इति पौराणिकाः। तद्विरुद्धस्त्वधर्म्मः। स ऐहिकदुःखदायकः पारत्रिकनिर्वाणविघातकः। बौद्धार्हतादीनामपि ब्रह्मचर्य्याहिंसा वैराग्यकरुणामैत्र्यादिरूपो धर्म्मोऽस्ति। 'प्रेतो भूतान्तरे पुंसि मृते स्याद्वाच्यलिङ्गकः' इति मेदिनी। प्रेतः प्रकर्षेणेतः लोकान्तरं गतः। इण गतौ, एति। ततः क्तप्रत्ययेन सिद्धम्। पूर्वमुक्तमन्यत् ॥ २४ ॥

धर्म्मस्येह परलोककार्य्यसाधकत्वमुक्त्वा सम्प्रति तस्य दयाकरकत्वमाह दयेति। दयानुकम्पा परदुःखप्रहानेच्छेति यावत्। धर्म्मस्याभ्युदयनिःश्रेयससिद्धिहेतोर्जन्मभूमिः। कर्म्मणः समुत्पत्तेर्भूमिराकरः। दयाया अभावे धर्म्माभावः। तदभावे च चित्तप्रसादनमैत्र्याद्यभावः। मैत्री करुणा मुदितादीनां सर्वधर्म्मेषु चित्तप्रसादनकारणत्वात्। चित्तप्रसादनञ्च दया समाविर्भवति। अतः सा प्रसवभूमिर्धर्म्मस्य। तथा च बृहस्पतिः—

"परे वा बन्धुवर्गे वा मित्रे द्वेष्टरि वा सदा।
आत्मवद्वर्त्तितव्यं हि दयैषा परिकीर्त्तिता" ॥

'दयाभूतहितैषित्वम्' इति गोविन्दभट्टः। स्मृतौ च—

"कृपा दयानुकम्पा च करुणानुग्रहस्तथा।
हितेच्छा दुःखहानेच्छा सा दया कथ्यते बुधैः" ॥

धर्म्ममूले सत्यदाने ॥ २६ ॥

धर्म्मेण जयति लोकान् ॥ २७ ॥

---

दयदानगतिहिंसा रक्षणेषु । दयते, रक्षति अनया । ततो भिदादित्वादङ्, स्त्रियामाप् च ॥ २५ ॥

सत्यदानयोर्द्वयोर्धर्ममूलत्वमाह धर्म्मेति । सत्यन्तथ्यं यथा वद्वस्तुबोधकम् । दानं धर्महितबुद्ध्या स्वद्रव्यस्य सत्पात्रे समर्पणम् । एते द्वे धर्ममूले स्तः । धर्म्मो मूलं ययोः सत्यदानयोस्ते । सत्यन्दानञ्च धर्मप्रकृतिके भवतः । नह्येते तद्विरुद्धे भविष्यतः । अन्यत्र मानवोक्त-दशलक्षणात्मकधर्मे च सत्यस्यान्तर्गतत्वात् । अपरञ्चोक्तं स्मृतौ—

'इज्याऽध्ययनदानानि धृतिः सत्यं तपः क्षमा ।
अलोभ इति मार्गोऽयं धर्मस्याष्टविधः स्मृतः' ॥

छान्दोग्यश्रुतौ च 'त्रयोधर्मस्कन्धा यज्ञोऽध्ययनन्दानञ्चे'ति ।

'सत्यं कृते च शपथे तथ्ये च त्रिषु तद्वति' । इति कोषः सति परमेश्वरेऽयं साधुरिति सत्यम् । 'तत्र साधु'रिति यत् । दाञ् दाने, ददातेर्ल्युट् ॥ २६ ॥

धर्मस्य लोकजये श्रेष्ठत्वमाह धर्मेणेति । धर्मेण तदनुष्ठानेन तत्प्रचारेण च सर्वान् लोकान् जयति । लोकेषु धार्मिकः श्रेष्ठः कीर्त्तिमान् भवति ।

मृत्युरपि धार्म्मिकं रक्षति ॥ २८ ॥

धर्म्माद्विपरीतः पापः ॥ २९ ॥

---

तदुक्तम् ईश्वरकृष्णेन "धर्मेण गमनमूर्द्धं गमनमधस्ताद्भवत्य-धर्मेण" इति। धार्मिकान् धीमतोजनान् सर्व्वे विश्वसन्ति, आद्रियन्ते च। धर्मेण लोकमिमं विजित्य ऊर्द्धं द्युप्रभृतिषु लोकेषु गच्छन्ति। अधर्म्मेण नरकादिषु अधोगतिः लोकेष्व-वनतिश्च। 'लोकोविश्वे जने' इति हैमः। लोकृ दर्शने, लोक्यते इति लोकः। घञा सिद्धः ॥ २७ ॥

धार्मिकस्य मृत्युतोऽपि रक्षामाह मृत्युरिति। मृत्युर्मरणम् निधनमिति। यमोवा। धर्मिष्ठं धार्मिकं जनं रक्षति पालयति। यमोऽपि धार्मिकं नेतुं न शक्नोति। धर्मबलेन निर्द्दिष्टमृत्युकालमतीत्य दीर्घायुर्लभते। स्वर्गमपि गच्छति। अत्युत्कटतपोबलेनामर इव भवति। यथा मार्कण्डेयादिः। 'मृत्युर्ना मरणे यमे' इति मेदिनी। छृत्युर्भौतिकदेहात् प्राणिनां प्राणवायोः सम्यग् वहिर्गमनविशेषः। मृत्युरिति। मृङ् प्राणत्यागे, म्रियते। 'भुजिमृङ्भ्यां युक्तुकौ' इत्यौणा-दिकसूत्रेण त्युक् ॥ २८ ॥

पापस्य धर्मवैपरीत्यमाह धर्मादिति। धर्मात् सुकृतेः पुण्याद्वेति। पापः दुरितं कल्मषं दुष्कृतिश्च। विपरीतो भिन्नः कार्य्ये तत्फलयोः प्रभेदात् पृथगिति। पापेनाधोगतिश्च। अतः पापं हित्वा धर्माचरणं विधेयम्। 'नित्यनैमिकैरेव कुर्व्वाणो-

## यत्र यत्र प्रसज्यते तत्र तत्र ध्रुवा स्मृतिः ॥३०॥

दुरितक्षय'मिति । धर्मस्य च पापनाशकत्वम् । तथाच श्रुतिः 'धर्मेण पापमपनुदति' । स्मृतिश्च—'लिप्यते न स पापेन पद्म-पत्रमिवाम्भसा' । 'पापं किल्बिष कल्मषम्' इत्यमरः । पा पाने, पिवति भक्षयति कर्त्तारम् । इत्यतः 'पानीविषिभ्यः पः' । 'भीमा-दित्वादपादाने' इति सिद्धम् । अथवा धर्मोक्तकार्य्याद्विपरीतः विरुद्धाचरणशीलः । पापः पापोति । कलुषवान् पुरुषः स नियतं धर्मविरुद्धाचरणं करोति । एतस्मिन् पक्षे पापमस्यास्तीति 'अर्श आद्यच्' । अन्यथा पापशब्दस्य स्वतः क्लीवत्वम् ॥ २८ ॥

कार्य्ये नियुक्तस्य पुंसः स्मृतेर्ध्रौव्यमाह यत्रेति । यत्र यत्र यस्मिन् यस्मिन् कर्मणि लोकः प्रसज्यते प्रसक्तो निरतस्तत्तत्-कार्य्यसम्पादने समुद्यतो भवति । शुभे कर्मणि पुण्यस्मृतिः । अशुभे कर्म्मणि अकीर्त्तिस्मृतिश्च । तत्र तत्र कर्म्मणि ध्रुवा निश्चला चिरस्थायिनी स्मृतिः कार्य्यसम्पादन नैपुण्याद्भवति । तत्रैव कर्मणि निरतः स्यात्तेन लोकोपकृतिः शाश्वती स्मृतिश्च स्यात् । अथवा अनुष्ठितेषु कर्मसु ध्रुवा भ्रमशून्या स्मृतिरावश्यकीति । यतः स्मृतिभ्रंशात् कार्य्यनाशो बुद्धिनाशश्च भवति । स्मृतिः संस्कारमात्रजन्यत्वात् कार्य्यसंस्कारः प्रयोजनम् । यद्वा स्मृतिः स्मारकमित्यर्थः ।

'स्थिते नित्ये निश्चिते च ध्रुवं खेऽजस्र तर्कयोः' ।

इति हैममेदिन्यौ । ध्रु स्थैर्य्ये, ध्रुव गतौ वा, ध्रुवति । 'इगुपध' इत्यादिना कः । यद्वा कूटादित्वात् ङित्वम् । उवङ्

**महती प्रसज्येत ॥ ३१ ॥**

**लोके प्रशस्तः स मतिमान् ॥ ३२ ॥**

---

च। 'भवा रतिः' एवं पाठे तु रतिः अत्यासक्तिरित्यर्थः । केचित्तु सूत्रद्वयमेकीकृत्यान्यथा पाठरीतिमङ्गीकुर्व्वन्ति । तथा च 'धर्माद्विपरीतं पापं यत्र यत्र प्रसज्यते तत्र धर्मावनतिर्महती प्रसज्यते' । इत्थं पाठे सूत्रार्थः सुगमः ॥ ३० ॥

धर्मस्य महतीमवस्थामाह महतीति । महती श्रेष्ठा प्रबलेति । यत्र धर्मविरुद्धं पापं प्रसक्तं तत्र धर्मस्यावमानना धर्महानिर्वा प्राधान्येन प्रसज्येत प्रसक्ता भवति । अतः पापप्रसक्तिर्यथा न भवेत्तथा यतितव्यम् । अन्यथा महादुरितपङ्के मनुजकुञ्जरो निमज्जत्येव । 'वृहद्विशालं पृथुलं महत्' इत्यमरः । मह पूजायाम् । 'वर्त्तमाने पृषत् महत्' इत्यौणादिकात् साधुः ॥ ३१ ॥

लोके मतिमतां श्रेष्ठत्वमाह लोके इति । लोके भुवने जनसमूहे । यः प्रशस्तः कर्मदक्षो महामतिः सः पुमान् धीमान् इति । सर्व्वत्र मतिमत्त्वं हि प्राधान्ये कारणम् । यतः 'भूतानां प्राणिनः श्रेष्ठा प्राणिनां बुद्धिजीविनः' इति विदाम्मतम् । श्रेष्ठा इत्यर्थः । अन्यत्रोक्तं नीतिनिपुणैः 'बुद्धिर्यस्य गरीयसी स बलवान् स्थूलेषु कः प्रत्ययः' । 'शस्तं क्षेमे प्रशस्ते च' इति हैमः । प्रकृष्टं शस्तः । शंसु स्तुतौ, प्रपूर्वात्ततः क्तः । मतिमान्, मतिर्बुद्धिर्विद्यतेऽस्येति मतुप् ॥ ३२ ॥

**सज्जन-गर्हिते न प्रसज्येत ॥ ३३ ॥**

**उपस्थित-विनाशः प्रकृत्याकारेण कार्य्येण लच्यते ॥ ३४ ॥**

---

साधुजननिन्दितकार्य्येऽप्रवर्त्तनमाह सज्जनेति। सज्जनाः साधवः। बहवो विद्वांसो वा। तेषां गर्हिते विगीते निन्दिते वा कर्मणि। अन्यो हितेच्छुर्मानवो न प्रसज्येत। नैव तत्र निरतो भवेत्। तथा च स्मृतौ—

"विहितस्याननुष्ठानान्निन्दितस्य च सेवनात्।
अनिग्रहाच्चेन्द्रियाणां नरः पतनमिच्छति" ॥

तत्रैव च, 'अकुर्वन् विहितं कर्म निन्दितञ्च समाचरन्। प्रसजं श्चेन्द्रियार्थेष्विति'। अन्यद्धर्मशास्त्रे पुष्कलमस्ति। गर्हिताचरणे समाजेषु दुर्नीतिर्वर्द्धते। तद्वर्द्धने तत्रोपद्रवः स्यात्। सन् शिष्टोजनः सज्जनः। 'सभ्य-सज्जन-साधवः' इत्यमरः ॥ ३३ ॥

वर्त्तमानकार्य्यस्य भविष्यति हानेर्हेतुमाह उपस्थितेति। उपस्थितानां वर्त्तमानावस्था प्राप्तानां विषयाणां यो विनाशः समुच्छेदो हानिश्च। यद्वा सम्प्रति यो नाशः तस्य प्रकृत्याकारेण विषयस्वरूपेण कार्य्येण तद्व्यापारेण वा लच्यते दृश्यते। वाऽप्यनुमीयते। अत एव वस्तुनः सत्वं धर्महानिश्च कार्य्यं यथा न प्रसरति तथैवावस्थातव्यमिति पूर्व्वानुषङ्गः। प्रकृतिराकारः। आकारः समुदाचार-स्वरूपम्। अन्यत् कार्य्यस्य पूर्वचिन्तया-

**आत्म-विनाशं सूचयत्यधर्म्म-बुद्धिः ॥३५॥**

**नास्ति पिशुनवादिनो रहस्यम् ॥ ३६ ॥**

---

नागतचिन्तया च सम्प्रति दर्शनेनापि अनुमेयम्। स्था गति निवृत्तौ, स्थीयते। ततः क्त प्रत्ययेन सिद्धम्। नश अदर्शने, विनशनं विनाशस्ततो घञ्। आकरणमाकारः करोतेर्घञ्। प्रक्रियते समाक्रियते उपस्थाप्यते यया सा प्रकृतिः तेन स्वरूपमत्र प्रकृतिः ॥ ३४ ॥

अधर्मबुद्धेः स्वस्यापि नाश कारणत्वमाह आत्मेति। आत्मनः स्वस्य वस्तु सत्यस्य वा। अधर्मबुद्धिः अधर्मजनककार्य्ये मतिः। सा तत्कार्य्यकर्त्तुर्हानं समुच्छेदं वा सूचयति प्रकाशयति। यद्वा अधर्मसत्यस्य यथावस्थितवस्तुनश्च विरोधिनी बुद्धिः। सा निजस्य विनाशं प्रकटयति किमुतान्यस्य। अतोऽधर्मबुद्धिः नात्मपरशुभाय भवति। तदुक्तं—

"अधर्मेणैधते राजन् ततो भद्राणि पश्यति।
ततः सपत्नान् जयति समूलस्तु विनश्यति॥"

अन्यत्र लौकिके धर्मबुद्धिपापबुद्ध्योः कथायां व्यक्तमस्ति। 'विनाशः स्याददर्शनम्' इत्यमरः। नश अदर्शने, विनाशनम्। ततो घञ्। 'बुद्धिर्मनीषा धिषणा धीः प्रज्ञा शेमुषी मति'रित्यमरः। बुध्यते बोधनं वा अनयेति ततः क्तिन् ॥ ३५ ॥

खलप्रकृतेर्मानवस्य रहस्य ज्ञाने पाठवमाह नेति। पिशुनवादिनो दुर्ज्जनस्य। 'पिशुनाः खलाः सूचकाः।' त एव वादिनो

## परहस्यं नैव श्रोतव्यम् ॥ ३७ ॥

---

वक्तारः। तेषां रहस्यं गोप्यम्। किमपि नास्ति। तेषां तादृश एव स्वभावः, सततं परदोषाविष्करणे तत्परत्वेन रहस्य विषयज्ञाने ते निपुणा भवन्तीति। बहुधा अन्विष्यापि परदोषमाविष्कुर्वन्ति। अतः धूर्त्तानां किमपि गोपनीयं नास्ति। मतिमान् तेषां सविधे रहस्यं नैव प्रकाशयेत्। 'शठः पिशुनो दुर्ज्जनः खलः' इत्यमरः। वद् व्यक्तायां वाचि। वदनम्। ततो घञ्। वादोऽस्यास्तीति वादी तस्य। पिश, अवयवे, पिंशति। 'क्षुधि पिशिमिथिभ्यः कित्' इत्युनन्। ननु बाहुलकादुनन्, औणादिकसूत्र सत्त्वात्। 'रहस्या स्त्री नदीभेदे गोपनीयेऽभिधेयवत्' इति मेदिनी। रहो गोपने भवम् रहस्यम्। 'दिगादित्वाद् यत्' ॥ ३६ ॥

परहस्य श्रवणे मानस-क्रोधाद्युद्रेकात्तन्निषेधमाह परेति। परस्यान्यस्य रहस्यं गोपनीयं वृत्तान्तं नैव श्रोतव्यम्। तादृशरहस्य श्रवणे बुद्धे र्हीनता परिवर्द्धते। दुष्प्रवृत्तिरपि विषयविशेषे अपरिहार्य्येति। 'परः श्रेष्ठारि दूरान्योत्तरे क्लीवन्तु केवले' इति मेदिनी। पॄ पालन पूरणयोः। पिपर्त्ति, पूर्य्यते अनेन वा। ततः पचाद्यच्। यद्वा 'ऋदोरप्'। 'पुंसि करणे' घ प्रत्ययश्चेति। रभसोऽपि 'रहो निधुवनेऽपि स्याद्रहो गुह्ये नपुंसकम्'। रह त्यागे, असुन्, तेन रहस। रहो भवं रहस्यम्। दिगादित्वात् यत्।

**वल्लभस्य कातरत्वमधर्मयुक्तम् ॥ ३८ ॥**

**स्वजनेष्वति कामो न कर्त्तव्यः ॥ ३९ ॥**

---

अन्ये तु परस्य मतो रहस्तत्त्वं गुह्यं हृद्गतमप्रकाश्यं यत्तदित्याहुः। नीतिविदस्तु अन्यदीय गुह्यविषमनुमाय प्राक् प्रकाशनं रहस्यभेदमित्यूचुः ॥ ३७ ॥

स्वामिनः कातरत्वस्यानौचित्यप्रख्यापनाय यद् धर्मविरुद्ध-माह वल्लभस्येति। वल्लभस्य प्रभोः स्वामिनः गुरोश्चेति। यावत्। तस्य कातरत्वं दैन्यं कार्पण्यञ्चेति। तदधर्मयुक्तम्। अधर्मान्वितम् अयोग्यत्वसूचकमतः पापान्वितमिति। यथा क्षत्रियस्य रणभीरुता। यथा च 'धर्माद्धि युद्धात् श्रेयोऽन्यत् क्षत्रियस्य न विद्यते' इति गीतायाम्। तथैव च 'क्लैव्यं मास्मगम पार्थ! नैतत्त्वय्युपपद्यते'। एवञ्चाभ्युन्नतिकर-स्वकर्म्मसाधने दैन्यं सर्वस्य सर्वथा गर्हितमिति। अपरञ्च यस्तु वल्लभः स योग्यकार्य्येषु शक्तिमान् भवेत्; नाप्यशक्तः। तादृशत्वे कार्य्यहानादधर्मश्च स्यात्। 'वल्लभो दयितेऽध्यक्षे सल्लक्षण तुर-ङ्गमे' इति विश्वः। वल्ल सम्वरणे, वल्लते। 'रसिवल्लिभ्याश्च' इत्यौणादिकादभच्। 'अधीरे कातरः' इत्यमरः। तृ प्लवनतर-णयोः। ईषत्तरति। ततः तरते रच्। ईषदर्थे तु कोः कादेशः ॥ ३८ ॥

स्वजनेषु धनातिस्पृहाऽनिष्टजनकत्वेन निषेधमाह स्वजने-ष्विति। स्वस्यात्मनोजनाः परिवाराः ज्ञातय इति यावत्।

## मातापि दुष्टा तक्तव्या ॥ ४० ॥

तेषु जनेषु अतिकामो अत्यभिलाषः स्वार्थं न कर्त्तव्यः। नच विधातव्यः। तेन ते विरक्ता द्वेषिणोवा स्युः। द्वेष्टारः सन्तोऽवश्यमनिष्टमाचरन्ति। यत्र स्वार्थाभिलाषाधिक्यं तत्रैव विवाद सम्बन्धच्छेदौ भवतः। 'अतिक्रमः' इति पाठेतु अतिक्रमोलङ्घनं उपात्ययो न कार्य्य इत्यर्थः। 'अतिक्रमोऽत्यये कृच्छ्रेऽत्युत्पाते नाशदण्डयोः' इति धरणिः। 'कामः स्मरेच्छयोः पुमान्, इत्यमरः। कमु कान्तौ, काम्यते। घञा सिद्धम्। अतिक्रमणमतिक्रमस्ततोऽतिपूर्व्वात्क्रमेर्घञ्। तद्दा कमेः स्मरार्थं तु काम्यतेऽनेनेति 'पुंसिसंज्ञायाम्' इति घः ॥ ३८ ॥

आत्मविनाशहेतुत्वे मातुरपि त्यागमाह मातेति। माता प्रसूतिः। यद्यपि सा प्रसूतिर्दुष्टा आततायिनी समपकारिणी सती। त्यक्तव्या दुरे हातव्या। न तु सम्बन्धात् च्युता भवति सम्बन्धस्य ध्रौव्यात्। अत्र त्यागपदेन दूरावस्थितिरेव ज्ञेया। सान्निध्येऽवस्थानेऽपकृति-सम्भवात्। अत्रापिशब्दादन्येषां त्यागे शङ्कावतारोनास्त्येवेति सूचितम्। हिताहितविवेकशून्यस्य गुरोस्त्यागमाह, तथाच 'गुरोरप्रतिपन्नस्य कार्य्याकार्य्यमजानतः। उत्पथप्रतिपन्नस्य परित्यागो विधीयते'। एवन्त्यागः स्थानान्निर्व्वासनं वा, न तु दैहिकवधादि। तेषां गुरूणां 'वधोनास्तीति दैहिकः' इति महाभारत-निषेधात्। एतत्तु नीतौ। अन्यद्धर्म्मविषये ज्ञेयम्। 'माता गौर्दुर्गा जनन्नी मह्यो'ति हैमः। मान

**स्वहस्तोऽपि विषदिग्धश्छेद्यः ॥ ४१ ॥**

**परोऽपि च हितो बन्धुः ॥ ४२ ॥**

---

पूजायाम, मन्यते। मा माने च, माति गर्भोऽस्यामिति। 'नप्तृ नेष्टृ' इत्याद्यौणादिकात्तृचा साधुः ॥ ४० ॥

विषाक्रान्तस्य स्वहस्तस्य प्राणनाशकरत्वे च्छेदनमाह स्वेति। स्वस्यात्मनः। हस्तः करः पाणिरिति। विषेण गरलेन भुजगदष्टेन च। यद्वा तादृश भीषण रोगेन। दिग्धः तेन दग्धः विषाक्रान्तः। अतश्छेद्य स्तीच्णास्त्रादिना भेद्यः कर्त्तनीयश्च। 'विषाक्ते दिग्ध लिप्तकौ' इत्यमरः। 'दिग्धोविषाक्तवाणे स्यात् पुंसि लिप्तेऽन्यलिङ्गकः' इति मेदिनी च। 'अङ्गुलीवोरगक्षता' इति कविसमयः। का कथा परहस्तच्छेदे स्वहस्तस्यापि च्छेदः समुचितः। तच्छेदे शरीरप्राणरक्षा सम्भवति। सूत्रमदः पूर्व्वसूत्रस्य दृष्टान्तपरम्। दिह उपचये, दिह्यते। दिहेः क्तः ॥ ४१ ॥

शत्रोरपि हितकारित्वे वन्धुत्वमाह पर इति। परः स्वेतरः शत्रुरनात्मीयः। हितो हितकारी उपकारकः। कार्य्यकालेऽसुहृदपि यः सुहृद्रूपेणोपकरोति सोऽपि च वन्धुर्मित्रम्। तथाचोक्तं राजनीतौ 'परोऽपि हितवान् वन्धुः। बन्धुरप्यहितः परः। अहितोदेहजो व्याधिर्हितमारण्यमौषधम्'। एवञ्च सुधीजनः असुहृदपि ग्राह्यः। मूढ़ो दुर्म्मतिः सखिरपि

कच्छादप्यौषधं गृह्यते ॥ ॥ ४३ ॥

---

शङ्कनीयः। हितः पथ्यम्। हितमुपकृतिरस्यास्तीति अर्श आदित्वादच्। 'बन्धुर्मातृबान्धवयोः' इति हैमः। पारिभाषिकबन्धुश्च—'अत्यागसहनोबन्धुः सदैवानुमतः सुहृत्'इति। दधातेः क्त प्रत्ययः। बन्ध बन्धने, बध्नाति। 'शृस्वृस्निहि' इत्याद्यौणादिकादुः ॥ ४२ ॥

अयत्न-साध्यत्वाद् गृहकच्छादपि औषधग्रहणमाह कच्छादिति कच्छादालयाद् गृहप्रकोष्ठादतिसान्निध्यादपि किमु सुदूरादरण्यादेः। औषधं भैषज्यं गृह्यते आक्रियते। 'अच्छादिति' पाठेतु। अच्छात् सर्पात् तुषाद्वापि इत्यर्थो भविष्यति। न तदर्थः परं रुचिकरः। औषधस्य जीवनदायकत्वात्। 'अच्छः कर्षे तुषे चक्रे शकटव्यवहारयोः। आत्मज्ञे पाशके चाच्छं तुल्ये सौर्व्वचलेन्द्रिये' इति विश्वः। एवमेव मेदिनीकृदाह यथा 'रुद्राक्षैरावणौ सर्पे विभीतकतरावपि। चक्रे कर्षे पुमान् क्लीवं तुल्ये सौवर्च्चलेन्द्रिये'। 'कच्छः स्मृतो भुजामूले कक्षोऽरण्ये च वीरुधि'। 'कच्छः शुष्कतृणे प्रोक्तः कच्छः कच्छु उदाहृतः। कच्छास्यद्वीपदे काश्वयां रथगेह प्रकोष्ठयोः' इति धरणिश्च। कच्छः, कष हिंसायाम्, कषति। 'वृतृ वदि हनि कमि कषिभ्यः स' इति सागमः। अच्छू व्याप्तौ, अच्छति। ततः पचाद्यच्। 'अजातौ सर्व्वमौषध' मित्यमरः। द्रव्यमात्रविवक्षायां औषध

**नास्ति चोरेषु विश्वासः ॥ ४४ ॥**

**अप्रतीकारेषु व्यसनेषु अनादरो न कर्त्तव्यः ॥४५॥**

---

शब्दप्रयोगो दृश्यते। ओषधेरिदम्। 'ओषधेरजातौ' इत्यण्। अन्याश्च फलपाकान्ता ओषध्यो भवन्ति। वैद्यके तु वटिका घृत-तैलासवारिष्टावलेह-चूर्ण-चक्रिका प्राश-प्रलेप-पाचनादीना-मौषधशब्दवाच्यत्वम् ॥ ४३ ॥

अलक्षिते द्रव्यापहरणस्वाभाव्याच्चोरेषु विश्वासाभावमाहेति। चोरेषु तस्करस्तेयकारकपाटच्चरेषु विश्वासो निश्चय-प्रत्ययः। नास्ति न विद्यते। चोर-दस्यु-दुष्टेषु च कृते विश्वासे महानिष्टं स्यादितिभावः। तेषां न्याय्यानाय्य विवेकाभावो विश्वासाभावे हेतुः।

'चोरः पाटच्चरेऽपिस्याच्चौरपुष्पौषधावपि'। इति विश्वः। 'मानसनिश्चय विश्रम्भ-विश्वासाः'। 'समौ विस्रम्भविश्वासा'वित्य-मरः। 'श्वस् प्राणने' विश्वसनमिति विपूर्वात् श्वस्धातोः घञ्। चुर स्तेये, चोरणम् 'अप्रत्ययात्' संज्ञापूर्व्वकत्वान्न गुणः। चौरेति पाठे पचाद्यचा सिद्धः। चुरा शीलमस्य 'छत्रादिभ्योणः' ॥४४॥

अप्रतीकार्य्यो व्यसनः सोढव्य इत्याहाप्रतीति। व्यसनेषु विपज्जनकदोषेषु अष्टादशप्रकारेषु च। अप्रतीकारेषु अप्रति-समाधानेषु वैरनिर्यातनायोग्येषु वा। अनादरोऽग्राह्यः हेयः परिभवो वा। न कर्त्तव्यो नैव विधेयः। यद्यपि समुपस्थितेषु व्यसनेषु प्रतीकर्त्तुं न शक्यते तदा तदर्थे समधिकोद्यमः कार्य्यः,

## व्यसन-मना वाध्यते ॥ ४६ ॥

---

तच्च, सोढ़व्यम् । न तु हेलया तुच्छबुद्धया वा परिहारः । तेन काले भविष्यति महदनिष्टापातः स्यात् । 'अप्रतीकारेष्वनादरो न कर्त्तव्यः' इत्यमपि पाठान्तरमस्ति । तदा तदर्थः सुगमः । तेषु व्यसनेष्विति ऊह्यम् ।

'प्रतीकारो वैरशुद्धिर्वैरनिर्य्यातनञ्च सः' । इत्यमरः । प्रतिकरणं प्रतीकारः । ततः करोतेः घञ्प्रत्ययः । उपसर्गस्ये-त्यादिना दीर्घः । 'व्यसनन्त्वशुभेऽशक्तौ' ।

'दैवानिष्टफले पापे विपत्तौ निष्फलोद्यमे' ।

इत्यमरमेदिन्यौ च । अस् दीप्तौ असु क्षेपणे, व्यस्ति, व्यस्यति वा । भावाद्यर्थे ल्युट् । दृञ् विदारणे, आद्रियते । ततोऽच् न आदरः अनादरः ॥ ४५ ॥

व्यसनस्यासाधुकार्य्यत्वेन क्लेशदायकत्वमाह व्यसनमिति । व्यसनं कामज-कोपजादिदोषः । तद्विद्यते यस्य मनसि स व्यसनमनाः पुरुषः । तेन व्यसनेन स वाध्यते । आपद्भिर्व्या-हन्यते । शिष्टोपदेशसत्सङ्गैर्मानवो मनोविनयेन च व्यसनवारि-धेरुत्तीर्णो भवतीति । प्रागुक्तमन्यत् । 'व्यसनं मनागपि वाधते' इत्थं पाठान्तरत्वमस्ति । तदात्वे मनागल्पमपि व्यसनं पुरुषं वाधते किं बहुभिर्व्यसनैः । ततोऽल्पमपि व्यसनन्त्याज्यं विषवत् । यथा विषं स्वल्पमपि जीवनहरम् । 'किञ्चिदीषन्मनागल्पे' इत्यमरः । मन ज्ञाने, मननम् । मन्यतेराक् प्रत्ययः ॥ ४६ ॥

**अजरामरवदर्थमार्ज्जयेत् ॥ ४७ ॥**

**अर्थवान् सर्व्व-लोकस्य बहुतमः ॥ ४८ ॥**

---

अर्थोपार्ज्जने जरामरण-वर्ज्जितपुरुष इव स्यात्तदाह अजरेति। नास्ति जरा जीर्णता यस्य सोऽजरः। एवमेवामरः। मृतिरहितो देवः। ताविवार्थं धनम् आर्ज्जयेदुपार्ज्जयेत् संगृह्णीयात्। असामर्थ्यालस्यान्वितः सन् न किमपि न कुर्य्यादिति भावः। तदुक्तं विष्णुना

'अजरामरवत् प्राज्ञो विद्यामर्थञ्च चिन्तयेत्'। इति।

तादृशत्वे तु अव्याहतशक्तिरुद्यमसमन्वितो देव इवार्थसमूहमर्ज्जयेदिति। आर्ज्जयेदिति। आङ्सम्यगर्थे। 'अमरवदर्थजातमर्ज्जयेत्' इदृशे सूत्रपाठे अर्ज्जयेत् समासादयेदित्यर्थः। 'केशादौ विस्त्रसा जरा' इत्यमरः। जृष् वयोहानौ, जीर्य्यते अनया। 'षिद्भिदादिभ्योऽङ्'। स्त्रियामाप्। यद्वा जरणमिति भावे अङ्। 'ऋदृशोऽङि गुणः'। 'मरणं निधनं प्राणनाशः'। मृङ् प्राणत्यागे, म्रियते। 'न म्रियते' इत्यमरः। पचादित्वादचा सिद्धम् ॥ ४७ ॥

धनवतो बहूनां सम्मानभाजनत्वमाहार्थेति। अर्थोधनं तद्विद्यतेऽस्येति अर्थवान्। सर्वलोकस्येति। जातावेकवचनम्। सर्वेषां लोकानां मध्ये मतो मान्यः। यद्वा अर्थवतः श्रेष्ठत्वे बहूनाम् असंख्यजनानां मनोऽभिमतः। तदुक्तं विष्णुना

'धनेन बलवान् लोको धनाद् भवति पण्डितः'। इति।

महेन्द्रमप्यर्थहीनमवमन्यते लोकः ॥ ४९ ॥

---

'अन्नेन वसतिर्धनेन कुलमिति' दुर्गसिंहाः। नापि कुलम् अपि तु धनेन वसति रपि भवति। व्यावहारिक विषयेषु धनमेव लोकस्थितेर्निदानम्। धनवान् यद्यपि व्यसनासक्तो न भवेत्तदा तस्य धनममृतं स्यात् तद्वैपरीत्ये विषम्। तथा गवां पय प्राण-दायकम्। तदजीर्णे नवज्वरादौ गरलमिव स्यात्। प्रागुक्त-मन्यत्।

'बहुस्यात्त्रयादिसंख्यासु विपुलेऽप्यभिधेयवत्'। इति विश्वः। वहि वृद्धौ, वंहते। 'लङ्घिवह्योर्नलोपश्च' इत्यनेन उप्रत्ययः ॥४८॥

नृपेन्द्रस्य प्रतापवत्त्वेऽपि धनाभावादवज्ञामाह महेन्द्रमिति। महेन्द्रो देवराजः स्वर्गसम्राट्। स यदि अर्थेन विहीनो दीनः स्यात्तदा लोकस्तं हेयं मन्यते। नापि समाद्रियते, अपि शब्दादितः स्वस्य का कथा स सर्व्वदा परिभूयते। हृत राज्यो महीपालोलोकैर्नाद्रियते, राजोचित-साधनाभावात् परमव-ज्ञायते। यद्वा शक्त्या महेन्द्रतुल्यमपि जनम् अज्ञो धनाभावादव-जानाति। अन्यद् वृहच्चाणक्येऽस्ति। महेन्द्रः। महांश्चासा-विन्द्रश्च। 'सन्महदित्या'दिना समासः। 'इन्द्रः शक्रादित्यभेद-योगभेदान्तरात्मसु'। इदि परमैश्वर्य्ये, इन्दति। 'ऋज्रेन्द्र' इत्यादिना रन्। 'लोकोविश्वे जने' इति हैमः। लोक दर्शने, लोक्यते ततोघञ् ॥ ४९ ॥

**विरूपोऽप्यर्थवान् सुपुरुषः ॥ ५० ॥**

**अदातारमप्यर्थवन्तमर्थिनो न त्यजन्ति ॥५१॥**

---

असुन्दरस्यार्थेन रूपवत्त्वमाह विरूप इति। विगतं रूपम् सौन्दर्य्यं गुणवत्त्वं वा यस्मात् सः अपिच यद्यर्थवान् विरूपः स्यात्तदा स सुरूपः सुश्रीर्म्मनोरमः। अर्थश्रिया शोभमानः। यतोऽर्थेन लोकेषु सर्व्वव्यवहारः सम्पद्यते। कल्पतरौच 'सर्व्वं सेवितुमिच्छन्ति महीपालं धनाशया'। अन्यच्च 'दुःशीलोपि नरः पूज्यो यस्यास्ति विपुलं धनम्' इति। 'पुरुषः स्वात्मनि नरे पुन्नागे चेति' हैमः। पुर अग्रगमने, पुरयति। 'पुरः कुषन्'। 'अन्येषामपि' इति दीर्घः। पृषोदरादित्वा द्वा। यद्वा पूरी आप्यायने, पुरयति। इत्यतो बाहुलकात् कुषन्। 'रूपं स्वभावे सौन्दर्य्ये नाणके नाटकादिके' इति हैमः। रिपु विमोहने, रोपयति। अचा सिद्धम्। अन्येषामपीति दीर्घः ॥५०॥

दानशक्ति-विरहितेऽप्यर्थवति याचकानां परिहाराभावमाह एति। अदातारं दानशक्तिरहितम्। अर्थवन्तं धनिनं कृपणं सन्तमपि चेत्। अर्थिनः याचकाः। न त्यजन्ति नापि विजहति। दानशक्तेरन्वेषाय पुनः पुनस्तत्सविधे प्रार्थयन्ति। धनवत्त्वाद्दानसम्भावनाद्दृष्ट्वा तं याचन्ते। धनस्य तु तिस्रो गतयो भवन्ति। भोगोदानं नाशश्च। तेषु दानं श्रेष्ठम्। तदुक्तं विष्णुना 'उपार्ज्जितानां वित्तानां त्याग एव हि रक्षणम्'। भोगोहि स्वस्य कुटुम्ब-दीनादेश्च। दानं सत्पात्रे तादृश

## अकुलीनोऽपि अर्थवान् कुलीनाद्विशिष्टः ॥५२॥

---

कार्य्येषु मठमार्गसेतु-प्रपा भैषज्यगेह-नदी शिक्षा-दैवोत्पातेषु च। नाशो दस्यु-चोरव्यसन-विपत्स्वपि। अन्यत् सोमदेवीये नीतिवाक्यामृते। यस्यत्वर्थानां भोग-दान-सन्नियोग-रक्षणेषु प्रज्ञा नास्ति तस्यार्थोऽनर्थाय भवति ॥ ५१ ॥

कुलीनादर्थवतामर्थस्य कार्य्यसाधकत्वेन तद्वैशिष्ट्यमाह एति। अकुलीनः। अश्रेष्ठकुलजातो हीनकुलोत्पन्नः। अर्थवान्। धनी सन्। कुलीनात् सत्कुलोद्भवात्पुंसः। विशिष्टः मान्यत्वेन विशेषगुणाक्रान्तः। तथाच—

"अकुलीनोऽपि शास्त्रज्ञो दैवतैरपि पूज्यते" ॥

अन्यदुक्तं विद्यारसिकैः 'धनैर्निष्कुलीनाः कुलीना भवन्ति। धनैरापदो मानवा निस्तरन्ति'। अपरञ्च 'विशालकुलसम्भूतो निर्धनः परिभूयते'। अन्यदप्युक्तञ्चाणक्येऽस्ति। 'महाकुलकुलीनार्य्याः' इत्यमरः। 'कुलोद्भवे कुलहित् त्रिषु मान्ये पुनः पुमान्' इति मेदिनी च। कुलीनः, कुलस्यापत्यम्। 'कुलात् खः'। 'अपूर्व्वपदादन्यतरस्यां यड्ढकञौ' इत्यादिना सिद्धम्। अर्थोविद्यतेऽस्येति मतुप्। केचित्तु—

"आचारो विनयो विद्या प्रतिष्ठा तीर्थदर्शनम्।
निष्ठावृत्तिस्तपोदानं नवधा कुललक्षणम्" ॥

इत्याहुः। आर्य्याणां कौलीन्यप्रथा भारते वङ्गेषु अन्यप्रान्तेषु च विद्यते। अत एव उत्कर्षविशेषात्मक नवधागुणविशिष्टत्वं

## दारिद्र्यं खलु पुरुषस्य जीवित-मरणम् ॥५३॥

कुलीनत्वम् । यद्वा उत्कर्षविशेष वंशजातव्यक्तिरिति । तथा च उत्कर्षविशेषधर्मावच्छिन्नवंशजातकत्वे सति तद्धर्मवत्त्वं कुलीनत्वमिति शेषलक्षणम् ॥ ५२ ॥

पौरुषहानिकरत्वेन दारिद्र्यस्य विगानमाह दारिद्र्यमिति । दैन्यं नैःस्वं निर्द्धनत्वमिति यावत् । पुरुषस्य मानवस्य यज्जीवितं प्राणाः असवः ; तत्खलु दैन्यान्मरणं निधनमिव विजानीयात् । तदुक्तं शूद्रकैः—

"दारिद्र्यान्मरणाद्वापि मरणं मम रोचते" ।

भोजप्रबन्धेऽप्याह—

"अर्था न सन्ति न च मुञ्चति मां दुराशा,
त्यागे रतिं वहति दुर्ल्ललितं मनो मे ।
याञ्चा च लाघवकरी स्ववधे च पापम्,
प्राणाः स्वयं व्रजत किं परिदेवनेन" ॥

तत्र 'प्राणाः स्वयं त्यजत मां नहि तत्र दुःखम्' इत्यपि पाठान्तरम् । 'निःस्वस्तु दुर्विधोदीनो दरिद्रो दुर्गतोऽपि सः' इत्यमरः । दरिद्रा दुर्गतौ, 'दरिद्राति' । इति पचाद्यच् । तस्य भावो दारिद्र्यम् । जीव प्राणधारणे, जीवितम् । ततोभावे क्तः । यद्वा जीवनमपि दारिद्र्यदुःखान्मरणमिव । 'जीवित' मरणम्' इति पाठभेदे जीवनं यत्तन्मरणवत् कष्टप्रदमित्यर्थः ॥ ५३ ॥

**कस्यचिदर्थं स्वमिव मन्यते साधुः ॥५४॥**

**परविभवेष्वादरो नैव कर्त्तव्यः ॥ ५५ ॥**

---

सज्जनस्य स्वार्थपरार्थयोर्व्याघाते तुल्यप्रतीतिमाह कस्यचिदिति। कस्यचिज्जनस्यार्थं धनम्। साधुः सज्जनो महाजनो महामतिरिति यावत्। स्वमिवात्मन इवेदं परकीयं वस्तु विनश्यतु इत्थं मतिर्माभूत्। यथा स्वार्थहानौ दुःखं तथा परार्थहानावपीतरस्य दुःखं भवेत्। साधूनां विषये इत्थं स्वपरभेदाभावः। तदुक्तम्

"अयं निजःपरोवेति गणना लघुचेतसाम्"।

अपरञ्च "आत्मवत् सर्वभूतेषु यः पश्यति स पण्डितः"। असाधुस्तु स्वस्मात् परकीयद्रव्यं भिन्नं मत्वा तद्धरणव्याघातादौ प्रवृत्तः स्यादिति। 'स्वः स्यात् पुंस्यात्मनि ज्ञातौ त्रिष्वात्मीयेऽस्त्रियां धने' इति मेदिनी। स्वन शब्दे स्वनति। 'अन्येभ्योऽपि दृश्यते' इति वार्त्तिकात् डः। 'साधुर्वार्धुषिके चारौ सज्जने चाभिधेयवत्' इति मेदिनी। साध संसिद्धौ, साध्नोति धर्मं हितं वा। 'कृपा वा' इत्याद्यौणादिकादुण्॥ ५४ ॥

लोभापहरणादिभयात् परसम्पत्तिषु अत्यादरनिषेधमाह परेति। परेषामन्यजनानां विभवेषु धन-सम्पत्तिषु आदरः आग्रहो लोभो नैव कर्त्तव्यः। यतस्तेष्वत्यादरेण लोभो विवर्द्धितुं शक्यते। तस्मादपहरण-व्याघातेच्छापि सम्भविष्यति तेन पापञ्चेति। परन्तस्य सौहित्यबुद्ध्या समादरकरणे दोषाभावः।

परविभवेष्वादरो विनाश-मूलम् ॥ ५६ ॥

पलालमपि परद्रव्यं न हर्त्तव्यम् ५७ ॥

---

तदुक्तं लघुचाणक्ये 'परद्रव्येषु लोष्टवत्' इति। मानवनीतौ च 'परद्रव्येष्वभिध्यानं मनसाऽनिष्टचिन्तनम्' इत्यनिष्टजनकत्वमुक्तम्। 'विभवो धननिर्वृत्योः' इति हैमः। विपूर्वाद् भवते रचा विभव इति साधुः। 'आदृतौ सादरार्चितौ' इत्यमरः। दृङ् आदरे, आद्रियते। ततोऽच् ॥ ५५ ॥

परद्रव्ये लोभनिषेधमुक्त्वा सम्प्रति तस्य विवाद-पापजनकत्वेन विनाशहेतुत्वं वक्ति परेति। परस्य विभवे धने ऐश्वर्य्ये वा समादरोऽत्याग्रहश्च। आत्मनो विनाशस्य मूलं हेतुः। तथा चोक्तं कविना—

"यदस्मदीयं न हि तत् परेषाम्"।

इति विज्ञाय मतिमान् सुखं तिष्ठेत्। एवं परदारेष्वपि विज्ञेयम्। परदाराग्रहे रावणदुर्य्योधनकीचका विनष्टाः। शिष्टं प्रागुक्तम्। 'मूलं शिफाद्ययोः'। 'मूलवित्तेऽन्तिके ना भे' इति मेदिनी। मूल प्रतिष्ठायां, मूल रोहणे वा, मूलति। इगुपधत्वात् कः ॥ ५६ ॥

अतिक्षुद्रमपि यत् परद्रव्यं तद्धरणे परानिष्टाभावेऽपि न तद्धर्त्तव्यमित्याह पलालेति। पलालं निष्फलं धान्य' शुष्ककाण्डं

**परद्रव्यापहरणमात्मद्रव्यविनाशहेतुः ॥ ५८ ॥**

**न चौर्य्यात् परं मृत्युपाशः ॥ ५९ ॥**

---

वा । तद्वदसारं परद्रव्यं तुच्छं वस्तु मत्वा न हर्त्तव्यम् । नैवापहरणीयम् । ततो यत्किञ्चिदपि परकीयं वस्तु तदननुमत्या न संग्रह्णीयादिति भावः । 'द्रव्यं भव्ये धने क्ष्मादौ' इति हैमः । द्रविवः, 'द्रव्यञ्च भव्ये' इति साधु । प्रागुक्तमन्यत् । 'पलालोऽस्त्री स निष्फलः' इत्यमरः । धान्यरहितकाण्डः पलालम् । पल गतौ, पलति । 'तमिविशिविड़ि' इत्यादिना कालन् । यद्वा पलमलति । अल भूषणादौ । तस्माद् अण् । द्रव्यविशेषणात् क्लीवत्वम् । पुंस्त्वमन्यथा ॥ ५७ ॥

येन मन्दमतिना लोभात् प्रमादाद्वान्य-द्रव्यापहरणं क्रियते तस्यात्मनाशकारणमाह परेति । परेषां गुर्वादीनां शत्रूणां अन्येषाञ्च । यद् द्रव्यापहरणं तत् स्तेयकरणम् । तत्कर्त्तुरात्मनः विनाशः प्राणादेः संहारः । तस्य हेतुः कारणम् । यद्वा द्रव्यस्यान्यस्वामित्वविशिष्टवस्तुनः । यदपहरणन्तदात्मनः स्वस्य द्रव्यस्य वित्तस्य । विनाशस्य ध्वंसस्य हेतुः कारणं ज्ञेयमिति । अतो बलात् प्रमादा द्वान्यद्रव्यस्तेयकरणरूपावैधकर्म्म न विधेयम् । 'द्रव्यं स्याद् द्रविणे भव्ये पृथिव्यादौ' इति विश्वः । 'अपहारस्त्वपचयः' इत्यमरः । अपचयोऽपहरणमत्र ॥ ५८ ॥

चौर्य्यस्य यमपाशतुल्यत्वमाह नेति । चौर्य्यात् स्तेयकरणात् परं श्रेष्ठमधिकमिति । मृत्योर्यमस्य मृतेर्वा पाशः बन्धनरज्ज-

# यवागूरपि प्राणधारणं करोति काले ॥ ६० ॥

---

नास्ति। यथा हि यमपाशेन निधनसमये तद्भटेन मृतप्राणाः नीयन्ते। तद्वच्चौर्य्यापराधेन राजपुरुषैर्नीयते। परमस्याधिक्यं यमपाशैर्वारमेकं नीयते चौर्य्यापराधेन प्रतिवारं बद्धा नेतुं शक्यते। अतोऽस्य श्रेष्ठत्वम्। चौर्य्यापराधे यशोहानिरर्थनाशः शारीरिककष्टं कारालयभोगश्चेति विदितमस्ति सर्वेषाम्। यमपाशश्च—

"ततः सत्यवतः कायात् पाशबद्धं वशङ्गतम्।
अङ्गुष्ठमात्रं पुरुषं निश्चकर्ष यमो बलात्" ॥

इति भारते। काठकश्रुतावुक्तम् 'स मृत्युपाशात् पुरतः' इति। 'स्तेयं स्तैन्यञ्च चौर्य्यं स्याच्चौरिका चौरिकेऽस्त्रियाम्' इति वाचस्पतिः। चौर्य्यापराधे दण्डविधिरस्यार्थशास्त्रेऽस्ति। चौरस्य कर्म-चौर्य्यम्, ततः ष्यञ्। मृत्युः। मृङ् प्राणत्यागे, म्रियते। 'भुजिमृङ्भ्यां युक्त्युकौ' इति त्युक्। 'पाशस्तु मृगपश्वादिबन्धने' इति हैमः। पश बन्धे, पाशयति, चुरादौ। ततो घञ् ॥ ५८ ॥

समये अतिक्षुद्रवस्तुनापि जीवनधारणं सम्भवति तदाह यवागूरिति। यवागूरुष्णिका रोगि-पथ्यविशेषः। सा तु क्षुद्रा अल्पा अपि काले रोगपरीभूत शरीरे अन्नाभावसमये वा। प्राण-धारणं लोकानां जीवनरक्षणं करोति। अतः क्षुद्रोऽपि काले-महोपकारसाधनं विदधाति। तत्र हेयबुद्धिं न कुर्य्यात्। यद्वा

## न कालेन मृतस्यौषधं प्रयोजनम् ॥ ६१ ॥

---

लोकानां यवाग्वा प्राणधारणसम्भवे। किमर्थं प्राणविघातक-तुल्यकर्म्मणा चौर्य्येण। तदुक्तं नीतिविद्भिः—

"स्वच्छन्दवनजातेन शाकेनापि प्रपूर्य्यते।
अस्य दग्धोदरस्यार्थे कः कुर्य्यात् पातकं महत्" ॥

राजवल्लभेऽप्युक्तं—

"यवागूर्ज्वरतृष्णाघ्नी लघ्वी वस्तिविशोधनी।
अतिसारे ज्वरे दाहे हिता वह्निप्रदीपनी" ॥

'यवागूरुष्णिका श्राणा विलेपा तरला च सा' इत्यमरः। यु मिश्रणे, यौति, यूयते वा। 'सृ युवचिभ्योऽन्युरागूजक्नुचः' इत्यनेनागूच् ॥ ६० ॥

योग्यकाले मृतस्य मृतेः प्रागौषधसेवन-प्रयोजनाभावमाह नेति। कालेन योग्य वार्द्धक्यसमयेन मृतस्य निधनार्हस्य लोकस्य। औषधप्रयोजनं भैजज्यावश्यकत्वं नास्ति। तदा तु भैषज्यं नैवानुकूल्यमाचरति, न तेन रोग उपशाम्यति नियतेः प्राबल्यात्। तदुक्तमभियुक्तैः 'प्राप्तकालो न जीवति' इति। वैद्यके च—

"नाऽकाले म्रियते कश्चिन्नास्ति मृत्युरकालजः।
यो यस्मिन् म्रियते काले मृत्युकालः स तस्य हि" ॥

'न मृतस्यौषधं प्रयोजनम्' इत्थं पाठे मृतस्य प्राणरहित-स्यौषधेन किं प्रयोजनं तन्निष्फलमिति। कालेनेति 'प्रकृत्यादिभ्य-

**स्वकाले स्वल्पमपि प्रभूतत्वस्य प्रयोजनम्भवति ॥ ६२ ॥**

---

उपसंख्याने' तृतीया। यद्वा विवक्षातः सप्तम्यर्थे तृतीया। 'भेषजौषधभैषज्यानी'त्यमरः। ओषः प्लोषो दीप्तिर्वा धीयते अत्र इति दधातेः 'कर्म्मण्यधिकरणे च' इति किः। एवं 'कृ दिकारादिति' ङीषि दीर्घत्वम्। यद्वा ओषधेरिदम्। 'ओषधेरजातौ' इत्यनेनाण्। 'मृतं मृतौ याचिते च' इति हैमः। मृङ् प्राणत्यागे, म्रियते। 'गत्यर्था' इत्यादिना क्तः॥ ६१॥

योग्यकाले अत्यल्पमपि वस्तु तत् प्रचुरस्य साधकं भवतीति आह स्वेत्यादि। स्वस्य कर्म्मणः काले समये स्वल्पमपि अतिलघ्वपि वस्तु प्रयोजनमुद्देश्यमभीष्टं वा प्रचुरत्वं साधयति। अकाले तु पुष्कलमपि द्रव्यं वृथा भवति। यथा क्षुधितस्य स्वल्पभोजनमपि श्रेयः। वुभुक्षा विरहितस्यात्युपादेयबहुभोजनमपि वृथेति। यद्वा सति सुचिकित्स्ये रोगे औषधबिन्दुरपि उपकरोति। अचिकित्स्ये पुष्कलमपि भेषजं नोपकरोति। 'समकाले स्वयमपि प्रभुत्वस्य प्रयोजनं भवतीति' पाठभेदे एकस्मिन् समये प्रभुत्वस्यावश्यकत्वमित्यर्थः। अप भूषणादौ, अप्यते, वार्य्यते। 'बाहुलकात् पः'। 'प्रभूतं तुङ्गते प्राज्ये' इति हैमः। प्रभवति स्मेति प्रपूर्व्वाद् भवतेः 'गत्यर्था' इत्यादिना क्तः। ततस्तस्य भावः प्रभुतत्वम्॥ ६२॥

**नीचस्य विद्या पापकर्मणा योजयति ॥६३॥**

**ऐहिकामुष्मिकं वृत्तम् ॥ ६४ ॥**

---

हीनमतेः शठस्य विद्यायाः कार्य्यमाह नीचस्येति। नीचस्य हीनस्य प्राकृतस्येति यावत्। पापकर्म्मणा दुष्कार्य्येण चौर्य्य-कापट्यादिभिर्वा। विद्या सत् शास्त्रपाठजनितं ज्ञानं सुशिक्षेति च। योजयति सङ्गमयति। अतो नीचेषु सुविद्याजनितं फलं दुर्लभम्। तथा च भागवते 'सरस्वती ज्ञानखले यथा सती' इति। न केवलं विद्यया नरो गौरवं याति। अपि तु शिष्टा-चारसौजन्य-विनय-धर्म्मादिभिः प्रयोजनसिद्धिस्तत्र दृश्यते। 'नीचः प्राकृतस्तु पृथक् जनः' इत्यमरः। 'नीचस्य विद्याः पाप-कर्म्मणि योजयन्ति' इत्यपि पाठद्वैधे अर्थवैषम्यं नास्ति। विद् ज्ञाने, इत्यतो क्यपा सिद्धम्। छान्दोग्ये सप्तमप्रपाठके सनत्कुमार नारदसंवादे नाना विद्या लिखिताः। शैवतन्त्रे चतुःषष्ठिकला-विद्याः समुद्दिष्टिताः। विष्णुपुराण-याज्ञवल्क्यस्मृत्युक्ता अष्टा-दशविद्याः। बौद्धग्रन्थे ललितविस्तरे चतुःषष्ठि-विद्याः सम्यग-ङ्किताः। एवमेव दशकुमारचरिते नानाविद्याः सम्यग्लिखिताः। साहित्यदर्पणकृन्मते अष्टादशभाषा इति॥ ६३ ॥

लोलचरितस्य कार्य्यस्य वा फलमाह ऐहिकेति। वृत्तं चरितम्। यद्वा जीवत्कालानुष्ठितं कर्म्म। ऐहिकमैहलौ-किकम्। आमुष्मिकम् आमुष्मिकं पारलौकिकम्। एतदुभय-

## अक्कृतेर्नियता क्षुद्‌बाधा ॥ ६५ ॥

मनुसरति। लोकचरित्रे दुष्टे नियतमिहकाले अकीर्त्तिः। परकाले नरकः। सौशील्ये चेहकाले सुकीर्त्तिः परकाले स्वर्गलाभः। अतः चरित्रं सदा रक्षणीयम्। वृत्तानुसारेण कर्म्म-फलभोग इति केचित्। 'वृत्तं वृत्तौ दृढ़े मृते चरित्रे' इति हैमः। 'वृत्तेऽन्यलिङ्गं वा क्लीवे छन्दश्चारित्र-वृत्तिषु' इति मेदिनी। 'वित्त'मिति पाठे तु वित्तं धनमिति। धनस्य सदसद्भावयुक्तत्वे नेह परलोके च तत्फलमपि सुखदुःखरूपेण सदसच्च भवति। वृतु वर्त्तने, वर्त्तनम्। 'गत्यर्था' इत्यादिना क्तः ॥ ६४ ॥

कार्य्यासमर्थस्यालसस्य निरन्तरं क्षुधार्त्तत्वमाह अकृतेरिति। नास्तिकृतिः कार्य्यं यस्य सः। यस्य अकर्म्मण्यस्यालसस्य कर्म्मा-समर्थस्येति यावत्। क्षुद्बाधा। क्षुधार्त्तता क्षुधया पीड़ा व्यथन-ञ्चेति। सा नियता निश्चिता अवश्यम्भाविनी। नियतमर्थ-चिन्तया क्षुधाया आधिक्यं भवति। आलस्यं हित्वा नियतं कर्म्मसु लोकः प्रवृत्तः स्यात्तेन क्षुन्निवृत्तिः सुनिश्चिता। 'अश-नाया वुभुक्षा क्षुत्' इत्यमरः। कर्म्मकुशलस्य कर्म्मणा नियत-मर्थागमस्तेन च स्वस्य परेषाञ्चावश्यं वुभुक्षा निवृत्तिर्भवेत्। 'बाधा दुःखे: निषेधे च' इति मेदिनी। बाधृ विलोड़ने, बाधते। 'गुरोश्च' इत्यनेन अप्रत्ययः। क्षुध वुभुक्षायाम्, क्षोधनम्। क्विपा सिद्धम्। भागुरिमते, तु 'टापञ्चापि हलन्तानां क्षुधा वाचा निशा गिरा' इत्यनेन क्षुधेति सिद्धम् ॥ ६५ ॥

**नहि धान्य-समोऽर्थः ॥ ६६ ॥**

**न क्षुधासमः शत्रुः ॥ ६७ ॥**

---

धान्यस्य सर्व्वसस्य प्राधान्यकथनमुखेनाह नहीति । धान्येन व्रीहिना समस्तुल्योऽर्थो धनमन्यत् किमपि नहि विद्यते । सत्सु यवादिषु धान्येन हि लोकानामन्नभूतेन प्राणधारणं भवति । अतस्तस्य श्रेष्ठत्वं सौलभ्यात् । तथाच रामायणे,—

"उत्पत्तिर्विषमा यस्य नित्यं यस्य व्ययो भवेत् ।

सर्व्वसस्यप्रधानस्य धान्यस्य कुशलं वद" ॥ इति

साधूक्तम् । 'धान्येन धनवानिति' दौर्गाः । धान्येभ्यः अन्नानि सम्भवन्ति । तदुक्तं सूरिभिः—

"कलावन्नगतप्राणा न बुद्धिबलजीवनम्" ।

पराशा परमं दुःखं' * * * ॥

महाभाष्ये तु 'शण सप्तदशानि धान्यानि' इत्युक्तम् । अमरव्याख्याने राजमुकुटैरपि सप्तदशप्रकारत्वं धान्यानामुक्तम् । रामायणे तु भरतं प्रति श्रीरामचन्द्रवाक्यम्—अशेष स्वर्णरत्नादिधारणेन क्षुन्निवृत्तिर्न भवति । परं केवलमन्नेन तत् स्यादिति । 'धान्यस्तु व्रीहिधान्याके' इति हैमः । धन धान्ये, धनति । धनमेव धानं धाने पोषणे साधुः । 'तत्र साध्वर्थे यः' इति यत् । सम वैक्लव्ये, समति । ततः अचा सिद्धम् ॥ ६६ ॥

जीवनहानिकरत्वेन—क्षुधायाः शत्रुतो हि आधिक्यमाह

## नास्त्यभक्ष्यं क्षुधितस्य ॥ ६८ ॥

---

नेति बुभुक्षाशनायेति । तत् समस्तत्सदृशः । शत्रुर्वैरी नास्तीत्यर्थः । शत्रुणा च धनादेरनिष्टं क्रियते । क्षुधा तु शरीरेन्द्रियप्राणहारिणी । इति तस्याः प्राधान्यं दौर्ब्बल्यकरत्वञ्च । अतः क्षुधानिवृत्तौ भक्ष्यः संग्रहणीयः । 'दस्यु-शात्रव-शत्रवः' इत्यमरः । क्षुध बुभुक्षायां, क्षोधनं ततः क्विप् । भागुरिमतेटापि क्षुधेति । शातयतीति शत्रुः । 'रुषातिभ्यां क्रुन्' इत्यनेन साधुः । विषयेऽस्मिन् प्रागुक्तमन्यत् ॥ ६७ ॥

बुभुक्षितस्य क्षुधाप्राबल्यात् सर्व्वद्रव्याशन-सम्भावनामाह नेति । क्षुधितस्य बुभुक्षितस्य । बुभुक्षार्त्तत्वात् किमप्यभक्ष्यं अखाद्यं नास्ति न विद्यते । क्षुदनलदग्धोदरस्यामपत्र-मृदादिभक्षणेऽपि प्रवृत्तिर्भवति । भोजनं विना प्राणधारणानुपपत्तेः । महाभारते—

"वासुदेव जरा कष्टं कष्टं धनविवर्ज्जयः ।
पुत्रशोकस्ततः कष्टं कष्टात् कष्टतरं क्षुधा" ॥

अन्यदुक्तञ्च विज्ञैः—

"काव्येन हन्यते शास्त्रं काव्यं गीतेन हन्यते ।
गीतञ्च स्त्रीविलासेन सर्वहानं बुभुक्षया" ॥

कविसमये च 'बुभुक्षितः किं न करोति पाप'मिति । 'बुभुक्षितः स्यात् क्षुधितः' इत्यमरः । क्षुधा सञ्जाताऽस्येति 'तारकादित्वादि'

## इन्द्रियाणि जरावशं कुर्व्वन्ति ॥ ६९ ॥

---

तम् । यद्वा क्षुध् बुभुक्षायाम्, क्षुध्यति । अकर्म्मकत्वात् क्तः । 'वसति क्षुधोरि'त्यादिना इट् ॥ ६८ ॥

इन्द्रियैर्लोकानां जरावशीभूतकारणमाहेन्द्रियेति । तानीन्द्रियाण्येकादश । तत्र चक्षुः कर्णं नासिका जिह्वात्वगाख्यानि ज्ञानेन्द्रियाणि पञ्च । वाक्पाणिपादपायूपस्थाभिधानानि कर्म्मेन्द्रियाणि च पञ्च । एकादशं मनः । इति सांख्यवृद्धाः । केवलं वेदान्तपरिभाषाकृन्मते नास्ति मनसः इन्द्रियत्वम् । इन्द्रस्यात्मनोलिङ्गं गमकमिन्द्रियम् । 'न व्यापकत्वं मनसः करणत्वादिन्द्रियत्वाद्वा' इति सांख्यसूत्रम् । अनेन मनसो-व्यापकत्वनिरासः । अयञ्च सर्व्वतन्त्रसिद्धान्तः । तथा चात्रार्थे वेदान्तसूत्रं 'नित्योपलब्ध्यनुपलब्धि प्रसङ्गोऽन्यतरनियमो वा अन्यथा' । तत्र काणादसूत्रञ्च 'आत्मेन्द्रियार्थसन्निकर्षे ज्ञानस्य भावोऽभावश्च मनसो लिङ्गम्' । एवमेव न्यायसूत्रञ्च 'युगज्ज्ञानानुत्पत्तिर्मनसो लिङ्गम्' । एभिः सूत्रैर्मनसो विभुत्व व्यापकत्वनिरासः । यत्तु सांख्यदर्शनभाष्ये विज्ञानभिक्षुणा 'तत्तद्विषयगोचरतया व्यापित्वमपि सिद्धम्' इत्युक्तं तत् सर्व्वतन्त्रसिद्धान्तविरोधादनुपादेयम् । तानीन्द्रियाणि मानवं जराया वशमधीनं कुर्व्वन्ति । इन्द्रियातिसेवया शक्तिक्षयाद् लोका जरया जीर्णतां यान्ति । अत ऐन्द्रियिक संयमः सम्यगास्थेयः । यद्वा क्षुधया पीड़ितस्येन्द्रियाणि ः' जरायत्तं कुर्वन्ति मानवमिति पूर्वसूत्रानुषङ्गः ।

**सानुक्रोशं भर्त्तारमाजीवेत् ॥ ७० ॥**

**लुब्धसेवी पावकेच्छया खद्योतं धमति ॥७१॥**

---

'इन्द्रियन्तु चक्षुरादिषु रेतसि' इति हैमः। इन्द्रियमिन्द्रलिङ्गमित्यादिना साधुः। 'पलितं जरसा शौक्ल्यं केशादौ विस्रसा जरा' इत्यमरः। जृष् वयोहानौ, जीर्य्यते अनया। 'षिद्भिदादिभ्योऽङ्'। यद्वा जरणं जरा ततो भावे अङ्। 'ऋदृशोऽङि गुणः' ॥ ६९ ॥

कृपावतः प्रभोराश्रये हितकथनमाह सान्विति। अनुक्रोशेन दयया सह वर्त्तमानं भर्त्तारं स्वामिनं प्रभुमिति। आजीवेत् जीविकार्थं समाश्रयेत्। तादृशस्य प्रभोराश्रये कार्य्यसम्पत् प्रबला स्यात्। निर्दयप्रभोराश्रये अवनति सम्भवः कुतो वा जीविका। अतो धन दया गुणयुक्तस्य प्रभोराश्रयः श्रेयान्। दैवाद्यदि धनाभावो दया तु सुलभा ऽतः। एतत्प्रसङ्गादुक्तं नीतिविद्भिः—

"सेवितव्यो महावृक्षः फलच्छाया-समन्वितः।
यदि दैवात् फलं नास्ति छाया केन निवार्य्यते' ॥

अन्यच्च—'निर्गुणं परिहृत्यैव गुणवन्तं समाश्रयेत्'। स्वामिलक्षणमर्थशास्त्रे युक्तिकल्पतरौ चास्ति। क्रुश आह्वाने, अनुक्रोशन्त्यनेन हलश्चेति घञ्। भर्त्तेति। डुभृञ् धारण-पोषणयोः, बिभर्त्ति। ततः अचा सिद्धम् ॥ ७० ॥

लोभपरायणस्य या सेवा तस्याः फलमाह लुब्धेति। लुब्धं

## विशेषज्ञं स्वामिनमाश्रयेत् ॥ ७२ ॥

लोभपरायणं सेवते अनुवर्त्तते यः स लुब्धसेवी, यद्वा लुब्धस्य सेवा अस्यास्तीति लुब्धसेवी । स पावकेच्छया अनलाशया, खद्योतं ज्योतिरिङ्गणं धमति समुद्दीप्यति । वह्निलाभे वञ्चितः सन् विफलमनोरथो भ्रान्तेर्भवतीति । तदुक्तं विदाम्बरैः—

'हीनाश्रयो न कर्त्तव्यः कर्त्तव्यो महदाश्रः' ।

कविसमयश्च 'उपासना चेन्महतामुपासना' । पूर्वसूत्रोक्तविषय-समर्थनमनेनोदाहरणमुखेन कृतम् । अतः शक्तिमद्दयावतः प्रभोराश्रयः कार्य्यः । 'खद्योतो ज्योतिरिङ्गणः' इत्यमरः । लुभ गार्द्ध्ये, लुभ्यति । 'गत्यर्था' इत्यादिना कः । खे आकाशे द्योत्यते । द्युत दीप्तौ, अचा सिद्धम् । यद्वा खं द्योतयतीव, अण्-प्रत्ययेन जातम् ॥ १७१ ॥

पूर्व्वसूत्रस्य तात्पर्य्यप्रदर्शनमुखेनोपयुक्तस्याश्रयमाह विशेषज्ञ-मिति । विशेषज्ञं प्राज्ञं निपुणमिति यावत् । स्वामिनं प्रभुम् । आश्रयेदनुसरेत् सेवेतेति । तादृश-स्वामिन-सेवया मनोरथः पूर्त्तिं गमिष्यतीति नात्र शङ्कावसरः । नत्वज्ञम् अविवेकिनं प्रभुमनुवर्त्तेत । तदात्वे कार्य्यनैष्फल्यात् । विशेषं जानातीति, ज्ञा अवबोधने, इत्यस्मात् 'आतोऽनुपसर्गे' इत्यनेन कः । 'स्वामी-त्वीश्वरः पतिरीशिता' इत्यमरः । स्वमस्यास्तीति स्वामिन् । 'स्वामिन्नैश्वर्य्ये' इत्यादिना साधुः ।

'विशेषज्ञः प्रवीणश्च निपुणो दक्ष इत्यपि' ।

इति धरणिः ॥ ७२ ॥

## स्त्रीणाममैथुनं जरा ॥ ७३ ॥

## पुरुषस्य मैथुनम् ॥ ७४ ॥

---

कामिनीनामसङ्गमेन जीर्णत्वमाह स्त्रीणामिति । स्त्रीणां रमणीनां प्रमदानामिति । अमैथुनमव्यवायः सुरताभावः । जरा वार्द्धक्यं वयोहानिरिति । न तु वृद्धानां योषिताम् । कामिनीनां कामशक्तेराधिक्यात् पुंसोऽधिकः व्यवसायः हितकरः । पुंसस्तु अल्पोव्यवायः आयुर्वर्द्धकः । अन्यद्वैद्यके वात्स्यायनीये कामसूत्रे चास्ति । नेह प्रतन्यते विषयानुपयोगित्वात् । 'स्त्री योषिदबला योषे'त्यमरः । स्त्यैञ् पालने । स्त्यायति पालयति गर्भोऽस्यामिति स्त्यायतेर्ड्रट् । टिलोपः । यलोपश्च । 'टिड्ढा' इत्यादिना ङीप् । तासां स्त्रीणामिति सम्बन्ध-षष्ठ्या बहुत्वे सिद्धम् । 'विस्रसा जरा' इत्यमरः । 'मैथुनं निधुवनं रतम्' इत्यमरः । मिथुनस्य कर्म्म । युवादित्वादणा भाव्यम् । पश्चान्नञ्योगः । जॄष् वयोहानौ, जीर्य्यते अनया । 'षिद्भिदादिभ्योऽङ्' । यद्वा जरणं जरा । भावेऽङ् । ऋदृशोऽङि गुणः ॥ ७३ ॥

पुंसो रताधिक्ये जरामाह पुरुषस्येति । पुरुषस्य पुंसः मैथुनं व्यवायः सुरतम् । जरा स्थाविर्य्यं जीर्णताकरी भवति । तदभावे स्वास्थ्यमायुश्च वर्द्धते । शरीरञ्च पुष्णाति । तदुक्तं—

"मरणं बिन्दुपातेन जीवनं बिन्दुधारणम् ।
तस्मादति प्रयत्नेन क्रियते बिन्दुधारणम्" ॥

## न नीचोत्तमयोर्विवाहः ॥ ७५ ॥

---

बिन्दुरत्नौजः शक्तिः । नापि शैवदर्शनशारदातिलकोक्त-बिन्दुरिति । नवा वार्य्यादिकणा । कुत्रचिदादर्शे सूत्रयोरनयोरेकपदे पाठोऽस्ति । तादृशपाठेऽपि अर्थकाठिन्यं नास्ति । अन्यद् वैद्यकेऽनुसन्धेयम् । पुरुषपदनिरुक्तिः प्रागुक्ता । 'ब्रह्मचर्य्य-प्रतिष्ठायां वीर्य्यलाभः' इति योगसूत्रम् । ब्रह्मचर्य्यमष्टाङ्गमैथुन-परिहारः । तेन वीर्य्यवान् मेधावी शक्तिमान् आयुष्मांश्च भवति । 'सम्बन्धे सुरते युग्मे राशौ मिथुनमिष्यते' इति व्याडिः । 'मिथुनस्य कर्म्म मैथुनम्' । ततः 'प्राणभृज्जाति' इत्यनादेशः ॥ ७४ ॥

विवाहमूलत्वात्सङ्गमस्य ततोऽसमयोर्विवाह निषेधमाह नेति । नीचोत्तमयोर्हीनश्रेष्ठयोः कुलीनाकुलीनयोर्वा । विवाह उपयमः । स च शोभमानः हितकरश्च न भवतीति । तदुक्त' विज्ञैः 'विवादश्च विवाहश्च समयोरेव शोभते' । यथा पयसा पयोयोगः शोभनः । न तथा दुष्ट-वारिणा पयोयोगः । तद्वत् समयोर्विवाहो न विषमयोः । धर्म्मशास्त्रकारैश्चोक्तम् 'गृहस्थः सदृशीं भार्य्यां विन्देत' । सादृश्यमत्र वयो रूप-गुण-जाति धर्म्म शीलानामिति । यदुक्त' 'स्त्रीरत्नं दुष्कुलादपि' इति । सा यदि रत्नभूता स्यात्तदा दुष्कुलादपि ग्राह्येति, लोके तादृशी दुर्लभा । 'प्रधानं प्रमुखं प्रवेकानुत्तमोत्तमाः' इत्यमरः । उत्तम इति । तमु काङ्क्षायाम् उत्ताम्यति । उत्तम्यते वा । अचा घञा वा सिद्धम् । किञ्चातिशयेनोत्कृष्टः । उत्कृष्टार्थ-

**अगम्यागमनाद्दायुर्यशः पुण्यानि चोयन्ते ॥ ७६ ॥**

---

वृत्तेरुच्छब्दात्तमप्। द्रव्यप्रकर्षार्थत्वान्नामुः स्यात्। वह प्रापणे, विशिष्टं वहनम् विवाहः। स च घञा सिद्धः। वैशिष्ट्यन्तु वैधपतित्वपत्नीत्वज्ञापक शास्त्रीयनियमोक्तसंस्कारविशेषः। अन्यद्धर्म्मशास्त्रे ज्योतिःशास्त्रे चास्ति ॥ ७८ ॥

अनिष्टजनकत्वेन पुंसामगम्यागमने हानमाहागम्येति। अगम्या असङ्गमनीया मैथुनायोग्या धर्म्मशास्त्रे निषिद्धा दुहित्रादयः। तासां गमनाद्व्यवायकरणात्। आयुर्जीवनकालः। यशो लोकेषु सुख्यातिः, पुण्यं धर्मेण सुकृतिः। एतानि पुंसः चीयन्ते विनश्यन्ति।

"अनिग्रहाच्चेन्द्रियाणां नरः पतनमिच्छति"। इति स्मृतिः। एषां नाशादात्मनोऽपि नाशः सम्भाव्यते। ततोऽगम्यागमनं सर्व्वथा परिहर्त्तव्यम्। अगम्या यथा, यमस्मृतौ—

"या याऽगम्या नृणामेव निबोध कथयामि ते।
स्वस्त्री गम्या च सर्व्वेषामिति वेद-निरूपिता ॥
अगम्या च तदन्या या इति वेदविदो विदुः।
शूद्राणां विप्रपत्नी च विप्राणां शूद्रकामिनी ॥
अत्यगम्या च निन्द्या च लोके वेदे पतिव्रते।
गुरुपत्नीं राजपत्नीं सपत्नीं मातरं प्रसूम् ॥
सुतां पुत्त्रवधूं श्वश्रूं सगर्भां भगिनीं सतीम्।
सोदर-भ्रातृजायाञ्च भगिनीं भ्रातृकन्यकाम् ॥

**नास्त्यहङ्कार-समः शत्रुः ॥ ७७ ॥**

**संसदि शत्रुं न परिक्रोशेत् ॥ ७८ ॥**

---

शिष्याञ्च शिष्यपत्नीञ्च भागिनेनस्य कामिनीम् ।
भ्रातृ-पुत्त्रप्रियाञ्चैवा त्यगम्यामाह पद्मजः" ॥

इति ब्रह्मवैवर्त्ते प्रकृतिखण्डे । आयुः । इण् गतौ, एति । एतेर्णिच्चेत्यनेनोसिः । यशः । अशू व्याप्तौ, अश्नते व्याप्नोति । 'अशेर्देवने युट् च' इत्यसुन् । 'पुण्यन्तु सुकृते । सुन्दरे पावने धर्म्मे' इति विश्वः । 'पुञो यण् णुक् ह्रस्वश्च' इत्युणादितो यत् णुक् ह्रस्वश्च ॥ ७६ ॥

अभिमानस्य शत्रुतोऽपि भीषणत्वानिष्टकारित्वे आह नेति । अहङ्कारो गर्व्वोऽभिमानः । स च मत्तः श्रेष्ठो नास्तीति ज्ञानम् । यद्वा आत्मन उद्दीप्तिकरणम् । ते न समस्तुल्यः भुवने शत्रुररातिर्न विद्यते । अहङ्कारेण गर्व्विता लोका विवेकाभावाद् मत्त इवावैधाचरणं कृत्वा, स्वपरानिष्टं विधाय च काले विनश्यन्ति । यथा वेण-दुर्य्योधन-रावणाः । अन्यच्चोक्तं कौटिल्यैः

'न च व्याधिसमः शत्रुः न च दैवात् परं बलम् ।
न चापत्यसमः स्नेहो नाहङ्कारात् परो रिपुः' ॥

तस्य निवृत्तौ च परमनिर्वृतिः सांख्यभाष्ये उक्ता । तथा च 'सर्व्वाभिमान-निवर्त्तनतोऽस्य मुक्तिः' । शत्रुर्बहिःस्थितोऽनिष्टं साधयति । अभिमानश्चान्तःस्थः सन्निति । स्वाभिमानेन अन्ये ये अतिशेरते, ते पुनः शत्रवः सन्तः प्रतिहिंसन्तीति निश्चितम् ।

शत्रु-व्यसनं श्रवण-सुखम् ॥ ७६ ॥

इति चाणक्यसूत्रे नीतिदर्शनात्मके तृतीयोऽध्यायः ॥ ३ ॥

---

मन ज्ञाने, अभिमननम्। अभिपूर्व्वात् ततो घञ्। सुगममन्यत् ॥७७॥

परिषदि द्वेषात् शत्रोराक्रोशवर्द्धने निषेधमाह समितेति। संसदि सभायाम्। शत्रुं द्वेष्टारमरातिं न परिक्रोशेत् नापि तस्य क्रोधोद्रेकं कुर्य्यात्। तं प्रति रोषं जुगुप्सनञ्च न विदध्यात्। तत्र तादृशाचरणेऽतीव रुष्टः सन् च्छिद्रानुसन्धाता भवेदिति भावः। सभायां सौजन्य-शिष्टाचारप्रदर्शनेन कार्य्यसौकर्य्यं भवति। तादृश एव नियमः सभ्यानाम्। 'सभा-संसत्-समिति-परिषदः'। 'स्त्रियां सामाजिके गोष्ठ्यां द्युतमन्दिरयोः सभा' इति रभसः। सम्यक् सीदन्त्यस्यां विद्वांसो हितार्थम्। षद्लृ-विशरणादौ, सीदति। सम्पदादित्वात् क्विपा सिद्धम् ॥ ७८ ॥

शत्रूणां विपद्वार्त्ताश्रवणे श्रवणतृप्तिर्जायते तदाह शत्रिति। शत्रूणां वैरिणाम् अरातीनामिति। व्यसनं तेषां दुःखशोक-आपदः। तच्छ्रवणे आत्मनः श्रवणस्य श्रुतेः। सुखं प्रीतिकर-भावो जायते इति शेषः। तदात्वे असायासेनानिष्टकारिणः शत्रोः विपत् सञ्जायते। स तया अवसन्नो भवतीति वार्त्ता आपाततः शुभकरी। प्रवृत्ति-सरणि-समाश्रितानामेषा रीतिः यत् सुहृदां शुभवार्त्ता अमित्राणां च दुःखवार्त्ता प्रीतिकरीति। निरुक्ति कोषादिकं प्रागुक्तम् ॥ ७९ ॥

# चतुर्थोऽध्यायः ।

-०*०-

## अधनस्य बुद्धिर्न विद्यते ॥ १ ॥

---

नीति-नौकर्णधारस्य कौटिल्यस्य महामतेः ।
सूत्राणामाशुबोधाय टीका सारार्थबोधिनी ॥

इति दर्शनभूतचाणक्यसूत्रव्याख्यायां श्रीईश्वरचन्द्रशर्म्मशास्त्रि-
कृतायां सारार्थबोधिन्यां तृतीयोऽध्यायः ।

—०*०—

तृतीयेऽध्याये सामान्यविशेषप्रकारेण मुख्यविषयान् प्रसङ्गागतविषयांश्चोक्त्वा सुहृद्द्व्यवहारञ्चोपदिश्य सम्प्रति तुरीयाध्याये निर्धनस्यार्थचिन्ताव्याकुलचित्तस्य बुद्धिहानमाह अधनेति । अधनस्य दीनस्य निःस्वस्य चेति । बुद्धिर्धीर्मतिः । न विद्यते न प्रसरतीति । अर्थाभावचिन्ताव्याकुलतया नियतं बुद्धेर्मान्द्यात्तत्प्रतिभा नश्यत्येव । 'बुद्धिर्मनीषा धिषणा धीः प्रज्ञे'त्यमरः । पुष्कल-विभवे सति, परिधान-पान-भोजन-चिन्ताराहित्येन क्षीर-नवनीत-हविर्भोजनेन च बुद्धेः प्राखर्य्यं सम्पद्यते । तथा च "सद्य-ओजस्करं दुग्धम्" । 'तथा धी-स्मृतिमेधाग्निकाङ्क्षिणां प्रशस्यते घृतम्' ।

"नवनीतं हितं गव्यं वृष्यं वर्णबलाग्निकृत्" ।

इत्यादि वैद्यके । दीनस्य तु तन्नोपयुज्यते धनाभावात् । अन्यन्मृच्छकटिके दैन्यवर्णने । पदनिरुक्तिः प्रागुक्ता ॥ १ ॥

**हितमप्यधनस्य वाक्यं न शृणोति ॥ २ ॥**

**धनहीनः स्वभार्य्ययापि अवमन्यते ॥ ३ ॥**

---

दैन्यात्तस्य हितोपदेशश्रवणेऽपि लोकानां वैमुख्यमाह हितमिति । अधनस्य निःस्वस्य दीनस्येति । हितं वाक्यं सदुपदेशमुपकारजनकं यदेत्तल्लोको न शृणोति नाकर्णयति । यतो दैन्याल्लोकस्य सामान्यदृष्ट्या निर्द्धनः तुच्छास्पदो भवति । अतस्तद्वाक्यं प्रियमिष्टमपि न शृणोति श्रुत्वा च हेयबुद्ध्या नावधारयति । 'वाक्यन्तु कुत्सिते हीने वचनार्हे च वाच्यवत्' इति व्याडिः । 'तिङ्सुवन्तचयो वाक्यम्' इति शाब्दिकाः । तिङन्तानां चयो यथा 'पचति पश्य' 'पचति भवति' पाको भवतीत्यर्थः । सुवन्तानां चयः । 'प्रकृतिसिद्धमिदं हि महात्मनाम्' इत्यादि । महाभाष्यकारनये अत्र 'भवति' इत्यध्याहारस्यावश्यकत्वाभावात् स वाक्यम् । अन्ये तु 'वाक्यं स्याद्योग्यताकाङ्क्षासत्तियुक्त-पदोच्चय' इत्याहुः । हितमिति । धाञ् धारणपोषणयोः । दधातेः धीयते इति क्तप्रत्ययः । 'दधातेः हिः' इत्यनेन साधु । वच भाषणे, उच्यते । वचेः ण्यत् 'चजोः' इति शब्दसंज्ञायाम् कुत्वम् ॥ २ ॥

धनाभावात् स्वजनैरवमानमाह धनेति । धनेनार्थेन हीनो निर्द्धनः पुरुषः । स्वस्यात्मनः भार्य्यया पत्न्याप्यवमन्यते अवज्ञायते । पत्न्यादयः सर्व्वे सत्सु धनेषु सुखिनो भवन्ति । ते च धनिनं गृहपतिमाद्रियन्ते । धनाभावे सुखाभावादवमन्यन्ते च

पुष्पहीनं सहकारमपि नोपासते भ्रमराः ॥ ४ ॥

---

तदुक्तं कविभिः 'माता निन्दति, नाभिनन्दति सुतः कान्ता च नालिङ्गते' इति । धनाभावादित्यर्थः । फल-पुष्प-पत्रविहीनं महीरुहं यथा विहगा स्त्यजन्ति । यथा च शुष्कं सरः सारसाः परिहरन्ति तद्वद्धनहीन-मानवं कटुम्बाः विजहति । अन्यच्चोक्तम् कविभिः 'असौ जीयादेकः सकलगुणहीनोऽपि धनवान्, वहिर्द्वारे यस्य तृण-लवसमाः सन्ति गुणिनः' । हीनः । ओहाक् त्यागे, हीयते । ततः आदिकर्म्मणि क्तप्रत्ययः, कर्म्मणि वा । 'घु मा स्था' इत्यादिनेत्वम् । 'ओदितश्च' इति नत्वम् । डुभृञ् धारण-पोषणयोः, भ्रियते भूय्येते वा । भृ भरणादौ, इत्युभयोर्ण्वत् । यत्तु क्षीरस्वामिना 'संज्ञायां भृञ् ऋदृहलोर्ण्यता तत् साधितं तन्न, संज्ञायामर्थे 'समजनिषदः' इत्यादिना परत्वात् क्यपा भाव्यम् । संज्ञा पर्य्युदासस्तु पुंसि सावकाशो नतु स्त्रियाम् । यतः 'तदनुबन्धग्रहणे नातदनुबन्धकस्य' इति न्यायात् भृञ एव क्यप् स्यान्न तु डुभृञः ॥ ३ ॥

पूर्व्वसूत्रोदाहरणव्याजेन प्रयोजनसिद्ध्यभावे वस्तुपरिहारमाह पुष्पेति । पुष्पेन प्रसूनेन हीनं रहितम् । सहकारं सुगन्धिरसालवृक्षम् । यद्वा सामान्य च्युततरुम् । भ्रमराः मधुलिहः । नोपासते कुसुमाभावात् तत्तरुसमीपं नोपसर्पन्ति । विशुष्कं सरः सारसाः । दृष्टान्तभूतं दूर्व्वसूत्रस्येदं सूत्रमिति । 'पुष्पं विकाशे आर्त्तवे । धनदस्य विमाने च प्रसूने नेत्र-

## विद्या धनमधनानाम् ॥ ५ ॥

कृञ्यपि' इति हैमः । पुष्प विकशने, पुष्प्यति । पचाद्यचा सिद्धम् । 'सहकारोऽति सौरभः' इत्यमरः । द्वन्द्वं सहकारयति मेलयतीत्यचा सिद्धम् । हीनपदं प्राङ् निरुक्तम् । भ्रमराः । भ्रमु अनवस्थाने, भ्रमति । 'अर्त्तिकमि भ्रमि चमि' इत्याद्यौणादिकात् करण् ॥ ४ ॥

निर्धनस्य पुंसो विद्यया धनवत्त्वमाह विद्येति । अधनानां दरिद्राणां निःस्वानामिति । विद्या शास्त्राद्यध्ययनजनितं ज्ञानं पाण्डित्यमिति च सैव धनमर्थः । यतस्तया जगति धनं संगृह्यते यद्वा तपोधनवद् विद्यैव धनं ज्ञेयम् । 'धनन्तु गोधने वित्ते' इति विश्वः । धन धान्ये, धनति । तदचासिद्धम् । अन्यच्च सुभाषितसन्दर्भे 'विद्या नाम नरस्य रूपमधिकं प्रच्छन्नगुप्तं धनम्' इत्यादि । अपरञ्च मानवे द्वितीयाध्याये—

"श्रद्दधानः शुभां विद्यामाददीतावरादपि ।
अन्त्यादपि परं धर्म्मं स्त्रीरत्नं दुष्कुलादपि" ॥

यच्चोक्तं—

"वित्तं बन्धुर्वयश्चैव तपो विद्या यथोत्तरम् ।
पूजनीयानि सर्वेषां विद्या तेषां गरीयसी" ॥

अन्यच्च नीतौ—

"ये बालभावान्न पठन्ति विद्याम्,
ये यौवनस्था अधना अदाराः ।

## विद्या चौरैरपि न हार्य्या ॥ ६ ॥

ते शोचनीया इह जीवलोके,
मनुष्यरूपेण मृगाश्चरन्ति" ॥

विद् ज्ञाने, वेत्तीत्यतः क्यप् ॥ ५ ॥

विद्याया अनपहरणीयत्वमाह विद्येति। चौरैः तस्करैर्दस्युभिश्च। अपि निश्चितम्। न हार्य्या नैवापहरणीया। चोरः सर्व्वं धनमपहर्त्तुं शक्ताः। विद्याया आन्तरद्रव्यत्वात्ते अपहर्त्तुं न शक्नुवन्ति। तदुक्तं गारुड़े—

"गृहे चाभ्यन्तरे द्रव्यं लग्नं चैव तु दृश्यते।
अशेषं हरणीयञ्च विद्या न ह्रियते परैः ॥
अन्त्यजा अपि यां प्राप्य क्रीड़न्ति ग्रह-राक्षसैः।
सा विद्या केन मीयेत यस्याः कोऽन्यः समोऽपि न ॥
ज्वरेण कुञ्जरं हन्ति सर्पेण तुरङ्गमम्।
मक्षिकापदमात्रस्य विषस्य विषमा गतिः ॥
एवं विधं विधिं वत्स! विद्यामन्त्रप्रभावतः।
जीर्य्यते भक्षितं पुंसिः तस्माद्विद्या परात्परा" ॥

सूरिभिश्चोक्तम्—

"ज्ञातिभिर्वण्टनेनैव चौरेणापि न नीयते।
दानेनैव क्षयं याति विद्यारत्नं महाधनम्" ॥

चुर स्तेये, चोरणम्। अप्रत्ययात्। संज्ञापूर्व्वकत्वान्न गुणः। चुरा शीलमस्य छत्रादिभ्यो णः, अन्ये तु पचाद्यचा तत्-

विद्यया ख्यातिः ॥ ७ ॥

यशः शरीरं न विनश्यति ॥ ८ ॥

---

सिद्धमाहुः । 'नहार्य्या' इत्यत्र 'न ग्राह्येति' पाठे ग्रहणायोग्येति तदर्थः । प्रागुक्तमन्यत् ॥ ६ ॥

मानवस्य सुख्यातेर्निदानमाह विद्ययेति । विद्यया ज्ञानविशेषेण सुशिक्षया वा । ख्यातिः कीर्त्तिर्भवतीत्यर्थः । विदुषा सदाचरणाध्यापनपरोपकाराणामनुष्ठानेन कीर्त्तिरवाप्यते । तथा सुखी यशस्वी च लोके । तदुक्तं गारुड़े—

"विद्या विवेकबोधेन शुभाशुभविचारिणाम् ।
विद्यते सर्व्वकामाप्तिस्तस्माद्विद्या परा मता ॥
विद्या विचारतत्त्वज्ञाः राज्ञः सन्मार्गगामिनः ।
भुञ्जतेऽपि हि भोगानि गच्छन्ति परमां गतिम् ॥
नहि विद्या कुलं जाति रूपं पौरुषमात्रताम् ।
वशते सर्व्वलोकानां पठिता उपकारिता" ॥

'भोगानि' इत्यत्र 'भोग्यानि' क्वचित् पाठान्तरम् । 'प्रथा ख्यातौ' इत्यमरः । वेदान्ते तु ख्यातिशब्दोऽन्यार्थबोधकः । सांख्यनये ज्ञानार्थकः ख्यातिशब्दः । ख्या प्रकथने, ख्यानम् । चक्षिङादेशो वा । ततः क्तिन् । 'विद्यया ख्यापिता ख्याति'-रिति भिन्नपाठे विद्यया ख्यातिः प्रथा सुप्रसृता भवतीत्यर्थः ॥७॥

कीर्त्तिमण्डितदेहस्याविनश्वरत्वमाह यश इति । यशः कीर्त्तिः समज्ञेति यावत् । तेन युक्तं पूर्णं वा शरीरं देहः । यदा

## यः परार्थमुपसर्पति ससत्पुरुषः ॥ ८ ॥

---

तदेव शरीरम् न विनश्यति नैव लोकान्तरं गच्छति। यशोयुक्त-शरीरमिति शाकपार्थिवादिः। यशस्वी मृत्वापि न म्रियते। तदुक्तम् 'कीर्त्तिर्यस्य स जीवति'। अन्यच्च—

"जयन्ति ते सुकृतिनो रससिद्धाः कवीश्वराः।
नास्ति येषां यशः काये जरा मरणजं भयम्" ॥

अपरञ्च—

"येषां वैदुष्यविभवौ धर्म्मश्च जगती तले।
ते नरा निधनं प्राप्य विद्यन्ते नर-मानसे" ॥

यशः। अशु व्याप्तौ, अश्नुते, व्याप्नोति। 'अशेर्देवने युट् च' इत्यसुन्। शरीरम्। शॄ हिंसायां शृणाति। 'कॄ शॄ पॄ कटि' इत्यादिना ईरण्॥ ८॥

सत्पुरुषस्य कार्य्यं वर्ण्यते इति। यो जनः परार्थं परेषामुपकारार्थमुपसर्पति। अग्रे सरति। विपत् समीपं वा गच्छति। स नरः सत् महान् पुरुषो महाजन इति च ख्यातः। स्वार्थे प्रवर्त्तनं जीवानां स्वभावः। जगति दुर्लभञ्च परार्थे समुपसर्पणम्। अतः परार्थे प्रवृत्तस्य जनस्य माहात्म्यं ख्यापितमत्र। तदुक्तं पूर्व्वसूरिभिः—

"ते ते सत्पुरुषाः परार्थघटका स्वार्थस्य बाधे न ये,
मध्यस्थाः परकीयकार्य्यकुशलाः स्वार्थाविवाधेन ये।
तेऽमी मानुषराक्षसाः परहितं यैर्हन्यते स्वार्थतः,

## इन्द्रियाणां प्रशमनकारणं शास्त्रम् ॥ १० ॥

ये तु घ्नन्ति निरर्थकं परहितं ते के न जानीमहे' ॥
यथा च मलयजो दाहे च्छेदने निघर्षने चान्येभ्यः सुगन्धिं वितरति । तद्वत् सत्पुरुषा अपि स्वक्लेशमविगणय्य परोपकारं साधयन्ति । सुगममन्यत् ॥ ८ ॥

शास्त्रस्येन्द्रिय-दुष्प्रवृत्ति-शान्तिकरणे शक्तिमाहेन्द्रियाणामिति । इन्द्रियाणां प्रागुक्तानां चक्षुरादीनाम् । प्रशमनकारणम् । तेषां विषय-भोगेऽतिलाम्पत्य' यत्तस्य निवारकम् । शास्त्रं सततं हितानुशासनम् । यद्वा शिष्टानुशासनम् । ईश्वरनिदेशश्च । 'निदेशग्रन्थयोः शास्त्र'मित्यमरः । तदुक्तं 'शास्त्रन्तु हितशासनात्' । अन्यच्चोक्तं काठके—

"यस्तु विज्ञानवान् भवति युक्तेन मनसा सदा ।
तस्येन्द्रियाणि वश्यानि सदश्वा इव सारथेः ॥

गीतायाञ्च—

"इन्द्रियाणान्तु चरतां यन्मनोऽनुविधीयते ।
तदस्य हरति प्रज्ञां वायुर्नावमिवाम्भसि" ॥

नीति-वैराग्योपदेशेन शास्त्रमिन्द्रियाणां दुष्प्रवृत्ति-निवारकम् । यथाङ्कुशो वारणनिवारकः । यथा च—

"प्रवृत्तिर्वा निवित्तिर्वा नित्येन कृतके नवा ।
पुंसां येनोपदिश्येत तच्छास्त्रमभिधीयते" ॥

इति शास्त्रस्य विशिष्टलक्षणम् । अन्यत् पुष्कलं राजनीतिशतके

## अकार्य्ये प्रवृत्तौ शास्त्राङ्कुशं निवारयति ॥११॥

वाशिष्ठे चास्ति । शास्त्रम् । शास् अनुशिष्टौ, शासनम् । शिष्यते अनेनेति वा । ततः 'सर्व्वधातुभ्यष्ट्रन्' । शमु उपशमे, प्रशमनम् । करणे ल्युट ॥ १० ॥

अवैधकार्य्यप्रवृत्तस्य विगानन्तन्निवृत्तिञ्च शास्त्रोपायेनाह एति । पुंसः शास्त्रविरुद्धे गर्हिते कर्म्मणि प्रवृत्तौ अभिलाषे सति । तस्य निवारकं निवर्त्तकम् । शास्त्राङ्कुशम् तदर्थेऽङ्कुशवच्छास्त्रम् । यथा मत्तवारणनिवृत्तौ अङ्कुशस्तद्वत् प्रमादात् स्वेच्छया वा गर्हितकर्म्मणि प्रवृत्तस्य मानवस्य शास्त्रमेव तन्निवर्त्तकम् । तच्छास्त्रवाक्यं त्रिविधं शास्त्रत्वेन प्रसिद्धम् । प्रभुसम्मितम् । मित्रसम्मितम् । कान्तासम्मितञ्च । 'शास्त्रमृग्वेदादि' इति शास्त्रयोनित्वाधिकरणे श्रीभगवच्छाङ्करभाष्यम् । तथा च वेदाश्चत्वारः । शतपथब्राह्मणादयः । छान्दोग्याद्युपनिषदः । शिक्षाद्यङ्गानि षट् । श्रौतधर्म्मगृह्यसूत्राणि । महर्षिमन्वादिप्रणीतधर्म्मशास्त्राणि । ब्राह्माद्यष्टादशपुराणानि । ज्योतिः शास्त्रम् । दर्शनानि वेदान्तादीनि षट् । पाणिन्यादिव्याकरणानि । महाभारतम् । रामायणम् । नीतिशास्त्रम् । मयमतादिशिल्पशास्त्रम् । संगीतशास्त्रम् । नर्त्तननिर्णयादि नृत्यशास्त्रम् । समराङ्गनसूत्रधारादि वस्तुविज्ञानशास्त्रम् । महर्षिवशिष्ठादिविरचितं धनुर्वेदशास्त्रम् । रत्नपरीक्षादि रत्नशास्त्रम् । भासादिप्रणीतकाव्यशास्त्रम् । पराशरादि प्रणीत मूर्त्तिनिर्म्माण-

## नीचस्य विद्या नोपेतव्या ॥ १२ ॥

शास्त्रम्। वात्स्यायनादि प्रणीत कामशास्त्रम्। पालकाप्यादेः हस्त्यायुर्व्वेदशास्त्रम्। शालिहोत्रादेः अश्वशास्त्रम्। गणितशास्त्रं तच्च कल्पसूत्र जौतिषान्तर्गतम्। अन्यत् छान्दोग्य-प्रस्थानभेद-कामसूत्रव्याख्यानेषु पुष्कलमस्ति, दिङ्मात्रमत्र प्रदर्शितम्। 'अङ्कुशोऽस्त्री सृणिः स्त्रियाम्' इत्यमरः। अकि लक्षणे, अङ्क्यते अनेन। 'सानसिवर्णसि' इत्यादिना औणादिकात् साधुः ॥११॥

दुर्म्मतित्वेन क्रौर्य्याद्वा हीनजनस्य विद्योपनयने निषेधमाह नीचस्येति। नीचस्य हीनस्य पामरस्येति। विद्या शास्त्रपाठ-जनितं ज्ञानम्। यद्वा छान्दोग्योक्ता शैवतन्त्रोक्ता चतुःषष्टि-कलारूपा। सा नोपेतव्या नैव शिक्षणीयाभ्यसनीयेति। उक्तञ्च शास्त्रकृद्भिः—

'धर्म्मार्थौ यत्र न स्यातां शुश्रूषा वापि तद्विधा।
तत्र विद्या न वक्तव्या शुभं वीजमिवोषरे" ॥

गीतायाञ्च—

"इदन्ते नातपस्काय नाभक्ताय कदाचन।
न चाशुश्रूषवे वाच्यं न च मां योऽभ्यसूयति" ॥

एतत्तु धर्म-ज्ञानविषयमिति केचित्। तथैव काठके—

"नाशान्तमानसो वापि प्रज्ञानेनैनमाप्नुयात्"।

इदमपि तत्त्वज्ञानविषयकमित्यन्ये प्राहुः। यद्यपि नीचोऽपि

## न म्लेच्छभाषणं शिक्षेत ॥ १३ ॥

ज्ञानार्थं श्रद्धालुर्जिज्ञासुर्वा भवेत्तदा नीति-शिल्पादि विषये उपदेष्टव्य: स एवेति नीतिविदां समय: । यतो नीतौ त्रिवर्गस्यापेक्षास्ति न मोक्ष-मार्गस्य । विष्णुनाप्युक्तं—

"सर्व्वस्य लोचनं शास्त्रं यस्य नास्त्यन्ध एव स:" इति ।

"विवर्ण: पामरो नीच: प्राकृतश्च पृथक् जन:" ।

इत्यमर: । उपेतव्येति । उपपूर्व्वादितेर्विद्याग्रहणार्थ: । नीचस्येति । नीचेनेति तृतीया युक्ता । यद्वा कर्त्तरि षष्ठीति केचित् ॥ १२ ॥

पुलिन्दादिभाषणस्य शिक्षायां ज्ञाननैपुण्य-बुद्धिनैर्म्मल्याभावात् तन्निषेधमाह नेति । म्लेच्छानां किरात-शबर-पुलिन्दानां भाषणं भाषा कथनञ्चेति । तन्न शिक्षेत नापि ग्रन्थाद्यक्तौ वा अभ्यासं कुर्य्यात् । सा च भाषा त्रिविधा । कथ्या लेख्या देश्या च । तासु द्वे प्रसिद्धे । देश्योक्ता भोजराजेन । तथा च—

"देशे देशे नरेन्द्राणां जनानाञ्च स्वके स्वके ।

भङ्गा विभिद्यते यस्मात्तस्माद्देश्यं प्रकीर्त्तितम्" ॥

अन्यच्चोक्तमृषिणा—

"न शातयेदिष्टकानि फलानि तु फलेन वै ।

न म्लेच्छभाषां शिक्षेत नाकर्षेच्च कदास(श)नम्" ॥

एवमेव महाभाष्ये 'न म्लेच्छितवै नापभाषितवै, म्लेच्छो ह वा एष यदपशब्द:' । 'म्लेच्छा माभूम इत्यध्येयं व्याकरम्' । न म्लेच्छदेशे' इति विष्णुसूत्रम् । तत् स्वरूपन्तत्रैवोक्तं यथा—

## म्लेच्छानामपि सुवृत्तं ग्राह्यम् ॥ १४ ॥

"चातुर्वर्ण्य-व्यवस्थानं यस्मिन् देशे न विद्यते।
स म्लेच्छदेशो विज्ञेयो आर्य्यावर्त्तस्ततः परम्' ॥

भास्कराचार्य्यास्त्वाहुः—

'वर्णव्यवस्थितिरिहैव कुमारिकाख्ये
शेषेसु चान्त्यजजना निवसन्ति सर्व्वे'।

अन्यत्रोक्तं—

"गोमांसखादको यस्तु विरुद्धं बहु भाषते।
सर्व्वाचारपरिभ्रष्टो म्लेच्छ इत्यभिधीयते" ॥

केचित्तु विद्वांसः प्रोचुः म्लेच्छादिदेशविमर्शो धर्म्मादि विषये न तु 'नीति-वार्त्तादौ। वाणिज्य-विद्याध्ययनार्थार्ज्जनेषु न देश-विचारः। तथा च नीचादप्युत्तमां विद्या'मिति। अपरञ्चोक्तं मनुना—'अब्राह्मणा दध्ययनमापत्काले विधीयते' इति च। सूतसंहितायाञ्च—

"ब्राह्मण्यां वैश्यतो जातः क्षत्ता भवति नामतः।
अस्यामनेन चौर्य्येण म्लेच्छो विप्राः प्रजायते" ॥

इति। 'शवरो म्लेच्छभेदे च'। 'किरातो म्लेच्छभेदे स्यात्' इति मेदिनी। 'पुलिन्दः कथ्यते म्लेच्छे' इति तारपालः। 'भेदाः किरात-शवराः पुलिन्दा म्लेच्छजातय' इत्यमरश्च। एतेषां मते एतएव म्लेच्छदेशत्वेन ख्याताः। म्लेच्छ अव्यक्ते शब्दे, म्लेच्छति। अच्प्रत्ययेन सिद्धः ॥ १३ ॥

हीनजनतोऽपि सुवृत्तग्रहणमाह म्लेच्छानामिति । म्लेच्छानां खसादिविषयजातानां लोकानाम् । यत् सुवृत्तं सुशिक्षा सौशील्यं वाणिज्यमिति यावत् । तद्ग्राह्यं ग्रहणीयं शिक्षणीयम् । यदुक्तम्—

'विषादप्यमृतं ग्राह्यममेध्यादपि काञ्चनम्' । प्रागुक्तमन्यत् । गुणाः सुचरितानि सर्व्वतो ग्राह्याणि । तथाचैतस्य लघुचाणक्ये 'सिंहादेकं वकादेकं षट् शुन स्त्रीणि गर्द्दभात्' । गुणैर्नीचोऽपि श्रेष्ठत्वं याति यथा विदुरादिः । अन्यच्च । 'महताचरिताभ्यासे महत्त्वं याति निश्चितम्' । अतो महतां सुचरितानुकरणे न दोषः । सारग्रहणे नोच्चावचविचारः । तथा च कापिलं सूत्रं 'सर्व्वतः सारादानं षट्पदवत्' । पुराणे च 'सर्व्वतः सारमादद्यात् पुष्पेभ्य इव षट्पदः' । केचित्तु वाणिज्यविद्याशिक्षार्थं प्रत्यन्तदेशगमनं युक्तम् । ततः प्रतिगमनात्परं प्रायश्चित्तमनुष्ठेयमित्याहुः । तथा च श्रुतिः 'नावेव सिन्धुम्' । 'समुद्रसंयानम्' इति बौधायनश्च । अत्र नावा द्वीपान्तरगमनमिति तत् सूत्रव्याख्यानम् । 'आघूर्णितो वा वातेन स्थितः पोते महार्णवे' इति मार्कण्डेयपुराणे । वराहपुराणे च—

"समुद्रयाने रत्नानि महामूल्यानि साधुभिः ।
रत्नपारीक्षकैः सार्द्धं आनयिष्ये बहूणि च ॥
शूकेन सह सम्प्राप्तो महान्तं लवणार्णवम् ।
पोतारूढाः ततः सर्व्वे पोतवाहैरुपासिताः ॥
अपारे दुस्तरेऽगाधे यान्ति वेगेन नित्यशः' ।

**शत्रोरपि सद्गुणो ग्राह्यः ॥ १५ ॥**

**विषादप्यमृतं ग्राह्यम् ॥ १६ ॥**

---

असत्कुलसमुद्रमात्रसंयाने प्रत्यवायाधिक्यं तदाह याज्ञवल्क्यस्मृतिव्याख्यानेऽऽपरार्कः प्रागुक्तमन्यत् ॥ १४ ॥

गुणग्रहणे शत्रु-मित्र-प्रतीति-परिहारमाह शत्रोरपीति। शत्रोरातेः द्वेष्टुरिति। अपि निश्चयार्थ। सन् श्रेष्ठो गौरवकरः प्रशंसनीयो गुणः। स च वैदुष्य-सौशील्यादिः। ग्राह्यः उपादेयो ग्रहणीयः। उक्तञ्च महाभारते 'शत्रोरपि गुणा वाच्या-दोषा वाच्या गुरोरपि'। नापि शत्रोर्दोषो ग्राह्यो गुणस्त्याज्यः। एवं मित्रस्यापि दोषो ग्राह्यः परिहाराय विशुद्धये वा। यतः

'गुणाः सर्व्वत्र पूज्यन्ते पितृवंशो निरर्थकः'।

इति वृद्धवाक्यमस्ति। सद्गुण इत्युक्तेरसद्गुणः कृत्रिमगुणोऽपि हेयः। कविसमयश्च 'गुणा पूजा स्थानं गुणिषु न च लिङ्ग' न च वयः'। 'मौर्व्यां प्रकाशिते सत्त्वशुक्लसन्ध्यादिके गुणः' इत्यमरः। गुण आमन्त्रणे, गुण्यते। ततो घञ्। १५ ॥

पीयूषस्य महार्घत्वात्तस्य गरलादपि ग्रहणौचित्यमाह विषादिति। विषाद् गरलात् कालकूटादिति। अमृतं सुधा पीयूषम्। महार्घद्रव्यं वेति। ग्राह्यमासादनीयम्। यच्च महार्घवस्तु तत् विषाद् पुरीषाद्वा संग्राह्यम्। ग्राह्यत्वं हितकरोपादेयत्वेनेति। अमृतपदेनामृततुल्यमपि बोध्यम्। नतु भ्रमादन्यबुद्ध्या अन्यदुपादेयम्। तदुक्तं महर्षिणा 'विषादप्यमृतं ग्राह्यममे-

## गुणे न मत्सरः कर्त्तव्यः ॥ १७

ध्यादपि काञ्चनम्'। अन्यत्र भारते यदुक्तं 'यत्रास्ते विषसंसर्गोऽमृतन्तदपि मृत्यवे' इति तत्शत्रुकर्त्तृकप्रियाचरणविषये धर्म्मविषये वा मन्तव्यम्। स च शाठ्य-पापादिमिश्रितो धर्म्मोऽधर्म्माय भवतीति। 'पीयूषममृतं सुधा इत्यमरः। विषादिति। 'गरले विषमम्भसि च स्त्रियामतिविषायाम्' इत्युभयविवेके। विषॢ-व्याप्तौ, वेवेष्टि कायम्। विष प्रयोगे वा, ततः 'इगुपध' इत्यादिना कः। 'अमृतं यज्ञशेषे स्यात् पीयूषे सलिले घृते। अयाचिते च मोक्षे ना' इति मेदिनी। न मृ.ं मरणमत्रेत्यमृतम् ॥ १६ ॥

गुणविषये मात्सर्य्यनिषेधमाह गुण इति। गुणे बुद्धेः प्राखर्य्यं विद्यादौ। यद्वा पुंसो विषयोत्कर्षे। मत्सरः मात्सर्य्योऽपरस्योत्कर्षे द्वेषश्च। मत्सर इति भावप्रधाननिर्देशः, तेन मत्सरतेत्यर्थः। यद्वा तत्कार्य्यं मात्सर्य्यम्। न कर्त्तव्यो नापि विधेयः। तदात्वे शिक्षाहानिः समाजानिष्टं स्व मानसमालिन्यं वैरञ्च वर्द्धते। गुण दर्शने हर्षो विधेयः। यतः सर्व्वत्र गुणोऽर्हणीय हितकरश्च। उक्तञ्च कविभिः 'गुणैरुत्तमतां याति'। 'पदं हि सर्व्वत्र गुणैर्निधीयते' इति च। 'मत्सरोऽन्यशुभद्वेषे तद्वत् कृपणयोस्त्रिषु' इत्यमरः। मदी हर्षे, माद्यति परकृच्छ्रे। ततः 'कृ-भू मदिभ्यः कित्' इति रसः।

"गुणो मौर्व्यामप्रधाने रूपादौ सूद इन्द्रिये।

**अवस्थया पुरुषः सम्मान्यते ॥ १८ ॥**

**स्थान-एव नराः पूज्यन्ते ॥ १९ ॥**

---

त्यागशौर्य्यादि सत्त्वादि सन्ध्याद्यावृत्ति रज्जुषु" ॥

इति मेदिनी। गुण आमन्त्रणे, गुण्यते इति। ततो घञ् ॥१७॥

अवस्थया पुंसां गौरवमाह अवस्थयेति। अवस्था दशा। कालकृतो धर्म्मो यौवनादिर्विशेषोऽवस्था चेति। यद्वा तया चावस्थया धनविद्यामानपरिजनस्थितिदशया। पुरुषः पुमान् नर इति। 'पुरुषः त्वात्मनि नरे पुन्नागे च' इति कोषः। सम्मान्यते, पूज्यते गरीयान् भवति। उक्तञ्च सूरिभिः 'अवस्था पूज्यते राजन् न शरीरं शरीरिणाम्'। यथा च छत्र-चामर-सचिव-वारणाश्व सामन्त-दुर्ग-पोत सेनादिभिः, राजेति सम्मान्यते लोके। एषामभावे वाक्यमात्रतो राजा अवमन्यते। तदुक्तं—

"हस्ति-घोटक-सामन्त-नौका-दिग्देश साधनैः।
राजा भवति लोकेऽस्मिन् न पुनर्वाक्यमात्रतः" ॥

इति। 'विशेषः कालिकोऽवस्था' इत्यमरः। अवपूर्व्वात्तिष्ठते रङ्। 'व्यवस्थायामिति' ज्ञापकात्। पुर अग्रगमने, पुरति। 'पुरः कुसन्' इत्यनेन न सिद्धम्। अतः सततं सदवस्थाकरणेन भाव्यम् ॥ १८ ॥

योग्य स्थानावस्थितेर्गौरवकरत्वमाह स्थान इति। स्थाने स्वयोग्यायत्तभुमौ। यस्य यदायत्तं योग्यं हितकरं स्थानं तस्य तदेव युक्तम्, यथा शैलगह्वरं सिंहस्य। नराणान्तु निर्म्मलवारि-

आर्य्य-वृत्तमनुतिष्ठेत् ॥ २०

वायुपूर्णनिरत्ययस्थानम् । नरा मानवाः पूज्यन्ते सम्मान्यन्ते लोकैरिति शेषः । नतु परायत्ते अयोग्ये च स्थाने केचन श्रेष्ठा भवन्ति । स्थानगौरवाभावात् । तदुक्तं कविना—

स्थानस्थितस्य पद्मस्य सहायौ वारिभास्करौ ।
स्थानच्युतस्य तस्यैव क्लेद-शोषकरावुभौ" ॥

अन्यच्च—

"स्थानभ्रष्टा न शोभन्ते दन्ताः केशा नखा नराः" ।

यत्तु—'स्थानमुत्सृज्य गच्छन्ति सिंहाः सत्पुरुषा द्विजाः' । इति तत् पूर्व्वस्थानादुत्कृष्टस्थानलाभविषये । अपरञ्च सामान्य-नीतौ—

"स्थानं प्रधानं न बलं प्रधानम्
स्थानस्थितः कापुरुषोऽपि सिंहः" ।

इति सहकारि-प्राधान्यादाह । 'स्थानं सादृश्येऽवकाशे स्थितौ वृद्धिक्षयेतरे' इति मेदिनी । स्थीयते अत्रेति स्थानम् । अधि-करणे भावे वा ल्युट् । नरः । नृ नये । नरति, नृणाति वा अच प्रत्ययेन सिद्धम् ॥ १८ ॥

महतामनुकरणे स्वीयमहत्त्ववृद्धिः स्यात्तदाह आर्य्येति । आर्य्याः आर्य्यावर्त्तवासिनः शिष्टाः । विद्या-विनय-नीति-धर्म्म-ज्ञान-सम्पन्नाः । तेषां वृत्तमाचरणं चरितम् । तदनुतिष्ठेत् आश्र-येत् समाचरेदिति । तदुक्तं वसिष्ठैः—

# न कदापि मर्य्यादामतिक्रमेत् ॥ २१ ॥

---

"कर्त्तव्यमाचरन् काममकर्त्तव्यमनाचरन् ।
तिष्ठति प्रकृताचारे यः आर्य्य इति स्मृतः" ॥

ते चार्य्या यत्रासमन्ताद्वर्त्तन्ते स आर्य्यावर्त्ताभिधो देशः । तदुक्तं मानवे—"आसमुद्रात्तु वै पूर्व्वा दासमुद्राच्च पश्चिमात् ।
तयोरेवान्तरं गिर्य्योरार्य्यावर्त्तं विदुर्बुधाः" ॥

तत्रैव भारतं वर्षम् । तथा च—
"वर्षस्थानं विदुः प्राज्ञाः इमं लोकञ्च भारतम्' ।

अन्यच्च—मैत्रेयं प्रति पराशरः—
"उत्तरं यत् समुद्रस्य हिमाद्रेश्चैव दक्षिणम् ।
वर्षं तद्भारतं नाम भारती यत्र सन्ततिः" ॥

महाकाव्ये शिशुपालवधे च—
"एषदूरगुरुभारभारतं वर्षमद्य ममवर्त्तते वशे" ।

इति । 'आर्य्य-सभ्य-सज्जन-साधवः' इत्यमरः । ऋ गतौ, अर्य्यते । अर्त्तुं योग्यो वा । 'ऋहलोर्ण्यत्' इत्यनेन सिद्धम् । 'वृत्तं वृत्तौ दृढ़े मृते । चरित्रे वर्त्तुले' इति हैमः । वृतु वर्त्तने, वर्त्तते । ततः, क्तप्रत्ययेन सिद्धम् ॥ २० ॥

कार्य्यमर्य्यादालङ्घने नीतिविरोधात्तन्निषेधमाह नेति । मर्य्यादां सदाचरणसीमां नीतिनियममिति । कदापि कस्मिन्कालेऽपि । नातिक्रमेन्नैव लङ्घयेत् । वारमेकं तल्लङ्घने तु असद्विषये सत्यहानिः साहसाधिक्यञ्च स्यात् । पुनस्तत्-

नास्त्यर्घः पुरुष-रत्नस्य ॥ २२ ॥

न स्त्रीरत्नसमं रत्नम् ॥ २३ ॥

---

करणमनायाससाध्यम्भवेत् । क्वापि च मृषाकथन प्रतिज्ञाभङ्ग-दोषोऽपि आपतति । इतश्च न्याय्यपथ-स्थितिर्मर्य्यादेति । 'मर्य्यादा धारणा स्थितिः' इत्यमरः । मर्य्या इति सीमार्थे अव्ययम् । तत्र दीयते । प्राग्वदङ् । अति पूर्व्वात् कर्मेर्विधिलिङ् ॥ २१ ॥

श्रेष्ठपुरुषस्य मूल्याभावमाह नेति । पुरुषरत्नस्य पुरुषेषु श्रेष्ठस्य उत्तमपुरुषस्येति यावत् । अर्घोमूल्यं नास्ति न विद्यते । अन्येषां रत्नानां रत्नवणिग्भिर्मूल्यं निरूप्यते पुरुषरत्नस्य तु केनापि मूल्यं निरूपयितुं न शक्यते वैदुष्यादिगुणस्यापरिमितत्वात् । 'मूल्ये पूजाविधावर्घः' इत्यमरः । अर्ह मह पूजायाम्, अर्ह्यते अनेन । 'हलश्चेति' घञ् । ततो न्यङ्क्वादित्वात् सिद्धम् । अर्घिर्धात्वन्तरम् । तेन वा सिद्धम् । 'रत्नं सजाति श्रेष्ठेऽपि मणावपि नपुंसकम्' इति मेदिनी । रमु क्रीड़ायाम्, रम्यते । ततो ण्यन्तः । अन्तर्भावितण्यर्थो वा । यद्वा रमन्तेऽस्मिन् । 'रमेस्तच' इत्यौणादिकसूत्रान्नः । नेड् वशीत्यादिना नेट् । 'णेरनिटि इत्यादिना सिद्धम् ॥ २२ ॥

सर्व्वरत्नतः स्त्रीरत्नस्य श्रैष्ठ्यमाह नेति । स्त्रीरत्नम् । स्त्री, वरवर्णिनी । सैव रत्नाधिका । तदमूल्यम् । मूल्येन तादृश्याः वरवर्णिन्या दुर्लभत्वात् क्रय्यत्वाभावः । एतत्तुल्यं रत्नं भुवि

## दुर्लभं रत्नम् ॥ २४ ॥

नास्ति। तथाच मार्कण्डेयपुराणे 'स्त्रीरत्नमति चार्व्वङ्गीद्योतयन्ती दिशस्त्विषा'। स्त्रीरत्नं स्त्रीषु श्रेष्ठम्।—'जातौ यदुत्कृष्टं तद्रत्नम्'। 'विष्णुपुराणे तट्टीकायाञ्च चतुर्द्दशरत्नानि यथा—

'चक्रं रथो मणिः खड्गश्चर्म्म रत्नञ्च पञ्चमम्।
केतुर्निधिश्च सप्तैवमप्राणानि प्रचक्षते॥
भार्य्या पुरोहितश्चैव सेनानी रथकृच्च यः।
पत्त्यश्वौ कलभश्चेति प्राणिनः सप्तकीर्त्तिताः॥
चतुर्द्दशैतानि रत्नानि सर्व्वेषां चक्रवर्त्तिनाम्'।

अन्यच्चोक्तं सूरिभिः—

"सर्व्वरत्नस्य तत्त्वस्य वेत्ता च भुवि विद्यते।
स्त्रीरत्नस्य च तत्त्वज्ञा न सन्ति जगतीतले"॥

प्रागुक्तमन्यत्॥ २३॥

मणेः सततमसौलभ्यमाह दुरिति। रत्नं मणि प्रभृति। तच्च स्वजाति-श्रेष्ठम्। तद्दुर्लभं भुवि। बहुक्लेशेन केनचित् क्वचिल्लभ्यते। अपरञ्च रत्नवृत्तं भोजराजीय-युक्तिकल्पतरौ गरुड़पुराणे च वर्णितमस्ति। तथाचोक्तम्—

"परीक्षा परिशुद्धानां रत्नानां पृथिवीभुजा।
धारणं संग्रहो वापि कार्य्यः श्रियमभीप्सता॥
शास्त्रज्ञाः कुशलाश्चापि रत्नभाजः परीक्षकाः।
त एव मूल्यमात्राया वेत्तारः परिकीर्त्तिताः"॥

## अयशो भयं भयेषु २५ ॥

---

'रत्नं स्वजाति श्रेष्ठे स्यात् मणावपि नपुंसकम्' इति हैम-कोषे। रत्नरक्षणं धारणञ्च प्रशस्तं कीर्त्तितं राजवल्लभे। तथाच—

"धन्यं यशस्यमायुष्यं श्रीमद्‌व्यसनसूदनम्।
हर्षणं काम्यमौजस्यं रत्नाभरणधारणम्" ॥

तानि च सूर्य्य-चन्द्रकान्त-पद्मराग-नीलकान्तादीनि विविधानि। प्रागुक्तमन्यत् ॥ २४ ॥

सुधियां मानवानां लोकेषु श्रेष्ठ-भयमाह अयश इति। सर्व्वेषु भयेषु साध्वसेषु। यद्वा तज्जनकेषु विषयेषु। पुंसामयशोऽपकीर्त्तिः कुत्सायां भयं भीतिरेव महज्ज्ञेयम्। तथा च भारते—

"सम्भावितस्यापकीर्त्तिर्मरणादतिरिच्यते"।

अन्यच्च तत्रैव—

"अकीर्त्तिञ्चापि भूतानि कथयिष्यन्ति तेऽव्ययाम्"।

अपरञ्च—

"अपमानं तथा लज्जा बन्धनं भयमेव च।
रोग-शोकस्मृतिर्भङ्गो मृत्युश्चाष्टविधः स्मृतः ॥"

कालेऽपमानविशेषो मृत्युदेश्यो भवति। कविसमयश्च 'परीवादस्तथ्यो हरति हि महिमानं जनरवः' इति। 'लोकवादो जनरवः परीवादापवादयोः'। अवैधकर्म्मानुष्ठाने अयशो महद्भवति। तदुक्तं महर्षिणा 'अयशो महदाप्नोति नरकञ्चाधि-

**नास्त्यलसस्य शास्त्राधिगमः ॥ २६ ॥**

**न स्त्रैणस्य स्वर्गावाप्तिर्धर्मकृत्यञ्च ॥ २७ ॥**

---

गच्छति'। अतः अपवादावसरदाने सर्व्वथा पराङ्मुखः स्यात्। 'भयं भीतौ भयङ्करे' इति हैमः। भयम्। ञिभी भये, बिभेति। 'अज्विधौ भयादीनामुपसंख्यानम्'। बाहुलकादङि वा ॥ २५ ॥

कार्य्याक्षमस्य निरुत्साहस्य शास्त्राज्ञानाभावमाह नेति। अलसस्य मन्दस्य कायेन्द्रिययोर्गुरुत्वयुक्तस्य। शास्त्राधिगमो-शास्त्रार्थबोधः प्रतीतिरिति। नास्ति न सम्भाव्यते। तदुक्तं नीतिज्ञैः—

"अलसो मन्दबुद्धिश्च सुखी वा व्याधि-पीड़ितः।
निन्द्रालुः कामुकश्चैव षड़ेते शास्त्रवर्ज्जिताः" ॥

शास्त्रार्थाधिगमे समर्थश्च यथा—

"मेधावी ब्रह्मचारी च सुस्थः क्लेशपरायणः।
उद्यतस्तीव्रसम्वेगी विद्यार्थी स भवेत् सदा" ॥

मेधावी स्मृतिमान् नीरोगः शास्त्रबोधे योग्यः। शास्त्रपदं पाङ्-निरुक्तम्। 'आलस्य' इति पाठे तु अलस एवेति स्वार्थे ष्यङ्। लस श्लेषणे, न लसतीति अचा सिद्धम्। अन्यच्च—

"आलस्याद् बुद्धिमान्द्यञ्च आलस्यात्कार्य्यवैक्लवम्।
आलस्यादवनतिश्चैव गौरवं तेन नश्यति ॥"

अतो भूतिमिच्छता सदालस्यं परित्यज्येत ॥ २६ ॥

कामिन्यासक्तस्य पुंसः धर्म्मकार्य्यं स्वर्गलाभ सम्भावना विरह-

स्त्रियोऽपि स्त्रैणमवमन्यन्ते ॥ २८ ॥

---

माह नेति। स्त्रैणस्य सततं कामिन्यासक्तस्य स्त्रीजितस्य कामकिङ्करस्येति यावत्। तथाहि कामासक्तत्वेनोजः चयान्मनो देहेन्द्रिय वैकल्यादीश्वराराधने प्रवृत्त्यभावाच्च धर्म्मकार्य्याभावः। स्वर्गावाप्तिः स्वर्गप्राप्तिस्तल्लाभो न भवति। एवं धर्म्मकृत्यं, शक्त्यभावात्तत्कार्य्यं तदनुष्ठानं तत्फलञ्च न भवति। धर्म्मकृत्यञ्च याग दान-देवाराधन-योग-परोपकाराः। क्वापि इदं सूत्रद्वयं पृथग्रूपेण विभक्तं दृश्यते। परञ्च प्रयोजनाभावादर्थवैषम्या च्चैकमेव सूत्रं युक्तं शोभते। 'स्त्रैणः स्त्र्यासक्तः कामुको लम्पटो रमणीरतः'। स्त्रियामयं समासक्त इति 'स्त्रीपुंभ्याम्' इति नञ्। कृत्यो विद्विषि कार्य्ये च कृत्या क्रियादिवौकसोः' इति रभसः। कृत्यमिति। 'कृञः शच' इत्यत्र चकारात् क्यप् च भवति। यद्वा कृती च्छेदने। कृत्यते। 'ऋदुपधात्' इत्यादिना क्यप् स्यात्। स्वर्गप्राप्तिर्धर्म्मकृत्योपायादिकञ्च पुराणे धर्म्मशास्त्रे वर्णितमस्ति ॥ २७ ॥

स्त्रीपरायणस्य स्त्रीसविधेऽप्यवज्ञामाह स्त्रिय इति। स्त्रियः पतिव्रताः योषितः अन्या वा। स्त्रैणं स्त्रीसेवारतं पुमांसम्। अवमन्यन्ते, हीनमिवावजानन्ति। सच्चारित्राभावाच्छक्तिराहित्याच्च। केचिद्वदन्ति 'तारुण्याभावाद् दुःशीलत्वाच्चेति'। 'स्त्री योषिदवला योषा नारी सीमन्तिनी'त्यमरः। स्त्यायति गर्भोऽस्याम्। 'स्त्यायतेड्ट्' इत्यौणादिकः प्रत्ययः। टिलोपो-

**पुष्पार्थिनः सिञ्चन्ति अद्भिः पुष्पतरुम् ॥ २९ ॥**

**अद्रव्य-प्रयत्नो वालुकापीड़नादनन्यः ॥३०॥**

---

यलोपश्च: । 'टिड्ढा' इत्यादिना ङीप् । समाजेष्वपि कामासक्ता अवज्ञाता भवन्ति । दौर्व्वल्यादकर्म्मण्या अविश्वस्ताश्चेति ॥२८॥

कार्य्यसिद्धौ तद्योग्यसामग्रीसमासादनमाह पुष्पार्थिनः इति । पुष्पार्थिनः प्रसूनकामिनः पुरुषाः । अद्भिः सलिलैः सिञ्चन्ति तरुमूलदेशं आर्द्रीभूतं कुर्व्वन्ति तेन च पुष्पप्राचुर्य्यं स्यात् । पुष्पतरून् पुष्पितान् महीरुहान् । तत्तरुमूले सलिल-सेकाद् यथाभिलाषं पुष्पाणि यथाकालं लब्धुं शक्नुवन्ति । क्वचि-देवं सूत्रपाठो दृश्यते 'न पुष्पार्थी सिञ्चति शुष्कतरून्' एवं पाठे पुष्पार्थी जनः शुष्कतरुं न सिंचति । अपि तु जीवितमहीरुहं सिञ्चति । ततश्च नस्य येन प्रयोजनसिद्धिर्भवति स तदर्थं यतते । समादत्ते च तत् । तथा च दध्यर्थी धेनुसेवनं कृत्वा क्षीर-मेव गृह्णाति न तु वृषसेवनेन । 'पुष्पं प्रसूनं कुसुमं समम्' इत्य-मरः । पुष्प विकसने, पुष्प्यति । ततः पचाद्यच् । तरुः । तॄ प्लवनतरणयोः, तरति । 'भृ मृ शिङ्' इत्यौणादिकसूत्रादुः ॥२९॥

कार्य्ययोग्य-सारवस्त्वनुसन्धानं प्रयोजनं नत्वसारायोग्यानु-शीलनन्तदाह रति । अद्रव्येषु असारवत् स्वपदार्थेषु वा यः प्रयत्नः फलोत्पादनार्थं प्रबलोद्यमः । स प्रयत्नः वालुकापीड़ना-द्वालुकाक्वाथनादनन्य एव । अर्थाद्वालुकापीड़नं निरर्थकम् ।

## न महाजन-हासः कर्त्तव्यः ॥ ३१ ॥

---

यथा तण्डुलार्थी तुषकण्डनं करोति तद्वत् । अन्यत्र 'बालुका-क्काथनादनन्यः' इत्थं पाठभेदोऽस्ति । अत्र क्काथनं क्काथकरणम् । तत्तु निष्फलमित्यर्थः । 'द्रव्यं भव्ये गुणाश्रये' इत्यमरः । द्रव्यम् । द्रुरिव द्रुरिदं वा । 'द्रव्यञ्च भव्ये' इति साधुः । 'बालुका सिकतासु स्याद् वालुकं त्वेलवालुकं' इति मेदिनी । बल प्राणने, बाहुलकादुन् । स्वार्थे कन् । नात्र वालुकाख्य-गन्धद्रव्यमपि च सिकता । 'स्थाने नियोगः, सेवा शक्तिमतः, सारद्रव्ये च प्रयत्नः' इत्युचुः प्राचीनाः ॥ ३० ॥

सत् समीच्यकारिजनस्योपहासकरण-निषेधमाह नेति । महान्तः श्रेष्ठाः पुरुषोत्तमा जना महाजनाः । महत्त्वञ्च विद्याधनप्रतापौदार्य्य धर्म्मैरिति ज्ञेयम् । तेषां हासः परिहासः उपेक्षा अग्राह्यतेति यावत् । गरिष्ठेषु परिहासकरणे स्वीयमानसे हीनवृत्तिरुदेति, तथा सामाजिकेषु च । स्वस्य च तथैव भवने प्रवृत्तिरपि नश्यति साधुद्रोहश्च भवति । तदुक्तं कविना 'न केवलं यो महतोऽवभाषते' इत्यादि । एवं शास्त्रकृद्भिरपि 'न प्रतिबध्नाति हि श्रेयः पूज्य-पूजा-व्यतिक्रमः' इत्युक्तम् । तादृशजनैर्महोपकारः सर्व्वेषां नत्वपकारः । अतः तान् प्रतिविगानं नैव कुर्य्यात् । 'तत्र हासो हास्यं घर्घरं हासिका स्त्रियाम्' इति शब्दार्णवः । अत्र हास उपहास इत्यर्थः । हसे हसने, हसनम् । घञा हास इति सिद्धः ॥ ३१ ॥

**न नर्म्म-परीहासः सर्त्तव्यः ॥ ३२ ॥**

**कार्य्य-सम्पदं निमित्तानि सूचयन्ति ॥३३॥**

---

सामान्यतः नर्म्म-परीहासावलम्बनेन समयातिपातकरण-निषेधमाह नेति । नर्म्म क्रीड़ा खेला, अवहेलनेन क्रीड़ा च । परीहासः उपहासः, तुच्छबुद्ध्या । प्राज्ञ-धर्म्मसत्कर्म्मेश्वरेषु । न कर्त्तव्यः नैव विधेयः । ईदृशाचरणे सन्नीतिर्ह्रीयते स्वस्यचावनमनं स्यादिति भावः । महा कवि-समयश्च 'परिहासविजल्पितं सखे ! परमार्थेन न गृह्यतां वचः' । परि सर्व्वथा हेय बुद्ध्या हासः । अत्र नर्मपदेन सामान्यक्रीड़ामात्रग्रहणान्नैव पुनरुक्तिः । 'क्रीड़ा खेला च नर्म्म च' इत्यमरः । नॄ नये, नरणं नर्म । मनिन् प्रत्ययेन सिद्धम् । सूत्रमदः क्वचिन्मूलादर्शे नास्ति ॥ ३२ ॥

कार्य्यारम्भात् प्राक् शुभसूचक-दर्शनेन भाविकार्य्यस्य साफल्यमाशुसम्पादनभावमाह कार्य्येति । निमित्तानि कार्य्यात् प्राक् शुभ-सूचक-लक्षणानि । कार्य्यस्य कर्म्मणः सम्पदं सम्पत्तिम् ऋद्धिं सूचयन्ति प्रकाशयन्ति । निमित्तानि द्विविधानि । शुभ-निदानानि । अशुभ-निदानानि च । एतानि तु शाकुनतन्त्रे ज्योतिस्तत्त्वे, योगशास्त्रे, वैद्यके, सामुद्रिके च वर्णितानि सन्ति । गीतायाञ्च—

"निमित्तानि च पश्यामि विपरीतानि केशव" ।

"निमित्तं शाकुनो हेतुः चिह्नञ्च शुभलक्षणम्" ॥

## नक्षत्रादि-निमित्तानि विशेषयन्ति ॥३४॥

इति व्याड़िरपि । 'सम्पत् समृद्धिः श्रीश्वे'ति ।

'निमित्तं किञ्चिदासाद्य देही प्राणैर्विमुच्यते' ।

इति पञ्चतन्त्रे । न्यायमते तु समवायिकारणा-समवायिकारणाभ्यां भिन्नं तृतीयं निमित्तकारणम् । ञि मिदा स्नेहने, निमेद्यति । ञीतः क्तः । संज्ञापूर्व्वकत्वान्न नत्वम् । 'अनात्मनेपद निमित्ते' इति निर्द्देशादेति साधुत्वमुक्तं व्याख्यासुधायाम् ॥ ३३ ॥

कार्य्यारम्भात् प्राङ्-निमित्तसूचकहेतुमाह नक्षत्रादीति । नक्षत्रादि । अप्राकृताभिनवनक्षत्रदर्शनम् । आकाशे धूमकेतुः । शिलोन्ध्रावरणम् । साग्नि-धूमाङ्गारोद्गमः । ते आदयोर्येषां निमित्तानां, तानि निमित्तानि । कार्य्यानुष्ठानात्पूर्व्वं यादृग् निमित्तदर्शनं भाविकार्य्यफलं तादृगेवानुमेयम् । तानि परिणामसूचकानि विशेषयन्ति । विशिष्टत्वेन ज्ञापयन्ति । तद्यथा त्रिविधमद्भुतं दिव्यं नाभसं भौमञ्चेति । एवमद्भुतसागरे आथर्व्वणाद्भुतवचनम् । 'प्रकृतिविरुद्धमद्भुतमापदः । प्राक प्रबोधाय देवाः सृजन्ती'ति । विष्णुधर्मोत्तरे भौमादिभेदेन फलतारतम्यमुक्तम्—

"भौमं चाल्पफलं ज्ञेयं चिरेण परिपच्यते ।
नाभसं मध्यफलदं मध्यकाले फलप्रदम् ॥
दिव्यं तीव्रफलं ज्ञेयं शीघ्रकारि तथैव च" ।

अन्यद् रघुनन्दनीये ज्योतिस्तत्त्वेऽद्भुतप्रकरणे संगृहीतमस्ति ।

# न त्वरितस्य नक्षत्र-परीक्षा ॥ ३५ ॥

---

लोकानामनिष्टकरत्वेनैतस्यात्रोल्लेखः। तत्शान्तिविधानन्तु छन्दोगपरिशिष्टे शान्तिमयूखादौ च वर्णितमस्ति। 'निमित्तं हेतुलक्ष्मणोः' इत्यमरः। 'नक्षत्रादपीति' पाठभेदे, नक्षत्रपतनाद् धूलिपटलोद्गमाद् विपरीतनक्षत्रदर्शनाच्चेत्यर्थो बोध्यः ॥ ३४ ॥

अनिविष्टमनसश्चञ्चलमतेर्नक्षत्रोदयगतिस्थितिपरीक्षादिकर्म्मसु अशक्तिमाह नेति। त्वरितस्य क्षिप्रगामिनः पुंसः। यद्वा शीघ्रगामिनो नक्षत्रादेः। तेषां परीक्षा सम्यगीक्षणं न स्यात्। नक्षत्राणां शुभाशुभलक्षणं तद्विवेकः। अथवा कस्मिन् नक्षत्रे को वा ग्रहोऽस्ति। स कियन्तं कालं स्थित्वा ततोऽन्यत्र यास्यतीति। तेषां मध्ये कदागस्त्योदयः, कदा वा कीर्त्तिकोदयः, कदा पुष्येण चन्द्रमसो योगः, कदा च चित्रायाः स्थानान्तरे गतिर्भवतीति मानयन्त्रसाहाय्येन सिद्धान्त-गणितशास्त्रीयोपायावलम्बनेन च सम्यगीक्षणं सम्भवति। अत्र भोजराजीय राजमृगाङ्कसन्दर्भ-सिद्धान्तसन्दर्भ-सिद्धान्त दर्पणादि प्रमाणम्। अतः स्पष्टमुच्यते नत्वविज्ञातगणितसिद्धान्तस्या स्थिरमतेः परीक्षणेऽधिकार इति। 'त्वरितं वेग तद्वतः' इति हैमः। चित्राया गतिर्दीर्घकालेन। अन्येषान्तु क्षिप्रगतिः। 'नक्षत्रमृक्षं भं तारा' इत्यमरः। न क्षदते हिनस्ति। क्षतः सौत्रो धातुः हिंसार्थे। तत औणादिकसूत्रात् ष्ट्रन्। 'नभ्राणनपाद्' इत्यादिना प्रकृतिभावः ॥ ३५ ॥

**परिचये दोषा न छाद्यन्ते ॥ ३६ ॥**

**स्वयमशुद्धः परानाशङ्कते ॥ ३७ ॥**

---

परिचये च दोषप्रकाशनमाह परीति। परिचये संस्तवे प्रकाशे वा तत्काले च, गुणाद्युल्लेखे दोषाः कलङ्काः गर्हिताचरणानीति यावत्। न छाद्यन्ते नाव्रियन्ते। तदानीं गुणा दोषाश्च प्रकाशिताः स्युः अन्यथा यस्य तु परिचयस्तस्य सम्यक् परीक्षा नैव भवेत्। केचित्तु परिचयः परिसम्यग्गुणदोषादि-विवरण-प्रकाशः। तेन दोषाच्छादनेऽपि न परिचयो भवति। 'संस्तवः स्यात् परिचयः' इत्यमरः। परिसमन्ताच्चयनम्। विशेषेण ज्ञानम्। चिञ् चयने, परिचीयते। परिपूर्व्वाच्चिनोतेः एरचा सिद्धम् ॥ ३६ ॥

सदोषस्य परदोषानुसन्धानमनौचित्यमाह स्वयमिति। स्वयं निजः आत्मनेति। अशुद्धो नानादोषान्वितः दुरित-युक्तो वा। अतःपरानन्यान् लोकान् दोष-युक्तान् इत्याशङ्कते स्व दोष-तौल्याय। तर्हि कथम् 'आत्मवत् सर्व्वभूतेषु यः पश्यति स पण्डितः'। 'आत्मवत् मन्यते जगत्' इत्यादि सङ्गच्छते। सत्यं तत्सर्व्वं गुणविषये सुखदुःखाद्यनुभवे च। न तु दोषविषये स्वदोषस्य परस्मिन्नपि आशङ्कनम्। यद्वा जगति सर्वे लोका नहि दुष्टाः साधवो वा भवन्ति। लोकानामूच्चावचस्वभावात्। केचन साधवः केऽपि दुष्टाश्च। परं सर्वेषु मैत्री करुणा मुदितोपेक्षाः यथायोग्यं सम्भावनीयाः। 'स्वयमात्मने'त्यमरः। शुध-

## स्वभावो दुरतिक्रमः॥ ३८॥

---

शौचे, शुध्यति। ततः क्तप्रत्ययः। पश्चान्नञ् योगः। सु-सुष्ठु अयते अयगतावित्यस्माद्धातोरमा सिद्धम्॥ ३७॥

वस्तुस्वभावस्यापरिहार्य्यत्वमाह स्वभाव इति। स्वस्यात्मनो भावः स्वभावः। यद्वा स्वो भावः प्रकृतिः स्वरूपं नैसर्गिकमिति यावत्। स च दुरतिक्रमः। दुःखेन महता प्रयासेनातिक्रमितुं शक्यः, तत्रैकाग्रमनोवृत्तिर्योग्या। तदुक्तम्—

"स्वभावो यादृशो यस्य न जहाति कदाचन"।

अन्यच्च बौद्धैरुक्तम्—

"न हि स्वभावो भावानां व्यावर्त्त्यं तौष्ण्यवद्रवेः"।

सांख्यभाष्ये च—'स्वभावस्यानपायित्वाद् यावद्द्रव्य भावित्वा'-दिति। नीतिविद्भिरप्युक्तम्—

"स्वभाव एवात्र तथातिरिच्यते,
यथा प्रकृत्या मधुरं गवां पयः" इति।

यथा पयसि, माधुर्य्यमिक्षुरसे च। निम्बे च तिक्ततेति। अतिक्रमणम्। अतिपूर्व्वात्क्रमेर्भावे ल्युट्। अन्यविधौ यथा—

"निसर्गश्च स्वरूपश्चेत्येषोऽपि भवति द्विधा।
निसर्गः सुदृढाभ्यास जन्यः संस्कार उच्यते॥
अजन्यस्तु स्वतः सिद्धः स्वरूपं भाव इष्यते"।

इत्युज्ज्वलनीलमणौ। भास्कराचार्य्याश्च 'मरुच्चलो भूरचला

## अपराधानुरूपो दण्डः ॥ ३६ ॥

---

स्वभावतो यतो विचित्रा बत वस्तुशक्तय:' इत्याहु: । अन्यच्च 'वह्निर्हैत्वनपेक्षो च स्वभावोऽथ प्रकीर्त्तितः' ॥ ३८ ॥

अपराधिषु यथायोग्यदण्डमाह अपेति । यस्य दण्डस्य यादृशोऽपराधस्तस्य तदपराधानुरूपो दण्डो योग्यत्वेन विधेयः । नतु गुर्व्वपराधे लघुदण्डः । लघ्वपराधे गुरुदण्डो वा । अथवा निरपराधे दण्डः प्रयोज्यः । सापराधे दण्डाभावः । तेन समाजेषु दुर्नीतिः संवर्द्धते । एतत्सर्व्वम् अर्थशास्त्रविरुद्धं ज्ञेयम् । सर्व्वथा दण्डाभावे लोके मानवोक्तो मात्स्यन्यायः कदर्थितः स्यात् । अराजकञ्च राष्ट्रं भविष्यति । अतो दण्डः प्रजारक्षणे तत् स्थितौ सुशासने चातिप्रयोजनार्हः । उक्तञ्च मनुना—

"अदण्ड्यान् दण्डयन् राजा दण्ड्यांश्चैवाप्यदण्डयन् ।
अयशो महदाप्नोति नरकञ्चाधिगच्छति" ॥

नीतिविद्भिश्च दण्डत्रैविध्यमुक्तम्—

"बधोऽर्थग्रहणञ्चैव परिक्लेशस्तथैव च ।
इति दण्डविधानज्ञैः दण्डोऽपि त्रिविधः स्मृतः" ॥

परिक्लेशो बन्धन-ताड़नादिः । तत्रैव—

"दण्डः सुप्तेषु जागर्त्ति दण्डः संरक्षति प्रजाः" ।

इति च । अन्यदर्थशास्त्रे, युक्तिकल्पतरौ, भार्गवनीतौ, भारते राजधर्मे चास्ति । राध संसिद्धौ, अपराधनमपराधः । ततो घञा सिद्धः । दमु उपशमे, दमनं दण्डः, अमन्तात् डः ॥३६॥

**कथानुरूपं प्रतिवचनम् ॥ ४० ॥**

**विभवानुरूपमाभरणम् ॥ ४१ ॥**

---

उक्त्यनुसारेणैव प्रत्युक्तिः प्रयोजनमाह कथेति। कथायाः उक्तेर्वाक्यस्य प्रश्नस्येति यावत्। अनुरूपं यस्य यादृक् कथनं तस्य तादृगेव प्रतिवचनम्, प्रतिवाक्यमुत्तरमिति अन्यथैकं पृष्टम् अन्यदुत्तरमिति स्यात्। तदार्थाग्रहोविप्रतिपत्तिर्वितण्डा च भवेत्। 'आम्रान् पृष्टः कोविदारानाचष्टे' इति प्रश्न प्रतिवचनयो वैरूप्यं मृषोत्तरञ्च स्यात्। तथैव विचारालये न्यायाधीशस्य प्रश्नानुरूपमेवोत्तरं देयम्। अन्यथोत्तरे शाठ्याद् दण्डार्हो-भवेत्। नात्र कथा कादम्बर्य्यादिः। अपि च वाक्यप्रबन्धनमेव। अन्ये तु 'प्रबन्ध-कल्पना कथा' इति प्रबन्धेन प्रबन्धस्य वा कल्पना रचना बहुनृता स्तोकसत्या कथा। तथा चोक्तम्—

"प्रबन्ध-कल्पनां स्तोक-सत्यां प्राज्ञाः कथां विदुः।
परस्पराश्रया या स्यात् सा मताख्यायिका क्वचित्" ॥

इत्याहुः। अत्र तस्य सम्यग् नोपयोगित्वम्। कथ वाक्यप्रबन्धने, कथनम्। 'चिन्ति पूजि कथि' इत्यादिना अङ्। 'प्रतिवाक्योत्तरे समे' इत्यमरः। वच भाषणे, वचनम्। प्रतिपूर्वाद् वचेर्ल्युट् ॥ ४० ॥

धनानुसारेणालङ्कारादि-संग्रहो विधेयः नाधिक इति तदाह वीति। विभवस्य धनस्य ऐश्वर्य्यस्येति यावत्। अनुरूपं सदृश-

## कुलानुरूपं वृत्तम् ॥ ४२ ॥

---

न्तुल्यमिति । आभरणं विभूषणमलङ्कार । यस्य तु यादृश-
श्चनं विद्यते तदनुयायि आभरणं संग्राह्यं नाधिकं नवाति
न्यूनम् । तदधिकसंग्रहे धनाभावादन्न-वस्त्राभावो भवतीति
भाव: । अत्यल्पसंग्रहे गौरवहीनता चेति । 'अर्थ रै विभवा
अपि' इत्यमर: । 'विभवो धननिवृत्त्यो'रिति हैमश्च । विभवति ।
विपूर्वाद्भवते रच् । आभ्रियतेऽनेनेति । भृञ् भरणे, आङ्पूर्व्वात्-
करणे, ततो ल्युट् । कटक-केयूर-कङ्कन-क्षतक--कुण्डल-काञ्ची-
हारावतंस-बलयाङ्गद-नुपूर-ग्रैवेयक-ताटङ्कादीन्याभरणानि ॥४१॥

वृत्तस्य कुलानुरूपत्वमाह कुलेति । कुलं वंशोऽभिजन इति
तस्यानुरूपं समं वृत्तं चरित्राद्याचरणञ्च स्यादिति। यदि च कुलं
विशालं प्राचीणं भवेत्तदा तस्य कथा तु विशाला नाना तथ्य-
पूर्णा । कुलस्य गुणोदोषावपि तादृशावेव । प्रशस्तकुलसम्भुत-
स्याचरणादिकमपि सर्व्वं प्रशस्तं वैशद्ययुक्तम् । हीनकुलजात-
स्याचरणं निकृष्टमिति । वृत्तञ्च तथैव प्रायो भवति । 'कुलं
जनपदे गोत्रे सजातीयगणेऽपि च' इति मेदिनी । कौ लीयते,
लीङ् श्लेषणे । 'अन्येभ्योऽपि चेति' ड: । यद्वा कुङ् शब्दे
कूयते । बाहुलकात्लक् । 'वृत्तं वृत्तौ मृते दृढे चरित्रे' इति
हैम: । 'वृत्तेऽन्यलिङ्ग' वा क्लीवे छन्दश्चारित्रवृत्तिषु' इति मेदि-
न्यपि । वित्तमिति पाठे कुलानुरूपं धनमित्यर्थ: ॥ ४२ ॥

**कार्य्यानुरूपः प्रयत्नः ॥ ४३ ॥**

**पात्रानुरूपं दानम् ॥ ४४ ॥**

---

प्रयत्नस्य कार्य्यतुल्यत्वमाह कार्य्येति। कार्य्यस्य कर्म्मणः अनुष्ठेय विषयस्येति। अनुरूपः सदृश इति। प्रकृष्टो यत्नश्चेष्टा समुद्‌योगश्चेति यावत्। यादृशं कार्य्यं गुरु लघु वा। तादृशमेव सामग्रीसमवधानम्। साधनोद्योगः कार्य्यसम्पादनञ्च तत्फलमपि तथैव भवति। कार्य्यं स्वयमनुष्ठेयम् अन्यद्वारा वा, सदसद्वा, स्वार्थं परार्थं वा। सम्प्रति काले भविष्यति वा अनुष्ठेयम्। हितकरमहितकरं वा। एतत् सर्व्वं कार्य्यानुष्ठानात् प्राक् तत्समकाले वा परिचिन्तनीयम्। अनुः सादृश्यार्थे। रूप, रूपकरणे, इति चौरादिका दच्। न्यायनये तु प्रयत्नस्त्रिविधः। स यथा—

"प्रवृत्तिश्च निवृत्तिश्च तथा जीवनकारणम्।
एवं प्रयत्नत्रैविध्यं तान्त्रिकैः परिदर्शितम्॥
चिकीर्षा कृतिसाध्येष्ट-साधनत्वमतिस्तथा।
उपादानस्य चाध्यक्षं प्रवृत्तौ जनकं भवेत्॥
निवृत्तिस्तु भवेद् द्वेषाद् द्विष्टसाधनताधियः।
यत्नोजीवनयोनिस्तु सर्व्वदातोन्द्रियो भवेत्॥
शरीरे प्राणसञ्चारे कारणन्तत् प्रकोर्त्तितम्"।

इति विश्वनाथाः। प्र पूर्व्वाद् यत् धातोर्भावे नङ्॥ ४३॥

यादृशं पात्रं परिदृष्टं दानमपि तादृशमेव विज्ञेयमित्याह

## वयोऽनुरूपो वेशः ॥ ४५ ॥

---

पात्रेति। दानं विश्राणनं त्यागः। तच्च स्व स्वत्वध्वंसपूर्व्वकपरस्वत्वापादानं वेति। तत् पात्रानुरूपं युक्तम्। एवमुत्तममध्यमाधमभेदेन पात्रं त्रिविधम्। यो यादृशः पात्रन्तस्मै विद्यागुणवयोवस्थाः अवलोक्य तादृगेव धनादिकं देयम्। तदुक्तं भारते—

"दरिद्रान् भर कौन्तेय! मा प्रयच्छेश्वरे धनम्"।

अपरञ्च—

"दरिद्रे दीयते दानं सफलं पाण्डुनन्दन!"।

दानस्य धर्म्माङ्गत्वं श्रुतावप्युक्तम् 'त्रयोधर्म्मस्कन्धा यज्ञोऽध्ययनं दान'ञ्चेति। गीतायाञ्च—

"दातव्यमिति यद्दानं दीयतेऽनुपकारिणे।
देशे काले च पात्रे तद्दानं सात्त्विकं स्मृतम्"॥

अतो दीनातुरानाश्रय--पङ्ग्वन्ध-विपन्न-विद्यार्थि-देव-द्विज-गुरु-विद्वद्भ्यो यथाशक्ति विभवानुसारेण धनं देयम्। दानपात्रन्तु धर्म्मशास्त्रादौ कीर्त्तितं, नेह प्रतन्यते विस्तरभिया। 'पात्रन्तु भाजने योग्ये स्रुवादौ राजमन्त्रिणि' इति मेदिनी। पात्रम्। पा रक्षणे, पाति अनेन। पा पाने वा, पिवति। तत्र औणादिकसूत्रात् ष्ट्रन्। 'अर्थानुरूपमिति' पाठे तु सूत्रार्थोऽक्लिष्ट एव ॥४४॥

यस्य तु यादृशं वयस्तस्य तादृशमेव वेशधारणं शोभनन्तदाह वय इति। वयांसि बाल्य-यौवन-वार्द्धक्यानि। तानि च शरीरावस्था विशेषाः जीवनकालो वा। तेषामनुरूपं तुल्यं वेशः।

## स्वाम्यनुकूलो भृत्यः ॥ ४६ ॥

---

भूषणाम्बरादि। यादृशे बाल्यादौ वयसि यद्भूषणादिकं योग्यं भवेत् तस्मिन् तादृश एव वेशः कार्य्यः तद्वैपरीत्ये अशोभनं स्यात्। यथा 'वृद्धजनोचित वेशधारणं बालस्येति। शिशुजनोचित-वेशविन्यासो युवकस्येति' वा। 'वयः पक्षिणि बाल्यादौ यौवने च नपुंसकम्' इति मेदनी। वय गतौ वयते। तत्र औणादिकसूत्रादसुन्। वेशधारणन्तु शरीरशोभारक्षार्थं सामर्थ्य-परिचयार्थञ्चावश्यकम्। 'वेशो मूर्द्धन्योऽलङ्करणे कथित आचार्य्यैः' इत्युष्मविवेके। कुत्रचित्तालव्यान्तोऽपि वेशशब्दः। 'आकल्पः कल्पने वेष' इति मेदिनी। विषॢ व्याप्तौ, वेषणम्। विष्यते वा। ततो घञ्। तालव्यान्तपक्षे तु विश प्रवेशने, विश्यते। अधिकरणे घञा सिद्धः॥ ४५ ॥

कर्म्मकराणामनुवृत्तिपरायणानां प्रभोरानुगत्यपालनं युक्त-मित्याह स्वामीति। स्वामिनः प्रभोः अधिपतेरिति। स्वामिनो यादृशो नियमः अनुजीविनस्तादृश्येव वृत्तिः समुचिता। अन्यथा तयोराचरणभेदे सति भृत्यादेरनिष्टं प्रभोश्चादाक्षिन्यम् अनुगतास्मति द्वेषः कार्य्यहानिश्च भवेदिति भृत्यः सर्व्वदा प्रभोरादेश-मनुपालयेत्। तदनुसारेण कर्म्मापि कुर्य्यात्। 'स्वामी प्रभु-विशाखयो'रिति विश्वः। स्वमस्यास्तीति 'स्वामिन् ऐश्वर्य्ये' इत्यनेन साधुः। 'भृत्योऽनुजीवि कर्म्मकरो दास'श्चेति। भृञ् भरणे, भ्रियते। 'भृञोऽसञ्ज्ञायाम्' इति क्यप्॥ ४६ ॥

## भर्त्तृ-वशवर्त्तिनी भार्य्या ॥ ४७ ॥

---

पत्न्याः पत्युरनुगामित्वमाह भर्त्तेति। भर्त्तुः पत्युः स्वामिनः इति। वशवर्त्तिनी। वशे आनुगत्ये वर्त्तितुमवस्थातुं शीलमस्याः इति। पत्यनुगामिनी भार्य्या पत्नी स्यात्, सा तु गृह-पिञ्जर-कोकिला कुलस्त्रीति। उक्तञ्च राजनीतौ—

"सा भार्य्या या गृहे दक्षा सा भार्य्या या प्रियंवदा।
सा भार्य्या या पतिप्राणा सा भार्य्या या प्रजावती॥
साध्वी सु-शीलसम्पन्ना सुरूपा च गुणान्विता।
देवाग्नि-गुरु-भक्ता या सा भार्य्या भोगमोक्षदा"॥

पतिप्राणा सम्यक् पतिव्रता इत्यर्थः। मनुना च—

"आर्त्तार्त्ते मुदिता हृष्टा प्रोषिते मलिना कृशा।
मृते म्रियेत या पत्यौ सा स्त्री ज्ञेया पतिव्रता"॥

सद्विद्या चासां हितकारिणी। तथा च—

"कन्याप्येवं पालनीया शिक्षनीयापि यत्नतः"।

अन्यच्च तासां वसन-भूषण-पेलवव्यवहारैश्च परितोषणं युक्तम्। क्वापि शास्त्रे गृहिण्या च गृहपतेः गृहित्वमुक्तम्। तथा च—

"न गृहं गृहमित्याहुर्गृहिणी गृहमुच्यते"।

एवञ्च—"अर्द्धं भार्य्या शरीरस्य भार्य्याभीष्टतमा मता।
भार्य्या मूलं त्रिवर्गस्य भार्य्याऽमैत्रेण नश्यति"॥

'भर्त्तृवशानुवर्त्तिनीति' पाठे तु अर्थाभेद-प्रतीतिः। वृ-भृञ्

## गुरु-वशानुवर्त्ती शिष्यः ॥ ४८ ॥

भरणादौ, विभक्तिः। ततः ल्यचा भवतीति। भार्य्या। भृञ् भरणादौ। भ्रियते, भूर्य्यते वा। क्यपा सिद्धम् ॥ ४७ ॥

शिष्यस्य गुरुवशानुयायित्वमाह गुर्व्विति। गुरुः ज्ञानशिक्ष-योर्दाताचार्य्यः दीक्षयितेति यावत्। तस्यानुवर्त्ती अनुगामी अनुसर्त्तेति। य ईदृशः स्यात् स शिष्यः। स चान्तेवासी ब्रह्मचारीति। यश्च दुर्विनीतो गुरुविरोधी न सः शिष्यः स्यात्। गुरुश्च शान्तः शास्त्रविद्धर्म्मज्ञो दयालुः शीलवान् प्रतिभान्वितो भवेत्। शिष्यस्य गुरुवशित्वे विद्या-सौशील्य-नीति-नैपुण्य-ज्ञानान्यनायाससाध्यानि स्युः। तदुक्तमाचार्य्यैः—

"गुरुशुश्रूषया विद्या पुष्कलेन धनेन वा।
अथवा विद्यया विद्ये'ति।

धर्म्मशास्त्रकृन्नये तु—

"निषेकादीनि कर्म्माणि यः करोति यथाविधि।
सम्भावयति चान्नेन स विप्रो गुरुरुच्यते' ॥ इति
"गुरुस्त्रिलिङ्ग्यां महति दुर्जरालघुनोरपि।
पुमान् निषेकादिकरे पित्रादौ सुरमन्त्रिणि" ॥

इति मेदिनी। गॄ निगरणे, गॄ शब्दे च। गिरति गृणाति च धर्म्मादि। एतयोः 'कृग्रोरुच्चेति' औणादिकसूत्रादुः। 'शासु अनु-शिष्टौ, शिष्यते। 'एतिस्तु शास' इति क्यप्। 'शास इदङ् हलो इतीत्'। 'शासि वसि' इत्यादिना ष इति ॥ ४८ ॥

## पितृ-वशानुवर्त्ती पुत्रः ॥ ४६ ॥

## स्वामिनि कुपिते स्वामिनमेवानुवर्त्तेत ॥ ५०

आत्मजस्य पितृवशवर्त्तित्वमाह पित्रिति। पितुर्जनकस्य वशानुवर्त्ती वशीभूतोऽधीनोऽनुगामीति यावत्। पुत्रः सुतः आत्मज इति। य एवं स्यात् स पुत्रः। तदुक्तं श्रुतौ—

"अङ्गादङ्गात् सम्भवसि हृदयादधिजायसे।
आत्मा वै पुत्रनामासि जीव त्वं शरदां शतम्"।

ऋषिणाप्युक्तम्—

"पुन्नाम्नो नरकाद् यस्मात्त्रायते पितरं सुतः।
तस्मात् पुत्र इति ख्यातः स्वयमेव स्वयम्भु वा"॥

अन्यच्च पुत्रविनयनविषये—

"व्यसने योजयेच्छत्रून् पुत्रं धर्म्मेण योजयेत्"।

अपरञ्च राजनीतौ 'पुत्रः शत्रुरपण्डितः"। एवञ्च सुशिक्षया धर्म्मोपदेशेन परिपालनं न च पुत्रं वश्यतां नयेत्। पिता। पाति सुतादीन् इति 'नप्तृनेष्ट्' इत्यौणादिकसूत्रात् साधुः। पुत्र इत्यं पाठे पुणाति कुलं पूयते पितरौ वा। पुञ् पवने। 'पुवो ह्रस्वश्च' इति त्रः। यद्वा पुन्नरकात्त्रायते इति 'सुपि' इत्यनेन कः॥ ४८॥

प्रागधिपतिभृत्य-पितृ-पुत्रादीनामानुगत्यादीनुक्त्वा सम्प्रति स्वामिनः क्रोध प्रतीकारोपायमाह स्वामीति। स्वामिनि प्रभौ नायके पालके समुपकारके च। कुपिते आक्रुष्टे क्रुद्धे सति।

## मातृ-ताड़ितो-बालो मातरमेवानुरोदिति ॥५१॥

भृत्यो दास आश्रितजनः । स्वामिनः शक्तेः प्राबल्यात्तमतीत्यान्यविधोपायमकृत्वा स्वामिनमेवानुवर्त्तितानुसरेत् । यतः यस्यां भूमौ निपतितस्तामेवाश्रित्य पुनरुत्तिष्ठेत् । तद्वन्नान्यं जनं प्रतिकर्त्तुं समाश्रयेत् । यद्वा 'लुब्धमर्थेन गृह्णीयात् क्रुद्धमञ्जलिकर्म्मणा' इति नीत्या कोपशान्तिर्विधेया । अपरञ्च 'स्वामिना परितुष्टेन भृत्यक्रोधो निरर्थकः' । ततश्च राज्ञि समाक्रुष्टे न तम् समनुक्रोशयेत् । 'स्वामी त्वीश्वरः पतिरीशिता' इत्यमरः । पूर्व्वम् निगदितमन्यत् ॥ ५० ॥

मातुस्ताड़ने बालस्य पुनर्मातुराश्रयमाह मात्रिति । मात्रा-जनन्या ताड़ितो भर्त्सितः प्रहृतस्तर्ज्जित इति यावत् । बाल-स्तनयो वत्सः । मातरं जननीमेवानुरोदिति । तामेवाश्रित्य पश्चाद्रोदिति क्रन्दति । तादृशाश्रयान्तराभावात् । यतो यातु सर्व्वदुःखहारिणी स्नेहमयी जननी सा सुतं प्रति कदापि नैव विरक्ता भवेदिति । तदुक्तं शास्त्रकृद्भिः—

"ताड़ने लालने मातुर्न कारुण्यं यथार्भके ।
तद्वदेव महेशस्य नियन्तुर्गुणदोषयोः" ॥ इति,

अतो मातुराश्रयत्वं युक्तम् । सूत्रमिदं पूर्व्वसूत्रस्य वैशद्यकरणपरमिति बोध्यम् । तत्र यथा 'प्रभोराक्रोशे भृत्यस्य प्रभुरेव शरणं' तद्वदिति । 'जनयित्री प्रसूर्माता जननी' इत्यमरः । मान पूजायाम्, मान्यते । माति गर्भोऽस्यां वा । मा माने । 'नप्तृ नेष्टृ'

**स्नेहवतः स्वल्पोऽपि रोषः ॥ ५२ ॥**

**आत्मच्छिद्रं न पश्यति परच्छिद्रमेव बालिशः ॥ ५३ ॥**

---

इत्यादिना साधुः । बाल इति । बल सञ्चलने, बल्यते, बलते वा । घञा सिद्धः । यद्वा ज्वलादिसूत्रात् णः ॥ ५१ ॥

वात्सल्ययुक्तस्य कोपः अल्पीयान् भवति स नाहिताय तदाह स्नेहवतेति । स्नेहवतः वात्सल्यवतो दयाशीलस्येति । तादृशस्य पुंसः । रोषः कोपः क्रोधश्चेति । सहि निश्चितं स्वल्पः अत्यल्पः क्षणस्थायी भवति । तस्य स्नेहस्वभावत्वात् स्नेह एवाधिकः स्यात् । कृतेऽपि रोषे न प्रातिकूल्यं भवेत् । 'प्रेमा ना प्रियता हार्दं प्रेम स्नेहः' इत्यमरः । अन्यच्च—'कारुणिको वत्सलश्च स्निग्धः स्नेहपरायणः' । ष्णिह प्रीतौ, स्नेहनम् । स्नेह इति घञा सिद्धः । रुषः हिंसायां, रोषः । तत्र भावे घञ् ॥ ५२ ॥

मूढजनस्य केवलं परच्छिद्रान्वेषणे तत्परत्वमाह आत्मेति । आत्मनः स्वस्य निजस्येति । छिद्रं दोषः अपराध इति । यद्वा च्छिद्रं कार्य्यदोषः । बालिशो मूर्खः इति । न पश्यति नावलोकयति । परस्यान्यस्य च्छिद्रं दोषपथमहिताचरणाय पश्यति । हिताहितविषये विवेकशक्तिहानात् स्वदोषमाच्छाद्य परदोषं प्रकटयति प्रायेणाज्ञः । तदुक्तं विज्ञैः—

"नीचः सर्षपमात्राणि परच्छिद्राणि पश्यति ।
आत्मनो बिल्वमात्राणि पश्यन्नपि न पश्यति" ॥

## सोपचारः कैतवः ॥ ५४ ॥

दण्डिनापि—

"गुणदोषानशास्त्रज्ञः कथं विभजते जनः ।
किमन्धस्याधिकारोऽस्ति रूपभेदोपलब्धिषु" ॥

कविसमयश्च—

"अभावयन्नेव निजोक्ति-दोषा-
नन्योक्ति दोषान् तरलो करोति ।
असुन्दराक्ष्योऽयमिति ब्रुवाणः,
काणोपि हास्यास्पदतामुपैति" ॥ इति ।

'बालिशस्तु शिशौ मूर्खे' इति मेदिनी । 'परच्छिद्रमेव पश्यति बालिश' इति पाठान्तरमस्ति, तेन नार्थभेदः । छिद्र भेदने, ततो घञ् । यद्वा छिदिर द्वैधीकरणे, छिद्रयते । 'स्फायि तञ्चि' इत्यादिना रक् । प्राङ् निरुक्तमन्यत् ॥ ५३ ॥

धूर्त्ततायाः उपचारपूर्वकत्वमाह स इति । कैतवः शाठ्यं कापट्यमतिचातुर्य्यमिति यावत् । उपचारेण कमनीयवस्तुना सेवनम् । यद्वा काम्येन वस्तुना सह इति ज्ञेयम् । उपचारः सेवापरितोषयोरुपकरणम् । अन्ये तु 'निग्रहः सेवा व्यवहारः उत्कोच' इत्याहुः । तेन सह वर्त्तमानः सोपचारः । कैतवः प्रायेण तादृश एव स्यात् । 'कितवो धूर्त्तवन्मत्ते वञ्चके कनकाह्वये' इति विश्वः । 'कैतवन्तु छले द्युते कैतवे कितवे रिपौ' इति मेदिन्यपि । कितं वायति, ओ वै शोषणे, कितने वातीति वा ।

**काम्यैर्विशेषैरुपचरणमुपचारः ॥ ५५ ॥**

**अत्युपचारः शङ्कितव्यः ॥ ५६ ॥**

---

वा गति गन्धनयोः । अनयोः 'आतोऽनुप' इत्यादिना कः । कितवस्य कर्म्म कैतवम् । 'युवादित्वादण्' । धूर्त्तेन मधुरवाचा रमणीयवस्तु प्रदर्शनेन च स्वकार्य्यसाधनं क्रियत इति भावः । 'नोपचारः कैतवः' इत्यपि पाठान्तरमस्ति । यत् कैतवं तदुपचारेण सहितं न भवति । परन्त तत् सुकरार्थं सूत्रम् ॥ ५४ ॥

स्वोक्तोपचारशब्दं विशदयन्नाह काम्यैरिति । काम्यैः कामनान्वितवस्तुभिः यदुपचरणं लोकानां परितुष्टये स्वकार्य्यसाधनाय वा सेवनन्तदुपचारः । तेनोपचारेण कितवः धूर्त्तताम् अभिव्यज्य कार्य्यं निष्पादयति । यत्किञ्चित् फलमुद्दिश्य कायिकं कर्म्म क्रियते तत्काम्यम् । अन्यत्र च—

"काम्यन्तु कामनायुक्तं यत्कर्म्म कायिकं नरः ।
करोति फलसिद्ध्यर्थं तत्काम्यं परिकीर्त्तितम्" ॥
"यद् यद्धि कुरुते जन्तुस्तत्तत्कामस्य चेष्टितम्" ।

इति ग्रन्थान्तरे च । कमु कान्तौ, काम्यते इत्यतो'ऽचोयत्' । यद्वा कामोऽस्ति यत्रेत्यन्यत्रापीत्यादिना यप् । सूत्रमिदं पूर्व्वस्य वैशद्यकरणभूतमिवाभाति । उपचारः । चर गतौ, उपपूर्व्वाच्चरतेर्घञ् ॥ ५५ ॥

प्रभूतोपचारस्य सन्देहजनकत्वमाह अतीति । अत्युपचारः समधिक-कार्य्य-साधक-लोभनीय-सामग्री । स परिमाणाधिक्यात्

**चिर-परिचितानां त्यागो दुष्करः ॥ ५७ ॥**

**श्वः सहस्रादद्य काकिनी श्रेयसी ॥ ५८ ॥**

---

शङ्कितव्यः। सन्देहार्हः आशङ्कनीयः 'अति सर्व्वत्र वर्ज्जये'-दिति नीतिज्ञा आहुः। 'सर्व्वमत्यन्तगर्हित'मिति च प्रोचुः प्राचीनाः। तन्नियमादधिकोपचारदर्शनेन तदा नेनारं प्रति शङ्केव बलवती स्यात्। चिरपरिचितानामपि प्रचुरोपचारः शङ्कोद्रेके हेतुः। उपपूर्व्वाच्चरते घञ्। सुगममन्यत् ॥ ५६ ॥

सुदीर्घकालपरिज्ञातजनानां तद्दत्तोपचाराणाञ्च परिहारे दुष्करत्वमाह चिरेति। चिरपरिचितानां सुदीर्घकालज्ञातानां कार्य्ये त्यागो दुष्करः। यद्वा तद्दत्तोपचाराणां परिहारो दुर्घटः। ये तु चिरपरिचितास्ते आत्मीयवदवतिष्ठन्ते। अतस्तेषां त्यागोऽपरिहार्य्यः। तत्र सूक्ष्मरीत्या विचिन्त्य कार्य्यं विधेयम्। कुत्रचिदादर्शे पूर्व्वसूत्रे 'चिरपरिचितानाम् अत्युपचारः शङ्कितव्यः' इत्थं पाठोऽस्ति। तदात्वे सुगमार्थं सूत्रम्। परिपूर्व्वात् 'चिञ् चयने' इत्यस्माच्चिनोतेः क्तः। दुरुपसर्गात् करोतेः 'ईषद्दुःसु' इत्यादिना खल् प्रत्ययः ॥ ५७ ॥

प्रत्यक्षतोऽल्पलाभापेक्षया भविष्यदनुमेयबहुलाभो न श्रेयानिति दर्शयन्नाह श्व इति। श्वः अनागतेऽह्नि आगामिनि दिवस इति। सहस्रात्। सहस्रसंख्यककार्य्यकरणादद्य स्वल्पमपि करणं युक्तम्। भविष्यतोऽनुपस्थितेः। वर्त्तमानस्य च करायत्तत्वात्। यदा सम्प्रतिकाले अल्पलाभोऽप्यधिको मन्यते। भवि-

## श्वो मयूरादद्य कपोतो वरः ॥ ५६ ॥

ष्यति काले विपुललाभात् । यद्यस्मिन् समये काकिनी पणस्य तुर्य्यभागः । साक्षाल्लब्धः । तस्मात् सहस्रं काले भविष्यति न साम्प्रतम् । काकिन्युक्ता लीलावत्याम्—

'वराटकानां दशकद्वयं यत् सा काकिनी ताश्च पणश्चतस्रः' ।

सा तु श्रेयसो प्रशस्ता भवति । अन्यच्च—

"पणगण्डकयोस्तुर्य्य उदमानस्य काकिनी" ।

इति रुद्रः । तथैव रभसोऽपि—

"पणोदमानगण्डानां तुर्य्यांशेऽपि च काकिनी" ।

कर्म्मनिपुणाः प्रोचुः । 'आगामिनि करणीयं यत्तदद्य कर्त्तव्य'-मिति । तथाहि—

"श्वः कार्य्यमद्य कर्त्तव्यं पूर्व्वाह्णे चापराह्णिकम् ।
नहि प्रतीक्षते मृत्युः कृतमस्य नवा कृतम्" ॥

अन्यत्र पाठान्तरमेवमस्ति 'गौर्दुष्करा श्वसहस्रादेकाकिनी श्रेयसी' । सहस्रसारमेयेभ्यः एकैव गौर्धेनुर्दुष्टा अदम्यापि श्रेयसी श्रेष्ठा भवति । यद्वा दुष्कराश्वसहस्रादेकापि गौः प्रशस्ता स्यात् । श्व इति । आगामि दिनम् । अह्नः पृषोदरादित्वात् साधुः । काकिनी । कक लौल्ये, ककनं काकः । घञा सिद्धा । अण शब्दे, काकमनति । ततोऽणा पृषोदरादित्वाच्च साधुः । अतिशयेन प्रशस्ता, 'प्रशस्य श्रः' । स्त्रियां ङीप् ॥ ५८ ॥

पूर्व्वसूत्रोदाहरणमुखेन तत् स्पष्टीकरणमाह श्व इति । श्वः

## अतिसङ्गो दोषमुत्पादयति ॥ ६० ॥

आगामिनि दिवसे। अद्य वर्त्तमानाह्नि। मयूरात् शिखिनः। कपोतः पारावतः कलरव इति। वरः श्रेष्ठः श्रेयानिति। श्वो भविष्यति किमपि भवति नैव वा भवति अनागतत्वेनानिश्चितत्वात्। अद्य यद् भवति तत्करायत्तं समक्षमिति। अत उपस्थितं स्वल्पं श्रेयः, अनागते अधिकमपि सन्दिग्धत्वेन नोपादेयमिति भावः। सन्निहितलाभे अतिदूरगमनं विज्ञैः परिहार्य्यञ्चेति। सूत्रमेतत् कामसूत्रेऽस्य दृश्यते। तथा च कामसूत्रे द्वितीयाध्याये 'वरमद्य कपोतः श्वो मयूरात्' इति। अनयोः कामसूत्र-चाणक्य-सूत्रयोः पौर्व्वापर्य्यं चिन्त्यम्। 'मयूर शिखिनौ वर्हीं। मयूरे कुक्कुटे पुंसि शिखावत्यन्यलिङ्गकः' इति मेदिनी। मय गतौ, मयते। खर्ज्जादित्वादूरः। यद्वा रु शब्दे, मह्यां रौतीति 'अन्येभ्योऽपि दृश्यते' इति डः। कपोत इति। ततः पृषोदरादि। 'पारावतः कलरवः कपोतः' इत्यमरः। कस्य वायोः पोत इव, को वायुः पोतो नौरिवास्य वेति ॥ ५८ ॥

अविचारेण बहुसङ्गकरणं कार्य्यहानिः सन्देहान्निषेधति अतीति। अतिसङ्गो लोकैः सार्द्धम् अत्यासक्तिः सम्मेलनम्। येन केनापि यत्र तत्र सङ्गतिः। दोषम्, आर्थिकं शारीरिकमैन्द्रयिकञ्चानिष्टं समुत्पादयति जनयतीत्यर्थः। यथातिसङ्गोदोषप्रदः वृथा कालक्षयकरः कार्य्यहानिकश्च तथा हीनसङ्गोपि महाऽहितकरः। तथा च कापिलं सूत्रं 'बहुभिः सङ्गो न कार्य्यः

## सर्व्वं जयति अक्रोधः ॥ ६१ ॥

कुमारी कङ्कनवत्'। अत्रार्थे पौराणश्च 'वासे बहूनां कलहो भवेद्वार्त्ता द्वयोरपीति'। हीनसङ्ग निषेधमाह नीतिज्ञः—

"लघुसङ्गेन राजेन्द्र! लघुतामेति निश्चितम्।
यथा शुष्कतृणालम्बो लोहो हि प्लवते जले" ॥ इति।

अपरञ्च 'भुजङ्गव्यासङ्गी वमति गरलं चन्दनरसः' इति च। यश्च कर्म्मणो मतिमान् बहुकार्य्यव्यासक्तस्तस्य कार्य्यानुरोधाद् बहुसङ्गोऽति सङ्गो वा दोषाय यथा वणिज इति रहस्यम्। 'मेलने सङ्गसङ्गमौ' इत्यमरः। ष्वञ्ज सङ्गे, सञ्जनम्। ततो घञा सिद्धः ॥ ६० ॥

कोपहीनस्य मतिमतः सकलक्रोधविषये जयमाह सर्व्वमिति। सर्व्वं सकललोकं कार्य्यं वा। अक्रोधो रागहीनः। विनीतः सुशील इति यावत्। जयति अतिक्रम्य उद्गच्छति। तेन विपदुत्तीर्णोऽपि भवति। क्रोधस्य विगानमुक्तं—

"क्रोधाद्दुर्य्योधनो नष्टः क्रोधान्नष्टो हि रावणः।
शिशुपालस्तथा क्रोधाद् विनष्टो मधुकैटभः" ॥

गीतायाञ्च—

"काम एषः क्रोध एष रजोगुण-समुद्भवः।
महाशनो महापाप्मा विद्ध्येनमिह वैरिणम्" ॥

अक्रोधाच्छीलं वर्द्धते। तेन शीलेन लोकं वशीकुर्य्यादिति सर्व्वमित्यस्य भावार्थः। 'वीतराग-जन्मादर्शनात्' इति न्यायसूत्रम्।

**मतिमुत्तिष्ठन् जयति ॥ ६२ ॥**

**यद्यपकारिणि कोपः कोपे कोप एव कर्त्तव्यः ॥ ६३ ॥**

---

सम्यक् त्यक्तरागस्य जन्मापि न भवतीति सूत्रार्थः। तेन विषयेषु सम्यक् क्रोधासक्त्याद्यभावविशिष्टस्य जन्माभावोऽपि सूच्यते। 'क्रोधो भामः क्रुधा रुषा' इति शब्दार्णवः। तस्मान्मतिमता सर्व्वस्मिनक्रोधेन भाव्यम्। क्रुध कोपे, क्रोधनम्। ततो भावे घञ् ॥ ६१ ॥

क्रोधविरहितस्यान्यकार्य्यमाह मतिमिति। मतिम् असद्-बुद्धिम्। उत्तिष्ठन् विद्या-धनार्जनादौ उद्गच्छन् पुमान् जयति। यद्वा मतिं नीचाभिमुखगामिनीं बुद्धिमभ्युन्नतिमिच्छन् जनो जयति तामभिभवति क्रोधाभावादित्यर्थः। अनेन पूर्व्वसूत्रस्य रहस्यं व्यज्यते। 'धीः प्रज्ञा शेमुषी मतिः' इत्यमरः। सूत्रमिदं आदर्शग्रन्थान्तरे नास्ति। मन ज्ञाने, मन्यते अनया, मननं वेति क्तिन् ॥ ६२ ॥

अनिष्टाचरणशीलस्य तद्दर्शनेन तस्य महानिष्टसाधने निषेध-माह यदीति। यद्यप्यपकारिणि पुरुषे अनिष्टकारके जने दृश्यते कोपः। तदा तादृशे कोपयुक्ते पुंसि। कोप एव क्रोध एव कर्त्तव्यः। नाधिकस्ततो व्याघातः प्राणहानादिः। तदा लघ्वपराधे गुरुदण्डः स्यात्। उक्तञ्च 'कृते प्रतिकृतिं कुर्य्या-

**मतिमत्सु मूर्खमित्रगुरुवल्लभेषु विवादो न कर्त्तव्यः ॥ ६४ ॥**

**नास्त्यपिशाचमैश्वर्य्यम् ॥ ६५ ॥**

---

हिंसिते प्रतिहिंसनम्' इति । यद्वा कोपोऽस्यास्तीति अर्शादित्वादच् । कोपि तद्युक्त-पुरुषे इति । 'कोप क्रोधामर्षरोषप्रतिघाः' इत्यमरः । द्वेषोऽनिष्टापमान-बुद्ध्या-चित्तोज्ज्वलनं कोपः । कुप क्रोधे, कुप्यति । ततो भावे घञ् ॥ ६२ ॥

अश्रेष्ठैर्हीनैश्च सार्द्धं विवादकरणनिषेधमाह मतीति । मतिमत्सु धीमत्-कुशलेषु । एवं मूर्खोऽज्ञो मूढ़ इति । मित्रं सुहृत्सखिरिति । गुरुराचार्य्यः श्रेष्ठ-जनः । वल्लभः प्रभुः स्वामी । एषु जनेषु । विवादो विरोधः कलहो न कर्त्तव्यः । यद्वा मतिमत्सु मूर्खादिष्विति बोध्यम् । साकमेभिः कृते विवादे शिष्टाचारलङ्घनम् अनिष्टापातः, पराजयो गौरवहानश्चावश्यम्भावीति । 'मतिर्ज्ञानमभिप्रायः धीः प्रज्ञा बुद्धिरित्यपि' इति । 'वल्लभो दयितेऽध्यक्षे सल्लक्षण तुरङ्गमे' इति विश्वः । वल्ल संवरणे, वल्लते वल्लयते च । 'रासिवल्लिभ्याञ्च' इत्यभच् । अन्यत् प्रागुक्तमिति ॥ ६४ ॥

ऐश्वर्य्यस्य तामसिकभावयुक्तत्वमाह नेति । अपैशाचम् अतामसिकं सत्यान्वितम् । ऐश्वर्य्यं वैभवमतुलसम्पन्नास्ति । यथाहि यत्र धनादेः प्राचुर्य्यं लाभे अर्जने च तत्र क्रोध-काम-

## नास्ति धनवतां कर्म्मसु श्रमः ॥ ६६ ॥

---

कापत्यादि-व्यवहार-क्षेत्रबाहुल्यं नियतमिति । ऐश्वर्य्यस्य प्राचुर्य्ये चास्ति लोभक्रोधाभिमानानामुद्दीप्तत्वं तद्‌ वैपुल्यञ्च । विभवे सति तद्विरहो जगति दुर्लभः । कामादीनामनौत्कक्ये परमत्रै-वैहिकी शान्तिः परत्र परमा निर्वृतिश्च सम्भवति । प्रभुत्व-बहुनेतृत्व-निग्रहकारित्वादीनि केचनैश्वर्य्यपदेन व्यवहरन्ति । ईश्वरस्य प्रभोर्भावः शक्तिविशेषोऽलौकिकी शक्तिर्वा । 'गुणवचन' इत्यादिना ईश्वरशब्दात् ष्यञ् । पिशाचः । अश भोजने । पिशितमश्नातीति कर्म्मण्यण् । ततः पृषोदरादि । तालव्यमध्योऽयं निर्देशः । भावप्रधाननिर्देशात् । पिशाचत्वम् । तत्शून्यमैश्वर्य्यं नास्ति । 'नास्त्यविशालमैश्वर्य्य'मिति पाठभेदो-ऽस्ति, तेनैश्वर्य्यमविशालमत्यल्पं नास्ति तत् पुष्कलमेवास्तीत्यर्थः ॥ ६५ ॥

धनिनां कर्म्मसु श्रमाभावमाह नेति । धनवतां धनिनां वैभवान्वितानाम् । कर्म्मस्वनुष्ठेय-स्वपरकार्य्येषु । श्रमः क्लेशः-देहेन्द्रियमनसामवसादजनकव्यापारः । नास्ति न विद्यते । अर्थवन्तो जना धनवितरणपूर्व्वकं स्वयं कर्म्मकरैश्च सर्व्वमेव कार्य्यं स्वपरहिताय नियतं सम्पादयन्ति । कुतो धनिनां श्रमः क्लेशः कष्टं श्रमो ग्लानं तथा घर्म्मार्त्तेत्यपीति' वोपालितः । श्रमेर्हलश्चेति घञ् । कर्म्मेति । डु कृञ् करणे, क्रियते । 'कृञा भावे कर्म्मणि च मनिन्' इत्यौणादिकाम्मनिन् । 'कर्म्म व्याप्य

## नास्ति यानवतां गतिश्रमः ॥ ६७ ॥

---

क्रियायाञ्चे'ति रुद्रः । 'नास्ति धनवतां सुकर्म्मसु श्रमः' इत्थं सूत्रपाठे सुगमार्थं तद्बोध्यम् । दीनानान्तु श्रमः सर्व्वकर्म्मसु । धनिनां तेषु सर्व्वमक्लेशकरम् ॥ ६६ ॥

शकटवतां मार्गश्रमाभावमाह नेति । यानवतां शकट-शिविका-पोतादिमतां जनानाम् । गतिर्गमनम् । तत्र श्रमः क्लेशो नास्ति । यानवन्तो हि तत्तद् यानमारुह्य जले स्थले नभोमण्डलेऽनायासेन यान्ति । अतस्तेषां गमने श्रमाभावः । यानानि सपद-निष्पद-जलग-स्थलग-नभोगभेदेन बहूनि सन्ति । तथा च कामसूत्रव्याख्याने यशोधरीयेऽप्येवमुक्तम् । 'सजीवानां निर्जीवानां यन्त्राणां यानोदकसङ्ग्रामार्थं घटनाशास्त्रं विश्व-कर्म्मभिः प्रोक्तम्' । तत्र सजीवानि शिविकाश्वगोमहिषाजोष्ट्र-शकटादीनि । द्विपद निष्पद-यानविषये युक्तिकल्पतरौ वर्णित-मस्ति । पुष्पकविषयस्तु श्रीभोजराजीयसमराङ्गन सूत्रधारे सम्यग् अङ्कितोऽस्ति । विश्वकर्म्म-प्रोक्तं वायु-पारदादि परिचालितं यन्त्र-मिदानीं नोपलभ्यते ।

"जलगं स्थलगं यानं याप्ययानन्तथैव च" ।

इति वोपालितः । अन्यच्च नृपस्य दुर्भिक्षे आश्रयणीयानि—

"शकटः शाकिनी गावो यानमास्कन्दनं खनम् ।
अनूपः पर्व्वतो राजा दुर्भिक्षे नववृत्तयः' ॥

**यस्मिन् कर्म्मणि यः कुशलः स तस्मिन्नियोक्तव्यः ॥ ६८ ॥**

**अलोहमयं निगलं कलत्रम् ॥ ६९ ॥**

---

इति। खनमित्यत्र। 'धनमिति' कुत्रचित्पाठः यान्ति अनेनेति। या प्रापणे, इत्यस्मात् 'करणाधिकरणयो'रिति ल्युट् ॥ ६७ ॥

योग्यकर्म्मणि कुशलस्य नियोगमाह यस्मिन्निति। यस्मिन् कर्म्मणि कार्य्ये:। यः पुमान् कुशलो दक्षो निपुण इति। कार्य्यसमर्थो जनस्तस्मिन् कार्य्ये, आध्यक्ष्य-साचिव्य-विचार-परिदर्शन-वार्त्ताहर-द्वारपाल-कोष-वाणिज्य वार्त्तादिषु। नियोक्तव्यः प्रयोक्तव्यः। अयोग्यस्य स्थाने नियोगे योग्यस्य चास्थाने नियोगे कर्म्महानिरविचारश्च स्यादिति। 'स तस्मिन् नाध्यक्षे' इति सूत्रमध्ये पाठान्तरमस्ति। तस्य त्वनावश्यकत्वमत्राभाति। 'कुशलः शिक्षिते त्रिषु। क्षेमे च सुकृते चापि पर्य्याप्तौ च नपुंसकम्' इति मेदिनी। कुशलम्। कौ-पृथिव्यां शलति चालयति राजकार्य्याणि अत्र निजर्थे लक्षणा च स्यात्। यद्वा 'कुः पापेषदर्थयोः'। कोः पापात् शलति बुद्धिवैभवाद् इति च। कुशान् लाति इति वा कः। शल्ल चलने, इत्यतः पचाद्यच्। एतस्य विरचित राजनीतौ चास्ति 'स्थानेष्वेव नियुज्यन्ते भृत्याश्चाभरणानिचे'त्युक्तिः ॥ ६८ ॥

कलत्रस्य संसारबन्धन-सूत्रत्वमाह अलोहेति। कलत्रं

## दुष्कलत्रं मनस्विनां शरीर-कर्षणम् ॥७०।

पत्नी भार्य्या चेति। सा च निगलं निगड़ं संसारकारालये पुंसां बन्धनरज्जुः। अलोहमयमसुदृढ़ं भवति। बन्धन-शृङ्खलन्तु अपराधिनां पश्वादीनामन्येषाञ्च लोहनिर्म्मितं सुदृढ़ं भवति। कलत्ररूपा बन्धनरज्जुस्तु प्रीति-सुख-लावण्य-स्नेह-सौहृद्यान्वितत्वेन संसारकारागृहे अलोहमयं प्रेम-सुखमयं स्यात्। बन्धनपाशो लोहमयः स्वर्णमयो वा भवतु। यद्वा सुधासिक्तः स्यात्तथापि तद्बन्धनजनित-क्लेशोऽवश्यम्भवतीति नात्रशङ्कावसरः। अन्यद्बन्धनन्तु सामयिकं, कलत्ररूपपाशबन्धनं दीर्घकालेनानुभवति। यस्यत्वेतादृशं बन्धनं नास्ति स नरः संसारे सम्यक् सुखी। यदि वा कलत्रं कुलस्त्री पतिप्राणा प्रसूतपुत्त्रा स्यात्तदा सा अमृतायते। अलौहमयत्वेनाति पेलवतास्याः सूचिता। शास्त्र-कृद्भिरप्युक्तं 'लोह-काञ्चनजातत्वे शृङ्खलात्वं न भिद्यते'। अत्र निगलमिति। उलयोरैक्यं बोध्यम्। 'अन्दूः स्त्रियां स्यान्निगड़े प्रभेदे भूषणस्य च' इति मेदिनी। लोहः। लुह गार्द्धे, लुह्यते। ततो घञ्। गल अदने, गलति। अचा सिद्धम्, निर्गतो गड़ः सेचनमस्मात्, कठिनत्वादिति निगलम्। 'दुर्गस्थाने नृपादीनां कलत्रं श्रोणि-भार्य्ययोः' इति रभसः। त्रैङ् पालने, कलं त्रायते। ततः कादेशः। अथवा कड़ शासने, कडति। ततो बाहुलकादत्रन् च। गड़ सेचने, गड़ति गद्यते, 'गड़े रादेशश्च कः, इत्यत्रन् वा ॥६८॥

दुर्भार्य्यया मतिमतां शरीरहानिमाह दुरिति। मनस्विनां

अप्रमत्तो दारान् निरीक्षेत॥ ७१ ॥

महामतीनां प्रेक्षापूर्व्वकारिणामिति। दुष्कलत्रम्। दुष्टं दुःशील-मवाध्यं कलत्रं भार्य्येति यावत्। शरीरं कायं सा कर्षयति। क्लेशोद्वेगरोगादिभिः। शरीरकर्षणं करोति। तदुक्तं लघुचाणक्ये—

"दुष्टा भार्य्या शठं मित्रं भृत्यश्चोत्तरदायकः।
ससर्पे च गृहे वासो मृत्युरेव न संशयः" ॥

अन्यच्च तत्रैव—

"माता यस्य गृहे नास्ति भार्य्या चाप्रियवादिनी।
अरण्यं तेन गन्तव्यं यथारण्यं तथा गृहम्" ॥

कलत्रस्य पतिशरीरार्द्धरूपत्वात्तस्या दुःशीलत्वेऽवश्यं शरीरकर्षण-सम्भावना बलवतीति। तथा च चाणक्यराजनीतौ 'अर्द्धं भार्य्या शरीरस्ये'ति। स्मृतौ च—

"शरीरार्द्धं स्मृता जाया पुण्य-पाप-फले समा"।

'कलत्रं श्रोणिभार्य्ययोः' इति कोषः।

"मनस्वि-गर्हितं मार्गं समारोढुमसाम्प्रतम्"।

इति कविसमयः। प्रशस्तं मनो विद्यते अस्येति। अत्र मन-स्विपदोपादानेनान्येषां शरीरकर्षणमतिसुकरमिति सूचितम्। शीर्य्यते रोगादिनेति शरीरम्। शृणातेर्वा धातोः 'कॄ शॄ, पॄ' इत्यादिना ईरन्॥ ७० ॥

धैर्य्यमाश्रित्य स्त्रीणां सन्दर्शनं कार्य्यमित्याह एतीति। अप्र-मत्तः स्थिरमानसः सन्। अकाममना दारान् नारीं स्त्रियं

## स्त्रीषु किञ्चिदपि न विश्वसेत् ॥ ७२ ॥

निरोक्षेतावलोकयेदिति । तेन तस्याः सम्यक् ज्ञानं जायते । कामा-वृद्धेः स्वास्थ्यहानिर्नस्यात् । न केवलं स्त्रीसन्दर्शने अपि तु सर्व्वेषु कार्य्येष्वप्रमत्तेन भाव्यम् । प्रमत्तस्यावलोकने च कामवृद्धौ विपदायातीति । यद्वा सावहित-मानसः स्त्रियं पश्येत् पालयेच्च । उक्तञ्च 'अङ्के स्थितापि युवतिः परिरक्षणीया' इति । दाराशब्दस्य नित्यबहुत्वं पुंसि वृत्तिश्च । तथा च दीर्गाः 'एकार्थेऽपि लिङ्ग-वचनभेदो यथा 'दाराः कलत्रं भार्य्येति' । 'प्रमत्तोऽनवहित-श्चित्तभ्रान्त-चञ्चलौ' । 'भार्य्या जायाथ पुंभूम्नि दाराः स्यात्तु-कुटुम्बिनी' इत्यमरः । दारयति भ्रातॄन्, दॄ विदारणे, णिजन्तः । 'दारजारौ कर्त्तरि णिलुक् च' इति घञ् ॥ ७१ ॥

सामान्यतो योषित्सु स्वभावपेलवत्वाद् विश्वासाभावमाह स्त्रीष्विति । स्त्रीष्ववलासु, किञ्चिदपि स्वल्पमपि । न विश्वसेत्, नैव दृढ़प्रत्ययं कुर्य्यात् । तासां सुकोमलहृदयत्वात् । शुक्रनीतौ च—

"शृङ्गिणां नखिनाञ्चैव दंष्ट्रिणां दुर्जनस्य च ।
नदीनां वसतौ स्त्रीणां विश्वासं नैव कारयेत्" ॥ इति ।

ग्रन्थान्तरे—

"विश्वासो नैव कर्त्तव्यः स्त्रीषु राजकुलेषु च" ।

अन्यच्च—"स्त्रीषु गुह्यं न वक्तव्यं रात्रौ नैव च नैव च" ।

अपरञ्च—'गृहीतार्थं न मुञ्चन्ति नारी वर्व्वरकच्छपासे'ति ।

तासां सारल्यान्निगूढ़ विषयाणां रक्षण-धारण-गोपनेषु शक्ति-

## न समाधिः स्त्रीषु लोकज्ञता च ॥ ७३ ॥

लघुत्वमविश्वासे वीजम्। अन्यच्चैतासां गुणदोषादिकं चाणक्यराजनीतौ बह्वस्ति। ब्रह्मवैवर्त्ते प्रकृतिखण्डे च—

"श्रुतौ पुराणे यासाञ्च चरित्रमनिरूपितम्।
तासु को विश्वसेत् प्राज्ञोऽप्राज्ञाञ्च दुराशयाम्" ॥

'स्त्री योषिदवला योषा नारी' इत्यमरः। किञ्चिदिति। किम् शब्दादनिश्चयार्थे चित्प्रत्ययः। स्त्रीपदनिरुक्तिः प्रागुक्ता ॥७२॥

स्त्रीषु सारल्यात्मनः प्रणिधान-सामाजिकत्वयोर्निषेधमाह नेति। स्त्रीषु योषित्स्ववलास्विति। समाधिश्चित्तस्यैकनिष्ठता, कस्मिन्नपि विषये मनः सूक्ष्मरीत्या सन्निरोधो योगाख्यो मनः प्रणिधानञ्च नास्ति। लोकज्ञता, लोकाना व्यवहारः तन्नैपुण्यम्। लौकिकतत्त्वे पुरुषवद् अभिज्ञता वा। पुंस इव तासां शक्तेर्दार्ढ्याभावादेतौ नस्तः। 'लोलता चे'ति भिन्नपाठे तासां चञ्चलस्वाभाव्यमित्यर्थः। 'समाधि र्ना समर्थने। ध्याने वैरस्य नियमे काव्यस्य च गुणान्तरे' इति रभसः। 'समाधिश्चित्तैकाग्रता' इति योगिनः। 'समाधिः समतावस्था जीवात्म-परमात्मनोः' इति स्मृतौ च। अन्यत् योगदर्शनभाष्ये पुष्कलमस्ति। लौकिकज्ञत्वविषये उक्तं दुर्गसिंहेन—

"वैदिका लौकिकाश्चैव ये यथोक्तास्तथैव ते।
निर्णीतार्थास्तु विज्ञेया लोकात्तेषामसंग्रहः" ॥

लोकं तद्वृत्तञ्च जानातीति लोकज्ञः तद्भावो लोकज्ञता, तत्र

**गुरूणां माता गरीयसी ॥ ७४ ॥**

**सर्व्वावस्थासु माता भर्त्तव्या ॥ ७५ ॥**

---

'भावे त्वतलौ'। लौकिकता वेति पाठे। लोकाय हितं इत्यर्थे ठक्। लौकिकः। तं जानातीति लौकिकज्ञः ॥ ७३ ॥

सर्व्वेषु गुरुजनेषु जनन्या गरीयस्त्वमाह गुरूणामिति। गुरूणां गुरुजनानां पितृ-पितामहोपाध्यायान्नदातृप्रभृतीनाम् मध्ये माता जननी प्रसूतिः। गरीयसी तेषु अतिश्रेष्ठा भवति। तदुक्तं—

"पितुरभ्यधिका माता गर्भधारण-पोषणात्।
अतो हि त्रिषु लोकेषु नास्ति मातृ-समो गुरुः" ॥ इति।

स्मृतौ च—

"अर्हन्ति पितरस्त्रीन् त्रीन् गर्भाधारा गरीयसी"।

अत्र गर्भाधारा जननी। दशमासकाले च गर्भ धारकत्वेन स्तन्य-दातृत्वेन च जनकतो जननी श्रेष्ठा। लोकेषु इति श्रैष्ठ्य-ख्यापनाय। मर्त्त्यलोकेषु च स्नेह-कारुण्य धर्म्म-क्लेश-पालन-त्यागाधारभूत-जननी-तुल्यो गुरुः कोऽपि न विद्यते। अतोऽस्या गरीयस्त्वं तथ्यमेव। 'जनयित्री प्रसूर्माता जननी' इत्यमरः। 'गुरु र्गीष्पति पित्राद्या'वित्यरः। गॄ शब्दे, गृणाति। 'कॄ ग्रोरुच्च' इत्युः। मा माने, माति गर्भोऽस्यां 'नप्तृ नेष्टृ' इत्यौणादिकसूत्रात्साधुः ॥ ७४ ॥

सकलदशासु कालेषु च गुरु-श्रेष्ठत्वाज् जनन्याः पालनमाह

वैरूप्यमलङ्कारेण च्छाद्यते ॥ ७६ ॥

सर्व्वावस्थास्विति । सर्व्वाः सकलावस्था दशाः सुखदुःखमयास्तासु । सुखदुःखसङ्कुलजीवनव्यापारेषु च । समधिकमारोदुर्भिक्षकष्टदशामापन्नेषु वा । माता प्रसूतिः भर्त्तव्या । वस्त्रान्नभूषणादिभिर्यत्नतः पालनीया सेव्या चेति । तदुक्तं धर्म्मशास्त्रकृद्भिः—

"वृद्धौ च मातापितरौ साध्वी भार्य्या सुतः शिशुः ।
अप्यकार्य्य शतं कृत्वा भर्त्तव्या मनुरब्रवीत्" ॥

अपित्वात्मवत् सततं पालनीया, नहि दुःखमयं स्वं जीवनं दृष्ट्वा सा परिहार्य्या । कौर्म्मे उपविभागे—

"गुरूणामपि सर्वेषां पूज्याः पञ्च विशेषतः ।
तेषामाद्यास्त्रयः श्रेष्ठाः तेषां माता सुपूजिता" इति ।

वह्निपुराणे च

'मातृभ्योऽन्योनदेवोऽस्ति तस्मात् पूज्या सदा सुतैः' ।

सर्व्वेति । सृ गतौ, सरति । 'सर्व्वनिघृष्व' इत्यौणादिकसूत्रात् सिद्धम् । अवस्थेति । अवपूर्व्वात् स्थाधातो रङ । व्यवस्थायामिति ज्ञापकात् ॥ ७५ ॥

भूषणादिभिः सौन्दर्य्य प्रकाशमाह वैरूप्यमिति । अलङ्कारेण अम्बराभरणादिना देहस्य वैरूप्यमसौन्दर्य्यमसौष्ठवं मालिन्यमिति यावत् । छाद्यते आव्रियते पिधीयत इति । यस्य तु स्वाभाविक-सुषमा नास्ति तस्य वसनभूषणादिना शरीरसौन्दर्य्यं वर्द्धयिष्यते । यस्य स्वाभाविकसौन्दर्य्यं विद्यते तस्यालङ्कारादेः सामान्यप्रयोजनम् । महाकविरपि वक्ति 'किमिव हि मधुराणां

स्त्रीणां भूषणं लज्जा ॥ ७७ ॥

विप्राणां भूषणं वेदः ॥ ७८ ॥

---

मण्डनं नाकृतीनाम्'। 'अलङ्कारस्त्वाभरणं परिस्कारो विभूषण'-मित्यमरः। विगतं रूपं विरूपन्तस्य भावो वैरूप्य' रूपाभावः। रुपु विमोहने, रोपयति, रूपधातोरच्प्रत्ययः। 'अन्येषामपि' इत्यादिनोकारदीर्घः। कृञ् करणे, अलङ्क्रियतेऽनेनेति अलं पूर्व्वात् कृञो घञा सिद्धम् ॥ ७६ ॥

नारीणां विशेषणमाह स्त्रीणामिति। स्त्रीणां नारीणां योषितामिति। भूषणमाभरणमलङ्कारः। तदेव लज्जा व्रीड़ेति। लज्जा-दोष-पापान्यायेभ्योऽवनमनमात्मसङ्कोचो वेति। 'व्रीड़ोऽस्त्रीवे त्रपा लज्जा' इति मेदिनी। अन्यच्च 'क्षमा लज्जा च योषिताम्'। एते द्वे तासां विभूषणमिति नीतिविद्भि-रुक्तम्। लघुचाणक्ये च 'नारीणां भूषणं लज्जा, विद्या सर्व्वस्य भूषणम्'। लज्जा इत्यत्र पतिरिति पाठो वृद्धचाणक्ये। 'अक-र्त्तव्ये कर्म्मणि परज्ञानभयं लज्जे'ति अपरे प्रोचुः। पुंसां पक्षे 'आहारे व्यवहारे च त्यक्तलज्जः सदा भवेत्' इति वृद्धसम्मतम्। आहारे तु यावत् क्षुन्निवृत्तिं, पथ्यं हितं मेध्यञ्च भुञ्जीत। व्यवहारे च सलज्जत्वे कार्य्यहानिः बुद्धिवृत्तिसङ्कोचश्च। भूष् अलङ्कारे, भूष्यते अनेन। ततो ल्युट्। ओलस्जी व्रीड़े, लज्जा। ततः 'भलां जश् भशि'। इत्यनेनाप्रत्ययः ॥ ७७ ॥

भूषण-प्रसङ्गतो ब्राह्मणानामलङ्कारमाह विप्राणामिति।

सर्व्वेषां भूषणं धर्म्मः ॥ ७६ ॥

विप्राणां ब्राह्मणानां मुखजानामिति। भूषणमण्डनमलङ्कारः। वेदाः ऋगादयः। ऋक्-साम यजुरथर्वाणश्चत्वारः। 'यत्रार्थवशेन पादव्यवस्था सा ऋक्'। 'गीतिषु सामाख्या'। 'शेषे यजुः'। 'शान्ति-पौष्टिक-नीत्यादिप्रत्यायकमथर्व्व'। सामान्यतः चतुर्षु वेदेषु त्रयीति समाख्या। एतैरेव स्वाध्यायादिभिः विप्रा अलङ्क्रियन्ते। नान्यैरम्बरभूरत्नालङ्कारैः। उक्तञ्च मनुना—

"वेदमेव सदाभ्यसेत् तपस्तप्स्यन् द्विजोत्तमः।
वेदाभ्यासो हि विप्रस्य तपः परमिहोच्यते" ॥

अनधीयानो विप्रः काष्ठमयवारणवत् धर्म्ममयमृगवच्च भवति। वेद इत्युपलक्षणं याज्ञवल्क्यस्मृत्युक्त-चतुर्दशविद्याश्चाध्येतव्याः। प्राग् वेदानधीत्य पश्चाच्चतुर्दशविद्या अध्येतव्याः। महाभाष्ये चैषां पाठः स्वाभाविक उक्तः—'तस्माद् ब्राह्मणेन निष्कारणं षड़ङ्गो वेदोऽध्येतव्यो ज्ञेयश्चेति'। 'वक्त्रजस्त्वनमो विप्रो वर्णज्येष्ठः कठो द्विजः' इति त्रिकाण्डशेषः। प्रा पूर्त्तौ, विप्राति धर्म्मान्। 'आतश्चोपसर्गे' इति कः॥ ७८ ॥

सकलमनुजानां मण्डनमाह सर्व्वेषामिति। सर्व्वेषां लोकानां भूषणं मण्डनमाभरणमिति। धर्म्मः लोकानां विधारकः। 'वेद-प्रणिहितो धर्म्मो ह्यधर्म्मस्तद्विपर्य्यय' इति भागवते। 'यतोऽभ्युदयनिश्रेयस सिद्धिः स धर्म्मः' इति काणादाः। मनुना च—

"अहिंसा सत्यमस्तेयं शौचमिन्द्रियनिग्रहः।

## भूषणानामपि भूषणं विनयो विद्या च ॥८०॥

---

एतत् सामासिकं धर्म्मं चातुर्वर्ण्येऽब्रवीन्मनुः" ॥
ये तु धर्म्महीना स्ते पशुतुल्याः। तदुक्तं पुराणे—
'धर्म्मो हि तेषामधिको विशेषोधर्म्मेण हीनाः पशुभिः समानाः'।
"ज्ञानं नराणामधिकः" इति क्वचित् पाठः। तेषां मानवानामित्यर्थः। अधिकः पश्वादिभ्य इति। महाभारते च 'धारणाद्धर्म्म इत्याहुर्न लोकचरितञ्चरेत्'। लोकाचरितस्य बहुत्वादनवस्थितत्वाच्चेति तदनुकरणे धर्म्माभाव इति। प्रागुक्तमन्यत्। धर्म्माद्दया दानं सौशील्यं परोपकृतिश्चित्तोन्नतिश्चेति भावः॥७९॥

भूषणानां मध्ये श्रेष्ठभूषणमाह भूषणेति। भूषणानां मण्डनानामाभरणमिति। अतिभूषनम्। तेषां मध्ये उत्तमाभरणं विनयो नम्रता सुजनत्वञ्च। एवं विद्या च। सा च शास्त्रपाठेन सतामुपदेशेन च जनितम् ज्ञानम्। तत्रोक्तं पुराणे—

"बहवोऽविनयाद् भ्रष्टा राजानः सपरिच्छदाः।
वनस्थाश्चैव राज्यानि विनयात् प्रतिपेदि" ॥

अन्यच्च 'न गुणो विनयात्परः'। अन्यत्र नीतौ विनयो दण्डः। तथा च व्यवहारतत्त्वे—

"पारुष्ये साहसे चैव युगपत्संप्रवर्त्तयोः।
विशेषश्चेन्न लभ्येत विनयः स्यात् समस्तयोः" ॥

विद्याविषये च विष्णुनोक्तम्—

## अनुपद्रवं देशमावसेत् ॥ ८१ ॥

"विद्या ददाति विनयं विनयाद् याति पात्रताम् ।
पात्रत्वाद्धनमाप्नोति धनाद्धर्म्मं ततः सुखम्" ॥

इत्याह विष्णुशर्म्मा । विद्याप्रशंसा च कविभिरुक्ता—

"मातेव रक्षति पितेव हिते नियुङ्क्ते,
कीर्त्तिश्च दिक्षु वितनोति ददाति लक्ष्मीम्" ।
"किं किं न साधयति कल्पलतेव विद्या" ।

अन्या विद्याप्रशंसा प्रागुक्ता । राजनीतौ च वक्ष्यति । नीञ् प्रापणे, विनीयते । विपूर्व्वान्नयतेरेरच् । 'भूषणानां भूषणं सविनया विद्या' इति पाठान्तरत्वे विनयेन सह वर्त्तमाना या विद्या सा सकलभूषणोत्तमा इत्यर्थः स्यात् । विद्येति । विद ज्ञाने, वेत्ति । विदेः क्यप् ॥ ८० ॥

निरत्ययस्थाने निवासमाह अन्विति । अनुपद्रवम् उपद्रवै-रुत्पात-क्लेश-पीड़ाधिभीरहितमनुपद्रवम् । तादृशं देशं जनपद-मावसेन्निवासं कुर्य्यात् । विद्या वित्तं शिल्पं वाणिज्यं कृषिश्च यत्रास्ति स देशो निवासे श्रेयान् । निरुपद्रवस्थाननिवासे स्वास्थ्यञ्चित्तस्फुर्त्तिरायुश्च वर्द्धते । ततो बुद्धेः प्राखर्य्यं स्यात् । तत्त्वकौमुद्यां मिश्रैरुक्तं 'आधिभौतिक दुःखप्रतीकाराय निर-त्ययस्थानाध्यसनादि युक्तम्' । अन्यच्च 'देशञ्च सोपद्रवं भार्य्यां यौवनगर्वितां पररतां मुञ्चन्ति शीघ्रं बुधाः' । अपि च—

"दैवज्ञः श्रोत्रियो राजा नदी वैद्यस्तु पञ्चमः ।

## साधुजन-बहुलोदेशः ॥ ८२ ॥

पञ्च यत्र न विद्यन्ते न कुर्य्यात्तत्र संस्थितिम्" ॥

अपरञ्च 'त्यजेद्देशमवृत्तिकं सवृत्तिकं समाश्रयेत्' । सवृत्तिकं शिल्प-जीविकार्जनोपयोगि-देशमित्यर्थः । 'उपद्रवो रोगारम्भे उत्पाते क्लेशदायके' इति । दु द्रु गतौ, उपद्रवणमुपद्रवः । 'समियुद्रुदुरः' इत्यनेन घञ् । यद्वा 'ऋदो रप्' इत्यनेन सिद्धम् । दिश अति सर्ज्जने, दिशति । ततः पचाद्यच् । यद्वा दिश्यते इति घञा सिद्धः ॥ ८१ ॥

विशिष्टदेशमाह साध्विति । यत्र साधवः सज्जनाः प्राज्ञा इति यावत् । ते च बहवः सन्ति । तस्मिन् जनपदे वर्त्तन्ते । स नद्यम्बु-वृष्ट्यम्बु-सम्पन्नव्रीहि-पालितो देशः प्रसिद्धो निरुपद्रवः सम्यग् निवास-योग्यः । 'स देशो यत्र निर्वृतिः' इति राजनीतौ । स च भारतवर्षादिः, एतल्लक्षणं प्रागुक्तम् । देव मातृकाऽदेव-मातृकादि भेदेन द्विविधो देशः पुनस्त्रिविधः जाङ्गलोऽनूपः साधारणश्च । स च पुनर्मध्यदेशोदीच्यदेश-प्राच्यदेश-दक्षिणापथ-विन्ध्यवासि देशादिभेदेन बहुप्रभेदो निगदितो मत्स्यपुराणे शक्ति-सङ्गमतन्त्रे च । निर्जीविक-देशनिवासे निषेधमाह—

"ऋणदाता च नृपतिः श्रोत्रियः सजला नदी ।
एते यत्र न विद्यन्ते न कुर्य्यात्तत्र संस्थितिम्" ॥

मन्त्रसाधका आहुः—

"माता च चिन्मयी देवी पिता देवो महेश्वरः ।

## राज्ञो भेतव्यं सर्व्वकालम् ॥ ८३ ॥

बान्धवा देवभक्ताश्च स्वदेशो भुवनत्रयम्" ॥ इति।
'साधुर्जैने मणौ वार्द्धुसिके सज्जनरम्ययोः' इति हैमः। साधुशब्दः प्राङ् निरुक्तः। बहून् लातीति 'आतोऽनुपसर्गे' इत्यनेन कः। यद्वा बह प्रापणे, इत्यतो बाहुलकादुल च ॥ ८२ ॥

नृपभीतेः सर्व्वदा प्रयोजनमाह राज्ञ इति। राज्ञो नृपात्तच्छासनाच्च। भेतव्यं भयात् सावहितेन भवितव्यम्। यतः 'लोकानां कारणं कालो राजा कालस्य कारणम्' इति वासवदत्ताव्याख्याने जगद्धराः। राज-शासनेन विना प्रजासु मात्स्यन्यायः कदर्थितः स्यात्। सकलदिक्पालांशसम्भूतो नृपालः सर्व्वथा माननीय एव। यो हि तदनिष्टमाचरति स राजविद्रोही स्यात्। राज-भीतिविरहितस्य कारालयवासादयः सम्भाव्याः। पाद्मे च—

"नारायणादृते नान्यो वसुमत्याः पतिर्भवेत्।
नारायणांशजो राजा मनुष्यो न कदाचन'॥

मात्स्येऽपि—

"गुणिनां पूजनं कुर्य्यान्निर्गुणानाञ्च शासनम्।
कथिताः सततं राजन् राजानश्चारचक्षुषः" ॥ इति।

अपरञ्च—"भय-त्राता च राजा च सर्वेषां पालकः पिता।
यो राजा रक्षकः पाता प्रजानां सच निश्चयः" ॥

'राजा प्रभौ च नृपतौ क्षत्रिये रजनीपतौ' इति मेदिनी। राज्

# न राज्ञः परं दैवतम् ॥ ८४ ॥

दीप्तौ, राजति। 'कनिन् यु वृषि' इत्यौणादिकात् कनिन्। सर्वकालमिति 'कालाध्वनोरत्यन्तसंयोगे' द्वितीया। सर्वस्मिन् काले इति सूत्रार्थः ॥ ८३ ॥

भूर्लोके नरेषु नृपस्य देवत्वमाह नेति। राज्ञो नृपात् परं नृलोके श्रेष्ठमन्यत् दैवतं देवता आराध्यं सेव्यञ्च न विद्यते। तदुक्तं नीतिशास्त्रकृद्भिः—

"बालोऽपि नावमन्तव्यो मनुष्य इति भूमिपः।
महती देवता ह्येषा नररूपेण तिष्ठति" ॥

अपरञ्च—

"यस्य प्रसादे पद्मा श्रीर्विजयश्च पराक्रमे।
मृत्युश्च वसतिः क्रोधे सर्व्वतेजो मयो हि सः" ॥

येतु राजसेवा निरतास्ते नितरां सुखिनो भवन्ति। राज्ञोऽनिष्टकारिणो दुःखिनः स्युरितिनिश्चितम्। राज्ञा तु पुत्रनिर्विशेषेण प्रजाः पालनीयाः। तदुक्तं मार्कण्डेयपुराणे 'प्रजाः पुत्रानिवौरसान्' इति। अपरञ्च वाराहे—

"प्रजा येन प्रमोदन्ति येन तुष्यन्ति ब्राह्मणाः।
एवन्ते पुत्र कर्त्तव्यं मम प्रिय-हितैषिणा" ॥

'प्रमोदन्ते' इति वा पाठः।

अन्यद् भारतीयशान्तिपर्व्वणि; शुक्रनीतौ, मानवधर्म्मशास्त्रे; अस्यार्थशास्त्रे च वर्णितमस्ति। देवतेति स्वार्थे तलादेशः। ततः

## सुदूरमपि दहति राजाग्निः ॥ ८५ ॥

स्वार्थे प्रज्ञादित्वादण् 'न राज्ञः परा देवता' इत्यपि पाठान्तरमस्ति तदात्वे अर्थवैरूप्याभावः ॥ ८४ ॥

राजकोपेन बह्वनिष्ट-सम्भावनामाह सुदूरमिति। राजाग्निः राज्ञः क्रोधाग्निः। सुदूरमतिदूरस्थानं जनपदमिति। यद्वा यं प्रति क्रोधस्तस्य स्वजनस्थावरास्थावरधनादिकम्। दहति बलाद् गृह्णाति नाशयति च। नृपतेरनिष्टाचरणे कृते तत्शासनावमानिते वा। दण्डादेः कैव कथा तत् क्रोधानलः प्रज्वलितः सन् सुदूरमपि स्थानमूषरभूमिमिव करोतीति भावः। तदुक्तम्—

"भूताग्निः पार्थिवं वस्तु विप्राग्निः सकलं कुलम्।
दहत्यरण्यं दावाग्निर्भूपाग्निः राष्ट्रनाशकृत्" ॥

अपरञ्च मानवे—

"एकमेव दहत्यग्निर्नरं दुरुपसर्पिणम्।
कुलं दहति राजाग्निः स पशु द्रव्यसञ्चयम्" ॥ इति।

तस्मात् सुधी राजरोषं कदापि न वर्द्धयेत्। 'सुतमपि दहति राजाग्निः' इति पाठभेदोऽस्ति। अस्यापराधिनः का कथा? तत्प्राणाधिकं पुत्रमपि नृपरोषाग्निर्दहतीत्यर्थः स्यात्। सुदूरं सम्यग् दूरम्। दुःखेनेयते 'दुरीणो लोपश्च' इत्यौणादिकसूत्रात् साधुः। अग्निः। अगि गतौ, अङ्गति। 'अङ्गेर्नलोपश्चे'ति निर्नलोपश्च ॥ ८५ ॥

## रिक्तहस्तो न राजानमभिगच्छेत् ॥८६॥

## गुरुञ्च देवञ्च ॥ ८७ ॥

---

शून्यहस्तस्य पुंसो नृपसन्निधाने गमननिषेधमाह रिक्तेति। रिक्तं शून्यं द्रव्यरहितमिति। तादृशः हस्तो यस्येति विग्रहः। सः राजानं नृपं नाप्यभिगच्छेत् न तं सेवेत, साक्षात्कारं न विदध्यादिति। तदुक्तं वृद्धचाणक्ये—

"रिक्तपाणिर्न सेवेत राजानं देवतां गुरुम्"।

सफलहस्तस्य नृपादिदर्शने झटित्येव तेषां प्रीतिरुत्पद्यते तत्फलमिव कार्य्यफलं शुभदर्शनञ्च भवतीति भावः। अन्ये तु—

"रिक्तपाणिर्न पश्येच्च शिशुं देवं गुरुं नृपम्"

इत्याहुः। 'रिक्तपाणिना नृपो नाधिगन्तव्य' इत्थं पाठान्तरत्वे रिक्तपाणिना फल-धनादिरहितकरेण जनेनेत्यर्थो बोध्यः। 'रिच वियोजनसंपर्चणयोः' रिच्यते। ततः क्तप्रत्ययः। नात्र तुच्छार्थबोधको रिक्तशब्दः॥ ८६ ॥

यथा भूपालसन्निधौ गमनं रिक्तकरस्य प्राग् निषिद्धं तथा गुरुदेवयोरभ्यर्णेऽपि प्रतिवार्य्यते गुरुञ्चेत्यनेन। गुरुं दीक्षयितारं ज्ञानदातारं कुलगुरुं वा। पितरौ च। दण्डिनं सन्न्यासिनम्। धर्म्मोपदेष्टारं शीलवन्तञ्च। अन्यच्च स्मृतौ—

"वित्तं बन्धुर्वयः कर्म्म विद्या भवति पञ्चमी।

एतानि मान्यस्थानानि गरीयो ह्युत्तरोत्तरम्"॥

एतद्वचनोक्तमुत्तरोत्तरं प्रबलं पूर्व्वपूर्व्वं प्रतीति प्रत्येतव्यम्। साधु-

कुटुम्बिना भेतव्यम् ॥ ८८ ॥

गन्तव्यञ्च सदा राजकुलम् ॥ ८९ ॥

---

विप्र-नृप-परिव्राड्-महाजन-तत्त्वदर्शिनोऽपि मान्या अरिक्त-पाणिना सेव्याश्चेति। पूर्व्वं सामान्यत उक्ता चकारेण एतौ विशेषयति। अत्र दैवं नतु भागधेयम्। देव एव दैवः। देवतावत् स्वार्थिकः प्रत्ययः नतु देवादागतं दैवमिति, तस्या-दृष्टार्थबोधकत्वात् ॥ ८७ ॥

परिवारयुक्तस्य भयमाह कुटुम्बिनेति। बहुकुटुम्बेन पुंसा। भेतव्यम्। सः तेभ्यः कुटुम्बेभ्यः भीतः स्यात्। यतः सर्वेषां कुटुम्बानां मनः प्रसादकरणं जगति दुर्लभम्। कः कदा केन क्रुद्धो भवति तद्वक्तुं न शक्यते। अतस्तेभ्यः भेतव्यम्। 'कुटुम्बं पोष्यवर्गे च' इत्यमरमाला। 'कुटुम्बिनो भेतव्य'मिति क्लिष्टार्थः पाठोऽप्यस्ति, तदा तु तृतीयार्थे पञ्चमी बोध्या। यद्वा 'भीत्रार्थानां भयहेतुः' इत्यादिना पञ्चमी। अन्यद्भयमुक्तं विद्यार्थिविषये 'अहे-रिव गणाद्भीतो मिष्टान्नाच्च विषादिव' इति। यस्त्वाह 'कुटुम्ब-व्यापृतेन तत्पोषणे संसक्तेनेति वार्थम्। तमप्यर्थं साधु मन्ये। 'कुटुम्बाः परिवाराश्च स्वजना बान्धवास्तथा' इति ॥ ८८ ॥

कार्य्यसिद्ध्यर्थं सकल-समये राज-संसदि गमनौचित्यमाह गन्तव्यमिति। राज-कुलम्। राज्ञां महीभुजां कुलमत्रसौध-स्तत्परिषद्वा। नतु गोत्रम्। सदा आकार्य्यसिद्धेः सर्वस्मिन् गन्तव्यम्। यद्वा राज्ञाममात्यादीनां सन्निधानम्। तथाहि

## राजपुरुषैः सह सम्बन्धं कुर्य्यात् ॥६०॥

---

स्वकार्य्यसाधनार्थं गुणादीनां परिचयार्थञ्च राज सभायां राजपुरुषसन्निधाने वा गमनमुचितमिति भावः । 'कुलं जनपदे गोत्रे सजातीयगणेऽपि च । भवने च तनौ क्लीब'मिति मेदिनी । दीनानां निपुणानाञ्च राजसेवा श्रेयसी । तत्कोपोत्पादनं नैव कार्य्यम् । तत्परितोषात् कोपो महानिष्टकरः । कया प्रणाल्या नृपसन्निधौ वस्तव्यं गन्तव्यञ्च तत्सर्वं विराटपर्वणि अज्ञातवनवासप्रसङ्गे पुरोधसा धौम्येन सम्यग् वर्णितमस्ति । सोमदेवीयनीतिवाक्यामृते चान्यदस्तीति प्रसङ्गादुक्तम् । कुङ शब्दे, कूयते । बाहुलकात्लक् । यद्वा कुल संख्याने, कोलयति । 'इगुपध' इत्यादिना कः ॥ ८६ ॥

नृपामात्यादिभिः सार्द्धं सम्बन्धकरण प्रयोजनमाह राजेति । राज्ञां भूभुजां ये अमात्यादयः पुरुषाः तैः सह सम्बन्धं स्वप्रयोजनसिद्ध्यर्थं मैत्र्यानुगत्यादिकं कुर्य्यात् । तेन स्वोपकारः सम्मानवृद्धिश्च स्यात् । नतु विवादादि । ततो दस्युतस्करादिभिरनिष्टं कर्त्तुं न शक्यते । अर्थसाधनेतूक्तम्—

"तदर्द्धं राज-सेवायां भिक्षया नैव नैव च" ।

इति वृद्धचाणक्ये । अन्यदुक्तं श्रेष्ठपुरुषसङ्गविषये कविभिः—

"सद्भिरासीत सततं सद्भिः कुर्व्वीत सङ्गमम् ।
सद्भिर्विवादं मैत्रीञ्च नासद्भिः किञ्चिदाचरेत्" ॥

पुरुषः । पुर अग्रगमने, पुरति । 'पुरः कुषण' इत्यौणादिसूत्रात्

राजदासी न सेवितव्या ॥ ९१ ॥

न चक्षुषापि राजानं निरीक्षेत ॥ ९२ ॥

---

सिद्धम्। पृषोदरादित्वाद् दीर्घः। बन्ध बन्धने, सम्बध्यते। सम्बन्धः सम्मेलनं संसर्ग इति। संपूर्व्वाद् बन्धधातो रला सिद्धम् ॥९०॥

राज-दासी-सेवाया निषेधमाह राजेति। राज्ञां महीभुजाम्। दासी, परिचारिका, भुजिष्या भोगिनी, वेति। सा च नान्यैर्जनैः सेवितव्या उपभोग्या वा। अत्र दासीत्युपलक्षणम्। तदननुमत्या नृपस्यान्यानि द्रव्याणि नैव सेव्यानि। नृपस्वामिकं द्रव्यं तद्दानादेशाभ्यां विना न व्यवहार्य्यम्। 'दासी वाणी भुजिष्ययोः' इति मेदिनी। 'दासी भृति-नियोज्या भुजिष्या परिचारिका' इत्यन्यत्रास्ति। धर्म्मशास्त्रे त्वस्ति देवदास्यपि नैवोपभोग्या। क्वापि च दास-दासीशब्दौ नामान्तप्रयोज्य पद्धति-विशेषौ नापि भृत्यवाचकौ। दसु उपक्षये, दस्यते। कर्म्मणि घञ्। गौरादित्वादीकारः। यद्वा दाश्ट दाने, दाश्यते। ततो घञ्। अभेदात् क्वापि तालव्यान्तः। 'क्वचिद्विहितभावो द्रव्यवत् प्रकाशते' इत्यनेन पदार्थवाचकत्वम्। ततः पूर्व्ववदीकारः ॥ ९१ ॥

नेत्रेणापि राजदर्शन-निषेधमाह नेति। चक्षुषा नेत्रेण नयनेनेति। राजानं भूपालम्। न निरीक्षेत नैव पश्येत्। यतः कदा राज्ञो हि कीदृशी मानसिकी दशा स्यात्तत् केनापि वक्तुं न शक्यते। अतः सामान्यरीत्या झटिति राजानं नावलोकयेत्

## जनपदार्थं ग्रामस्त्यज्यते॥ ८३॥

विशेषतोऽशान्तस्य क्रुद्धस्य राज्ञो दर्शनं न समुचितम्। 'न चक्षुषापि राजधनं निरीक्षेत्' इत्येवं पाठे तु राज-धनस्य ग्रहण-हरणादेः का कथा तत्तत्प्रवृत्त्या चक्षुषापि नावलोकयेदिति। तद्दर्शने राजपुरुषाणां शङ्का वर्द्धिष्यते। नियमपूर्वकं नृपदर्शनं प्रीतिकरं हितप्रदञ्च। 'ईक्षणं चक्षुरक्षिणी' इत्यमरः। चक्ष धातोः चष्टे,चक्षतेऽनेन वा चक्षिङ्धातोः 'चक्षेः' शिच्च'इत्यौणादिकसूत्रादुसिः। शित्त्वादनार्द्धधातुकत्वाच्चक्षिङः स्थाने ख्याङ् न भवति। ईक्ष दर्शनालोचनयोः, निरुपसर्गादीक्षतेरात्मनेपदम्॥ ८२॥

जनपदप्राप्तौ ग्रामत्यागोपदेशमाह जनेति। जनपदो बहुजनोषितो वाणिज्य-शिल्पादि सम्पन्नो देशः। तल्लाभे ग्रामोऽल्पजननिवासस्थानम्। सुसमृद्धकृषीवल-क्षुद्रापणादि-भूषितम्। त्यज्यते परित्यज्यते। श्रेष्ठवस्तुलाभे तदर्थे क्षुद्रवस्तुत्यागो हि साम्प्रतम्। तदुक्तं—

"त्यजेदेकं कुलस्यार्थे ग्रामस्यार्थे कुलं त्यजेत्।
ग्रामं जनपदस्यार्थे आत्मार्थे पृथिवीं त्यजेत्"॥

इति वृद्धचाणक्ये। ग्रामलक्षणन्तु—

"तथा शूद्रजन-प्राया सुसमृद्धकृषीवला।
क्षेत्रोपयोगभूमध्ये वसतिः ग्रामसंज्ञिका"॥

इति मार्कण्डेयपुराणे। 'भवेज्जनपदो जानपदोऽपि जनदेशयोः' इति विश्वः। जनः पदं वस्तु यत्र सः। 'ग्रामः स्वरे संवसथे

## पुत्रे गुणवति कुटुम्बिनः स्वर्गः ॥ ६४ ॥

वृन्दे शब्दादिपूर्व्वके' इति विश्वः । ग्रसु अदने, ग्रसते ग्रस्यते वा । 'ग्रसे राच' इत्यौणादिकसूत्रा न्मः ॥ ८२ ॥

तनये सुशिक्षिते सति तत्स्वजनानां स्वर्गतुल्यलाभमाह पुत्र इति । पुत्रे आत्मजे सुते गुणवति धन-सद्‌विद्या-चरित्रवति सति । कुटुम्बिनः तत् पित्रादेः स्वजनादेश्च । स्वर्गः अमरधाम निर्विशेष सुखस्वरूपो वा । तदुक्तं नीतिविद्भिः 'दुःखान्ते पण्डितः सुतः' इति । एकस्मिन् तनये विद्या धन-सुचरित्रान्विते तत् कुटुम्बिनः सर्व्वे सुखिनः स्युरिति । अत्र स्वर्गः स्वर्गतुल्योऽपार-सुखलाभः । 'पुत्त्रेणायं लोकोजय्यः' इति श्रुतिः । अन्यच्च—

"एकेनापि सुवृक्षेण पुष्पितेन सुगन्धिना ।
वासितं तद्वनं सर्व्वं सुपुत्त्रेण कुलं यथा" ॥

अपरञ्च 'सत्पुत्त्रः कुलदीपकः' । कैश्चिदुच्यते 'स्वर्ग इति तेषां निधनोत्तरं दानश्राद्धादिजन्य फलेन वेति' । स्वर्गलक्षणं भट्ट-पादकृतम्—

"यन्न दुःखेन सम्भिन्नं नच ग्रस्तमनन्तरम् ।
अभिलाषोपनीतञ्च तत् सुखं स्वः पदास्पदम्" ॥ इति ।

'स स्वर्गः स्यात् सर्व्वान् प्रत्यविशेषात्' इति कर्म्ममीमांसासूत्रम् । 'स्वर्गे लोके न भयं किञ्च नास्ति' इति काठके च स्वर्गसूचकं प्रमाणम् । अर्ज्ज अर्ज्जने, सुष्ठु अर्ज्ज्यते इति स्वर्गः, कर्म्मणि घञ् ।

कुटुम्बार्थं पुत्रस्त्यज्यते ॥ ८५ ॥

आत्मार्थं सर्व्वं त्यजति ॥ ८६ ॥

---

यद्वा ऋज गतिस्थानार्जनोपार्जनेषु, ऋज्यतेऽस्मिन्निति । 'हल-श्चेति' घञ् । न्यङ्क्वादित्वात् कुत्वम् ॥ ८४ ॥

कुटुम्बार्थं पुत्रस्यापि त्यागमाह कुटुम्बार्थमिति । तदर्थम् आत्मीयजनानां परिरक्षार्थं तेषां हिताय धर्म्माय च । यद्वा कुलरक्षार्थमिति । पुत्रः आत्मजः सुत इति । त्यज्यते परि-ह्रियते । महोदारचरितानां लक्षणं यत्परार्थे सर्व्वस्वत्याग इति । यद्यपि तनयो दुराचारो दुर्द्दान्तश्च भवेत्तदा स त्यागार्हः । न तु बधार्हः । यद्वा सत्यार्थं लोकाराधनार्थं च रघुपतेः श्रीरामस्य जनकतनयापरिहारवत् परिहार इति । येनापि कुलरक्षा स्यात्तेन च यदि कुलोच्छेदसम्भावना प्रबला तदा तत्त्यागः श्रेयान् । 'त्यजेदेकं कुलस्यार्थे' इति नीतिवाक्यात् । अपरे तु 'अत्र कुटुम्बपदेन महाजनपदवत् बहुरः सम्पदः बहवो वा जना' इत्यर्थमाहुः ॥ ८५ ॥

आत्म-परिरक्षार्थं सकलविषयत्यागमाह आत्मेति । आत्मार्थं स्वस्य जीवनादेः रक्षार्थं सर्व्वं धनदारादिकम् । त्यजति जहाति । जगति जीवानां जीवनं सर्व्वेभ्यः श्रेष्ठम् । सर्व्वस्य वस्तुनो नाशे जीवनं नैव नश्यति । परं जीवननाशे सर्व्वमन्यदस्तु वा मास्तु वा । अतस्तत्सर्वं नष्टमेव । एवञ्च प्राणरक्षार्थं सर्वमपि परि-हरेत् । तदुक्तं 'आत्मार्थे पृथिवीन्त्यजेत्' । अन्यच्च—

**ग्रामार्थं कुटुम्बस्त्यज्यते ॥ ८७ ॥**

**अतिलाभः पुत्रलाभः ॥ ८८ ॥**

---

"आत्मानं सततं रक्षेद् दारैरपि धनैरपि"। इति।
ब्रह्मविद्भिरप्युक्तम्—

"यच्चाप्नोति यदादत्ते यच्चात्ति विषयानिह।

यच्चास्य सन्ततोभावस्तस्मादात्मेति कीर्त्त्यते'॥ इति।

'आत्मा कलेवरे यत्ने स्वभावे परमात्मनि' इति धरणिः। अत सातत्यगमने, अतति। 'सातिभ्यां मनिन्' इति मनिन् ॥८६॥

ग्रामलाभे जाते तदुद्धारार्थं वा कुटुम्बस्य त्यागमाह ग्रामार्थमिति। ग्रामे पूर्व्वोक्तलक्षणे लब्धे सति तदर्थं कुटुम्बः ज्ञातिजनः परिजनो वा। त्यज्यते, परिह्रियते। विप्रादिवर्णप्राया प्राकारपरिखादिरहिताऽनेकलोकवसतिर्ग्रामसंज्ञिका। 'हट्टादि शून्यवसतिः' इति श्रीधरस्वामी। ग्रामलक्षणम् पूर्वमुक्तम्। कुटुम्बात् ग्रामोऽधिको महार्घः। अतस्तल्लाभे समुद्धारे च कुटुम्बत्यागः सूचितः। महतो लाभे स्वल्पत्यागवदिति। 'समौ सम्बसथ ग्रामौ' इत्यमरः। 'ग्रामः स्वरे सम्बसथे वृन्दे शब्दादिपूर्वकः' इति विश्वोऽपि। ग्रसु अदने, ग्रस्यते लोकैर्यः सः। 'ग्रसे राच' इति मः ॥ ८७ ॥

गृहस्थानां विशेषलाभमाह अतीति। पुत्रलाभः। पुत्रस्य सुतस्य लाभः प्राप्तिः पुत्रोत्पत्तिः। सा चातिलाभः सर्व्वेभ्यो-

प्रायेण हि पुत्त्राः पितरमनुवर्त्तन्ते ॥८९॥

ऽधिक लाभः । तेन च धर्म्म-वंशरक्षा तद्वृद्धिश्च भवति । तदुक्तम् भारते विराटपर्व्वणि—

"पुत्त्रः प्रियाणामधिको भार्य्या च सुहृदाम्बरा" ।

स्मृतौ च—

"पुत्त्रेण वसुतामेति पौत्त्राद्दुर्द्रलमाप्नुयात्" ।

'अपुत्त्रस्य गतिर्नास्ति' इति च । कन्यालाभादधिकः पुत्रलाभः । सा चोद्वाहात् परं गोत्रान्तरिता भर्त्तृकुलं याति । पुराणे पुत्राश्चतुर्विधाः । स्मृतौ द्वादशप्रकाराः । ब्रह्मवैवर्त्ते प्रकृतिखण्डे सप्तविधाः पुत्त्राः । कलौ तु औरसदत्तकौ द्विविधौ । पुराणे च—

"सत्पुत्त्रं परमं तीर्थं प्राप्य मुच्यन्ति पूर्व्वजाः ।
पितापि ऋणमुक्तः स्यात् जाते पुत्त्रे महात्मनि" ॥

श्रुतिश्च 'अस्य पुत्त्रा दायमुपयन्ति सुहृदः साधुकृत्यम्' । 'एष्टव्या बहवः पुत्त्राः' इत्यादि श्रुतिस्मृत्योः पुत्त्रपदोत्तर-बहुवचनविधानाद् बहुपुत्त्रा एष्टव्याः । 'ज्येष्ठेनैव तु पुत्त्रेण पुत्री भवति मानव' इति यन्मानववचनन्तदग्रजातस्य सुतस्य प्राधान्यं कार्य्यविशेषे सूचितम् । अन्यदनन्तदेवकृत-राजधर्म्मकौस्तुभे प्रथमाध्याये वर्णितमस्ति ॥ ८८ ॥

पुत्त्राणां जनकानुवर्त्तनमाह प्रायेणेति । पुत्त्राः सुताः पितरं जनकमिति । अनुवर्त्तन्ते सर्व्वेषु विषयेषु अनुकुर्व्वन्ति । पितृनियमानुसारेणाचरणं कुर्व्वन्ति । प्रायपदोपादानात् बहवः सुता

पुत्त्रा विद्यानां पारं गमयितव्याः ॥ १०० ॥

---

एवं कुर्व्वन्ति। जननकालीन-ग्रह-नक्षत्रादि-संस्थान-वैकल्यात् कोऽपि तादृगनुकरणं न करोतीति। येतु सुता विद्या-विनय-धर्म्मसम्पन्नास्तेऽनुकुर्वन्त्येव। सर्वकर्म्मसु पित्रादेशमनुसृत्य तमनुगच्छन्ति। अन्ये अज्ञाः सुता अविनीताः पितरं नानुयान्ति। उक्तञ्च धर्म्मशास्त्रकृता—

"येनास्य पितरो याता येन याताः पितामहाः।
तेन यायात् सतां मार्गः ··· ··· ··" ॥

अन्यच्चोक्तम्—

"सुतः पितृगुणं धत्ते धत्ते मातृगुणं सुता" ॥

अत्र सांख्याश्चाहुः—'पितृतः स्नाय्वस्थि मज्जानः, मातृतो लोम-लोहित-मांसानि पुत्त्रे संक्रामन्ति'। अन्यत्र च 'कारणगुणा हि कार्य्यगुणानारभन्ते' इति पितृगुणाः पुत्त्रे संगच्छन्ति। 'प्रायो-बाहुल्य तुल्ययोः' इति विश्वः। पा रक्षणे, पाति। 'नप्तृ नेष्टृ' इत्यौणादिकसूत्रात् साधु ॥ ९९ ॥

तनयानां विद्योपदेशे प्रयोजनमाह पुत्त्रा इति। विद्यानाम् अर्थशास्त्र-वार्त्ताशास्त्र-धर्म्मशास्त्रोक्तानां पारं मर्य्यादां विषयसमूह-ज्ञानकाष्ठा गमयितव्याः प्रापयितव्याः। तेन तेषामैहिक-पारत्रिक-समुन्नतिर्भविष्यतीति। विद्या च—अष्टादशविधा इति दण्डि-दर्पणकारौ। चतुःषष्ठिप्रकारा विद्या इति ललितविस्तर-

## दुर्गतेः पितरौ रक्षति स पुत्रः ॥ १०१ ॥

---

ख्यातः । चतुःषष्ठि कला विद्या इति शैवतन्त्रे च । तथैव काम-सूत्रव्याख्यानेऽपि । 'एता विद्याश्चतुर्दश' इति पौराणिकाः ।

"पुराण-न्याय-मीमांसा धर्म्मशास्त्राङ्गमिश्रिताः ।

वेदाः स्थानानि विद्यानां धर्मस्य च चतुर्दश" ॥

इति धर्मशास्त्रकृतोऽपि । छान्दोग्ये सनत्कुमार-नारदसंवादे 'ऋग्वेदं भगवो अध्येमि' इत्यारभ्य नानाविद्या-नामानि समुद्दिङ्गितानि । सति सामर्थ्ये सकलविद्यानां पारगामित्वं समुन्नतेः परमाकरमिति । तदुक्तं वृद्धचाणक्ये—

"सत्कुले योजयेत् कन्यां मित्रं धर्मेण योजयेत् ।

व्यसने योजयेच्छत्रुन् पुत्रान् विद्यासु योजयेत्" ॥

अन्यत्र 'पुत्रा विद्यादानार्थं प्रारम्भयितव्याः' इत्थं पाठान्तरं दृश्यते, तदात्वे शिक्षाप्रदानार्थं तनयानां तदारम्भणं कारयितव्य-मित्यर्थः । पाठस्त्वीदृशोऽरुचिकरः । प्राक् प्रोक्तमन्यत् । 'पारं प्रान्ते परतटे' इति हैमः । पार तीर कर्म समाप्तौ । पारयति । ततः पचाद्यच् ॥ १०० ॥

नानाविपद्भ्यो रक्षणं यः करोति स पुत्र इत्याह दुरिति । यः पुत्रस्तनयः दुर्गतेर्नरकात् क्लेश सन्ताप-शोकेभ्यश्च । पितरौ, मातरं पितरञ्च रक्षति पालयति उत्तारयति च । स एव सुतः । पुतस्त्राणादन्वर्थनामा स्यादिति शेषः । यद्वा दुर्गतेस्त्राणकारणा-

कुलं प्रख्यापयति पुत्रः॥ १०२॥

---

हेतोः पुत्रः पुत्रसदृशः। आत्मजस्य तत्करणन्तु स्वाभाविकमिति। तदुक्तं पुराणकृद्भिः—

"पुण्य-प्रसक्तो यस्यात्मा सत्यधर्म्मरतः सदा।
बुद्धिमान् ज्ञान-सम्पन्नः तपस्वी वाग्विदाम्बरः॥
सर्व्वकर्म्मसु संधीरो वेदाध्ययनतत्परः।
सर्व्वशास्त्रप्रवक्ता च देवब्राह्मणपूजकः॥
कुलस्य तारको विद्वान् कुलस्य परिपोषकः।
एवं पुत्रैः स संयुक्तः सुपुत्रः कुलपावनः"॥

स्वक्षेत्रे संस्कृते येन स्वयं नोत्पादितः स दत्तकत्वेन प्राप्तः पुत्रप्रतिनिधिः। अत्रार्थे स्मृतिश्च—

"अपुत्रेणैव कर्त्तव्यः पुत्रप्रतिनिधिः सदा"।

दुष्टा क्लेशदायिनी गतिर्दुर्गतिः। 'निरयो दुर्गतिः स्त्रियाम्' इत्यमरः। पितराविति 'पिता माता' इत्येकशेषो वा॥ १०१॥

पुत्रस्य कुलोज्ज्वलकरत्वमाह कुलमिति। पुत्र. सुतः। कुलं वंशम्। प्रख्यापयति। विद्या-धन-मान-धर्म्मैः समुज्ज्वलयति कीर्त्त्या मण्डयतीति। उक्तञ्च वृद्धचाणक्ये 'सुपुत्रेण कुलं यथे'ति। तथा च वैष्णवे पुराणे—

"सत्पुत्रेण मुनिश्रेष्ठाः समुत्पन्नेन दुर्म्मतिः।
उत्तारान्वियात् स्वर्गं पुन्नाम्नो नरकाद्द्रुतम्"॥
"एको हि गुणवान् पुत्रो निर्गुणेन शतेन किम्।

## येन तत् कुलं प्रख्यातं सः पुरुषः ॥ १०३ ॥

चन्द्रो हन्ति तमांस्येको न च ज्योतिः सहस्रशः" ॥

'कुलं जनपदे गोत्रे सजातीयगणेऽपि च'। इति मेदिनी। कुलसंस्थाने बन्धुषु च, कोलति। 'इगुपध' इति सूत्रेण क-प्रत्ययः ॥ १०२ ॥

कुलकीर्त्तिवर्द्धकस्य प्रशंसामाह येनेति। येन कुलजातेन मानवेन स्वकुलं प्रख्यातं गुणधर्म्मगौरवैः प्रद्योतितं स एव पुरुषः पुमानिति। यथा सुधाकरेण शरत्पार्वणयामिनी तथैव महामतिना तनयेन कुलं समुद्भासितम्। अन्ये च बहवः केवलं जायन्ते म्रियन्ते च। तथाहि गारुड़े—

"कुलं पुरुषसिंहेन चन्द्रेण गगनं यथा"।

"सा श्रीर्या न मदं कुर्य्यात् स सुखी तृष्णयोज्झितः।
तन्मित्रं यत्र विश्वासः पुरुषः स जितेन्द्रियः" ॥

नीतौ च—

"यदुपात्तं यशः पित्रा धनं वीर्य्यमथापि वा।
तत्र ह्रापयते यस्तु स नरो मध्यमः स्मृतः" ॥

"तद्वीर्य्याऽभ्यधिकं यस्तु पुनरन्यत् स्वशक्तितः।
निष्पादयति तं प्राज्ञा वदन्ति नरमुत्तमम्" ॥

"यः पित्रा समुपात्तानि धनवार्य्ययशांसि च।
न्यूनतां नयति प्राज्ञाः तमाहुः पुरुषाधमम्" ॥

भारते च—

"उत्तमश्चिन्तितं कुर्य्यात् प्रोक्तकारी च मध्यमः।

**नानपत्यस्य स्वर्गः ॥ १०४ ॥**

**या प्रसूते भार्य्या ॥ १०५ ॥**

---

अधमोऽश्रद्धया कुर्य्यादकर्त्तोच्चरितं पितुः" ॥

"पात्रे त्यागी गुणे रागी भोगी परिजनैः सह।

शास्त्रे बोद्धा रणे योद्धा पुरुषः पञ्चलक्षणः" ॥

पुरि स्थूलशरीरे शेते यः स पुरुषः। पुर अग्रगमने, पुरति। 'पुरः कुषन्' इति कुषन् ॥ १०३ ॥

अपत्यहीनस्य स्वर्गलाभे प्रतिबन्धकमाह नेति। अपत्यं पुत्र-कन्ये स्तः। नास्ति अपत्यं यस्य सोऽनपत्यः तस्यानपत्यस्य पुंसः। अत्र पञ्चानञा सम्बन्धः। तस्य सन्ततिरहितस्य जनस्य स्वर्गावाप्तिर्न भवति। न पतति वंशो येन जातेन तदपत्यम्। स्मृतावुक्तम् 'अनपत्यस्य गतिर्नास्ति पतितस्य तथैव च' इति। 'अपत्यं तोकं तयोः समे' इत्यमरः। तयोः सूनुकन्ययोः। पत्-ऌ गतौ, पतति। बाहुलकाद् यः। अघ्न्यादिर्वा। सत्पुत्र-जनन-प्रशंसामाह पुराणे—

"भार्य्यामूलाश्च पुत्राश्च भार्य्यामूला गृहास्तथा।

भार्य्यामूलं सुखं शश्वत् गृहस्थानां गृहे सदा" ॥

इति ॥ १०४ ॥

भार्य्याया विशिष्टत्वमाह येति। या नारी पत्नी तनयं प्रसूते सूयते वा सा भार्य्या पाणिगृहीतीत्यर्थः। तदुक्तं धर्म्मशास्त्रकृद्भिः—

तीर्थ समवाये पुत्रवतीमनुगच्छेत् ॥१०६॥

---

"न भार्य्यया विना पुत्रो न पुत्रेण विनान्वयः"।

अन्वयोऽत्र वंशः।

अन्यच्च नीतौ—

"भार्य्यामूलं सदापत्यं भार्य्यामूलञ्च मङ्गलम्।
भार्य्यामूलश्च संसारो भार्य्यामूला च सङ्गतिः" ॥

'भार्य्या जायाथ' इत्यमरः। पाणिः गृहीतोऽस्याः 'पाणिगृहीती भार्य्यायाम्' इति वार्त्तिकम्। डुभृञ् धारणपोषणयो', भृ भरणादौ वा। भ्रियते भूर्य्यते च तयोर्ण्यत्। अन्यदर्थशास्त्रेऽस्ति ॥१०५॥

तीर्थसमूहे तनयवतीं पश्चात्कृत्य पुंसो गमनमाह तीर्थेति। तीर्थानां तैर्थिकानां ज्ञानिनां समवाये सम्मेलने पुत्रवतीमपत्यवतीं स्त्रियम् अनुपश्चात्कृत्य गच्छेत्। यद्वा तीर्थानां धर्म्म-सभा-महोत्सवानां समूहे। अथवा तीर्थानां काशी-प्रयागादीनां निकरे पर्वादौ तामनु पत्यादिः गच्छेत्, शुद्धान्तश्चारिणीनां सुतवतीनान्तु पत्या पित्रा सुतेन च वा सह धर्म्मक्षेत्रे, महोत्सवे, श्मशाने, मारीभये, महाविप्लवे, नगर-ग्रामदाहे, संग्रामे च गमनं निर्वाधम्। तेषु स्पर्शादिदोषोऽपि नास्ति। तथा च रत्नाकरे बृहस्पतिः—

"तीर्थे विवाहे यात्रायां संग्रामे देशविप्लवे।
नगर-ग्रामदाहादौ स्पृष्टास्पृष्टिर्न दुष्यति" ॥

## सतीर्थाभिगमनाद् ब्रह्मचर्य्यं नश्यति ॥ १०७ ॥

---

अपरस्मृतौ—

"दाने विवाहे यज्ञे च संग्रामे देशविप्लवे।
आपद्यपि हि कष्टायां सद्यः शौचं विधीयते" ॥

"दीर्घकाष्ठे शिलापृष्ठे नौकायां जाह्नवीजले।
सभायां सत्रशालायां स्पर्शदोषो न विद्यते" ॥

इति स्मृतिः। 'नौकायां हट्ट-वाहने' इति पाठान्तरमप्यस्ति। 'यानादेरपरिहार्य्यत्व'मिति मानवस्मृतिव्याख्याने कूल्लकभट्टः। अन्यच्च स्मृतौ—

"देवयात्रा विवाहेषु यज्ञ प्रकरणेषु च।
उत्सवेषु च सर्वेषु स्पृष्टास्पृष्टिर्न विद्यते" ॥

"गृहे सम्पूर्ण आचारः प्रवासे च तदर्द्धकम्।
तदर्द्धं तीर्थयात्रायां पथि शूद्रवदाचरेत्" ॥ इति च।

कौटिलीये तु 'तीर्थसमवाये जीवत्पुत्रां गच्छेत्' इति पाठे, जीवत्पुत्रां सहधर्म्मिणीं पतिरनुगच्छेदित्यर्थः। तथैवार्थशास्त्राकरेऽन्यत् पुष्कलमस्ति। 'तीर्थसमवाये पुत्र सुतामधिगच्छेत्' इत्थं पाठभेदे नार्थकाठिन्यम्। तॄ प्लवनतरणयोः, तीर्य्यते अनेन। 'पा-तॄ-तु-दि' इत्यादिना थक्॥ १०६ ॥

सतीर्थाभिगमने ब्रह्मचर्य्यहानमाह सेति। स तीर्थाभिगमनात् सतीर्थाया एक गुरुसन्निधौ अन्येन सहाधीतविद्यायाः अभिगमनात् सङ्गमनात् तदाश्लेषणाद् वा ब्रह्मचर्य्यं नश्यति, धर्म्मशास्त्र-

## न परक्षेत्रे बीजं विनिक्षिपेत्॥ १०८॥

इति चाणक्य-सूत्रे नीतिदर्शनात्मके चतुर्थोऽध्यायः॥४॥

—oo—

---

विरोधात्। 'सतीर्थ्यास्त्वेकगुरवः'। समानं तुल्यं तीर्थं शास्त्रं गुरुर्वा येषां ते सतीर्थाः। 'निपानागमयोस्तीर्थम् ऋषिजुष्टजले गुरौ' इत्यमरः। ती पदनिरुक्तिः प्रागुक्ता। 'न सतीर्थाभिगमनात्' इति पाठभेदे। सतीर्थस्य सतीर्थाया वा अभिगमनात् सङ्गमनात्। ब्रह्मचर्य्यमष्टाङ्गमैथुनत्यागव्रतं न नश्यति न विलुप्यते। परमयं पाठः धर्म्मशास्त्रविरुद्धत्वादुपेक्षणीयः। व्यवहारविरोधाच्च। उक्तञ्च—

"अपेत व्रतकर्म्मा च केवलं ब्रह्मणि स्थितः।

ब्रह्मभूतश्चरन् लोके ब्रह्मचारीति कथ्यते"॥

तदर्थं योगसूत्रम्। 'ब्रह्मचर्य्यप्रतिष्ठायां वीर्य्यलाभः'। श्रुतयश्च 'ब्रह्मचारी गृही भवेत्'। 'वस ब्रह्मचर्य्यम्'। 'इतरथा ब्रह्मचर्य्यादेव प्रव्रजेत्'। प्राग्विद्याभ्यासकाले ब्रह्मचारी, तत्समाप्तौ पश्चाद्गृही भवेत्। गीतायामपि—

"ब्रह्मचर्य्यमहिंसा च शारीरन्तप उच्यते"।

तीर्थ्यमिति पाठः साधुरिति केचनाहुः। तदा समाने तीर्थे वसन्ति 'समाने तीर्थे वासी' इत्यनेन यत्। 'तीर्थे ये' इति समानस्य सः। ब्रह्म वेदः तयोर्ज्ञानं वा चरति अर्ज्जयति। ब्रह्मणि वेदे सत्ये च चरणमिति ब्रह्मपूर्व्वक चरधातोः 'गदमदचरयमश्चे'त्या-

दिना यत् । 'न खल्वभिमनाद् ब्रह्मचर्य्यं नश्यति' इतीत्थं पाठो विदूषां केषाञ्चित् सम्मतः । स च धर्म्मशास्त्राविरुद्धः ॥ १०७ ॥

अन्येषां क्षेत्रे बीजार्पणनिषेधमाह नेति । परेषामन्येषां क्षेत्रे दारेषु बीजं बिन्दुं वीर्य्यञ्च । नापि मोहात् प्रमादाद्वा विनिक्षिपेत् परित्यजेत् । यद्वा परेषां क्षेत्रे तत्स्वामित्व विशिष्टे सस्यादिजननोपयुक्तस्थाने बीजमङ्कुरकारणं न निक्षिपेन्नैवारोपणं कुर्य्यात् ।

'क्षेत्रं शरीरे केदारे सिद्धस्थान कलत्रयोः' इति विश्वः । यदि केनापि परक्षेत्रे बीजवपणं क्रियते तदा तेनापि वप्तुः क्षेत्रे पुनर्बीजनिक्षेपः करिष्यते चेत्तेन महाननर्थो विवादश्च स्यात् ! क्षि क्षये, क्षि निवासगत्योश्च, क्षीयते धान्यादि । तत् औणादिक-सूत्रात् ष्ट्रन् । 'बीजं तु रेतसि । स्यादाधाने च तत्त्वे च हेतावङ्कुर-कारणे' इति विश्वः । बीजम् । ईज गतिकुत्सनयोः, विशेषेण ईजते । विपूर्वात् ततोऽच् । वीज्यते वा बवयोरभेदाद् वत्वा सिद्धम् । कुत्वन्तु न भवति । 'चजो'रित्यादिसूत्रे 'निष्ठाया-मनिटः' इति वार्त्तिककृता पूरितत्वादस्य च धातोर्निष्ठाप्रत्यये सेट्त्वादिति ॥ १०८ ॥

अपारे दुस्तरेऽगाधे संसारे सार-बुद्धिना ।
चाणक्यमति-पोतेन तीर्य्यतां स विपश्चिता ॥

इति दर्शनभूतचाणक्यसूत्रव्याख्यायां श्रीईश्वरचन्द्रशास्त्रिशर्म्म-कृतायां सारार्थबोधिन्यां चतुर्थोऽध्यायः ॥४॥

-०*०-

# पञ्चमोऽध्यायः ।

—o*o—

## पुत्त्रार्थां हि स्त्रियः ॥ १

पूर्व्वाध्याये विषयान्तरमुक्त्वास्मिन् पञ्चमाध्याये दाराणां विशेषत्वमाह पुत्रेति । स्त्रियः पत्न्यः पाणिगृहीत्यः इति । पुत्त्रार्थाः पुत्रोऽर्थः प्रयोजनं यासां ता भवन्तीति शेषः । अत्र स्त्रीपदेन पत्नेव ग्राह्या । सातु विवाहिता धार्म्मिकापत्यो-त्पादने समर्था ना विवाहिता । दम्पत्योः सहाधिकारात् । पत्यु-र्यज्ञे संयोगो यया सा पत्नी । तथा च सूत्रम् 'पत्युर्नो यज्ञसंयोगे'। उक्तञ्च—

"पुत्त्रार्थे क्रियते भार्य्या पुत्रः पिण्ड-प्रयोजनः" ।

एवमन्यत्रोक्तम्—

"रति-पुत्र-फला दाराः दानभुक्ति-फलं धनम्" ।

न ताः केवलं सुखभोगार्थाः । अपरञ्च—

"भार्य्यावन्तः क्रियावन्तः सततं गृहमेधिनः ।
भार्य्यामूलं कुलं सर्वं तस्माद् भार्य्या परा गतिः" ॥

—'योषितायां बह्वाः प्रजाः पुरुषात् सम्प्रसूताः' इति मुण्डके । 'आत्मजस्तनयः सूनुः सुतः पुत्त्र' इत्यमरः । पुत्त्रः । पुन्नाम्नो नर-कात् त्रायते इति । पूञ् पवने, पुनाति । 'सुपि' कप्रत्ययः ।

**स्व-दासी परिग्रहो हि स्व-दासभावः ॥ २ ॥**

**उपस्थित-विनाशः पथ्यवाक्यं न शृणोति ॥३॥**

---

यद्वा पूयते च, 'पुवो ह्रस्वश्च' इति वप्रत्ययः। 'स्त्री वधूर्योषिता रामा' इति त्रिकाण्डशेषेऽपि। स्त्यायति गर्भोऽस्याम्। 'स्त्यायते-र्ड्रट्' टिलोपः यलोपश्च 'टिड्ढा' इति ङीप्। प्रागुक्तमन्यत् ॥ १ ॥

सेविकापरिग्रहे स्वस्य विगानमाह स्वेति। स्वस्यात्मनः। दासी भुजिष्या परिचारिका इति यावत्। तस्याः परिग्रहोदार-त्वेन सम्भोगपात्रत्वेन च स्वीकारः। हि निश्चितं तेन स्वस्य च दासभावः सेवकत्वेन नीचत्वमिति। उक्तञ्च—

"हीयते हि मतिस्तात ! हीनैः सह समागमात्"।

इति। यथा क्षीरं पर्य्युषितदुग्धयोगाद् झटिति दधित्वमेति। नहि प्राज्ञ आत्मनः नीचत्वमिच्छति तादृशाचरणेन स्वात्मावन-तिर्लोकगर्हणञ्च, मतिमता तत्त्याज्यम्।

"परिग्रहः कलत्रे च मूल स्वीकारयोरपि।

शपथे परिवारे च राहुवक्त्रस्थ भास्करे" ॥ इत्यजयः।

'दासी वाणाभुजिष्ययोः' इति मेदिनी। दसु उपक्षये, दस्यते। कर्म्मणि घञ्। गौरादित्वात् ङीष् ॥ २ ॥

प्रत्युत्पन्नविनाशग्रस्तस्य पुंसो हितवाक्यश्रवणे प्रवृत्त्यभाव-माह उपेति। उपस्थिते सम्प्रति काले विनाशसम्भवो यस्य सः। यद्वा उपस्थितस्य विषयस्य वर्त्तमाने उच्छेदोऽस्यास्तीति अर्श आदित्वादचा सिद्धः। तादृशो जनः पथ्यं हितं समुचितञ्च

## नास्ति देहिनां सुखदुःखाभावः ॥ ४ ॥

---

वाक्यं न शृणोति । नाकर्णयति । एवं बुद्धेर्वैपरीत्येऽपि हित-जनकं सद्वाक्यं न शृणोति । उक्तञ्च—

"दीपनिर्वाण-गन्धञ्च सुहृद्वाक्यमरुन्धतीम् ।
न जिघ्रन्ति न शृण्वन्ति न पश्यन्ति प्रमत्तकाः" ॥

अत्र 'प्रमत्तका' इत्यत्र 'गतायुष' इति पाठान्तरमस्ति । अन्यच्च 'विनाशकाले विपरीत-बुद्धिः' । अपरञ्च—

"प्रायः समासन्न विपत्तिकाले
धियोऽपि पुंसां मलिना भवन्ति" ।

पथोऽनपेतं पथ्यम् । 'धर्म्मपथ्यर्थन्यायादनपेते' इत्यनेन यत् । 'पथ्या स्त्री हरितक्याञ्च पथ्यं हिते त्रिषु' इति मेदिनी वाक्यम् । उच्यते इति वच् धातोर्ण्यत् । 'चजोः' इति सूत्रेण कुः । 'वचोऽशब्दसंज्ञायां' इति वचः कुत्वनिषेधात् वाच्यमिति । शब्दसंज्ञायान्तु कुप्रत्ययाद् वाक्यम् ॥ ३ ॥

शरीरभाजां मनुजादीनां सुखदुःखयोरवश्यम्भावित्वमाह नेति । देहिनां शरीरधारिणां जीवानामिति । सुखमनुकूल-वेदनीयम् । दुःखं प्रतिकूलवेदनीयम् । एतयोरभावः कदापि नास्ति । काले कस्मिन् सुखं कस्मिन् वा दुःखमस्त्येव । देहस्य तयोः स्वाभाव्यात । कविसमयश्च—

"अचिन्तितानि दुःखानि यथैवायान्ति देहिनाम् ।
सुखान्यपि तथा मन्ये दैवमत्रातिरिच्यते" ॥ इति ।

मातरमिव वत्साः सुखदुःखानि कर्त्तार-मेवानुगच्छन्ति ॥ ५ ॥

---

'त्रिविधं दुःख'मिति कापिलं सूत्रम्। बुद्धदेवोप्याह जगति 'सर्व्वं दुःखम्' इति।

"कार्यो देहः शरीरञ्च मूर्त्तिः पिण्डः तनुस्तथा"।

दिह उपचये, दिह्यते। घञा सिद्धम्। सुखदुःख तत्क्रियायाम्, सुखयति। दुःखयति च। द्वे पचाद्यचा सिद्धे। यद्वा दुष्टानि खानीन्द्रियाणि अस्मिन् विषये देहे च। दुर्निन्दितं खनति वा। तत्र 'न्येभ्योऽपि' इत्यादिना डः प्रत्ययेन दुःखमिति सिद्धं स्यात् ॥ ४ ॥

सुखदुःखयोः पुरुषानुसरणमाह मात्रिति। वत्सास्तनयाः शिशवः। मातरं जननीमिव यथा। ते रक्षणाय प्रसूतिमनुधावन्ति। तद्वत् सुखानि दुःखानि च तत्तत्कर्त्तारं सुखदुःखभोक्तारञ्चानुगच्छन्ति अनुसरन्ति। ये ययोः सुखदुःखयोर्भोक्तारः ते तयोरुत्पादकाः। स्वस्वकर्म्मजनितं भुज्यमानं फलं सुखम् दुःखञ्च समयान्तरेऽप्यनुभवनीयम्। उक्तञ्च शास्त्रकृद्भिः—

"यथा धेनुसहस्रेषु वत्सो विन्दति मातरम्।
तथैवात्मकृतं कर्म्म कर्त्तारमनुगच्छति" ॥

अदृष्टरूपेणेत्यर्थः। अध्यात्मसंज्ञके रामायणे च—

"सुखस्य दुःखस्य न कोऽपि दाता,
परो ददातीति कुबुद्धिरेषा"। इति प्रागुक्तम्।

**तिलमात्रमप्युपकारं शैलमात्रमिव मन्यन्ते साधवः ॥ ६ ॥**

---

अन्यच्च—"चक्रवत्परिवर्त्तन्ते दुःखानि च सुखानि च" । पुरुषस्येति सम्बन्धः । दुःखलक्षणं न्यायदर्शने 'बाधना लक्षणं दुःखम्' इति । सुखस्य लक्षणं किमपि न्यायसूत्रकृद्भिर्न कृतम् । नवीनैर्दुःखाभावरूपत्वेन तत् स्वीकृतम् ॥ ५ ॥

परोपकारस्वीकारे साधूनामवश्यकर्त्तव्यत्वमाह तिलेति। तिलमात्रं तिलपरिमितम् । विन्दुमात्रमत्यल्पमपीत्यपिना सूचितम् । उपकारं हितमानुकूल्यमिति । साधवः महात्मानः ज्ञान धन विद्या निपुणाः ! शैलमात्र' गिरिपरिमितम् । अमितं महार्घं वा । मन्यन्ते स्वीकुर्व्वन्ति । असाधवस्तु हिमशैल-परिमितमुपकारं सर्षपमितं जानन्त्यविवेकात् । एष एव साध्व-साधु-प्रभेदः । अतः साधूनामुपकार-करणे सर्वे प्रचेष्टिताः भवन्ति । उक्तञ्च—

"उपकारशतेनापि दुर्जनः केन गृह्यते ।
साधुः सम्मानमात्रेण भवत्येवात्मविक्रयी" ॥

इति राजनीतौ । प्राङ्निरुक्तः साधुशब्दः । 'उपकारो हितमानुकूल्यमिति' प्राञ्चः । उपकरणमुपकारः । उपपूर्व्वात् करोतेर्घञ् । 'शैलो भूभृति शैलन्तु शैलेये तार्क्ष्ये शैलकं' इति हैमः । शिलाः सन्ति अत्रेति शिलाशब्दाज् 'ज्योत्स्नादित्वादण्' । तिल स्नेहने, तिलति । इगुपधत्वात् कः ॥ ६ ॥

**उपकारोऽनार्य्येष्वकर्त्तव्यः ॥ ७ ॥**

**प्रत्युपकारभयादनार्यः शत्रुर्भवति ॥ ८ ॥**

---

अनार्य्याणां हीनजनानामुपकारकरण-निषेधमाह उपेति। अनार्य्येषु शवरकिरातपुलिन्देषु। यद्वा नीच-पामर-लम्पट-चौरेषु। उपकारोहिताचरणमिति। अकर्त्तव्योऽविधेयः। यतस्ते तु क्रूराः मूढ़ा स्वभावतो द्वेष्टारश्चेति। तेषां हितानुष्ठाने विपदुद्धरणेऽपि प्रागेवास्तां प्रत्युपकारकरणम्, परमहिताचरणं करिष्यन्त्येव। अतस्तेषूपेक्षाम्भावयेत्। नतु मैत्री-करुणा-मुदिताः। अनार्य्याः—

"भेदाः किरात-शवर-पुलिन्दा म्लेच्छजातयः"।

इत्यमरोक्ताः। अन्ये तु 'कुमारिका खण्डवहिर्देशस्थाः वर्णव्यवस्थाविरहिता अनार्य्याः' इत्याहुः। अन्यत्पूर्व्वमुक्तम्। परस्परोपकार्य्योपकारित्वं विना सामाजिकोन्नतिः कार्य्यसम्भृद्धिश्च नस्यात्। ऋ गतौ, अर्य्यते। अर्त्तुं योग्यो वा। 'ऋहलोर्ण्यत्' इत्यादिना सिद्धम्। आर्य्यविरुद्धोऽनार्य्यः। कुत्रचित् 'उपकारो नास्तिकानादरेषु कर्त्तव्यः' इत्थं सूत्रान्तरमस्ति। तदा तु कार्य्यावस्थाविशेषे दयया तेषूपकारः कर्त्तव्यो नापि सर्व्वदा इत्यर्थः ॥ ७ ॥

अतिक्रूरस्वभावत्वेन प्रत्युपकारमकृत्वानार्य्यो वैरं करोति इत्यत आह प्रतीति। उपकर्त्तुर्विपदुत्तारणं प्रत्युपकारः प्रतिसहायकत्वमिति यावत्। तद्भयात् प्रत्युपकारकरणभया-

स्वल्पमप्युपकारकृते प्रत्युपकारङ्कर्त्तुमार्य्यो न स्वपिति ॥ ९ ॥

---

इनार्य्यः शत्रुरराति: स्यात । स च विपरीतबुद्धया प्रवञ्चकतया शत्रु: सननिष्टमाचरति । यथा भुजगो दुग्धं निपीय गरलं वमति तद्वत् । सज्जनो नैव तादृक् करोति । तदुक्तं नीतौ—

"उपकारशतेनापि दुर्जन: केन गृह्यते" ।

न केनापि ग्रहीतुं शक्यते इत्यर्थः । अत उक्तं—

"दुर्जन: परिहर्त्तव्य: सद्गुणैर्मण्डितोऽपि सन्" । इति ।

उप अधिकं करोतीति कर्म्मण्यन् । यद्वा उपकरणमुपकार: उपपूर्व्वात् करोतेः घञा सिद्ध: ॥ ८ ॥

आर्य्यस्य प्रत्युपकारकरण स्वाभाव्यमाह स्वल्पमपीति । आर्य्य सत्यनिष्ठ: कुलीनो न्यायपरायण: । स्वल्पमपि उपकारम् इच्छता पुंसा तेन कृते उपकारे प्रत्युपकारं प्रतिहिताचरणं कर्त्तुम् । न स्वपिति । शिष्टस्वाभाव्यात् नैव निद्रां याति । परं प्रत्युपकाराय आर्य्य: सततं जागर्त्तीति भाव: । 'स्वल्पकृतमप्युपकारं प्रत्युपकर्त्तुमार्य्यो न स्वपिति' । ईदृशे पाठभेदेऽस्यार्थो विशद एव । 'किञ्चिदल्पं क्षुद्रमितं स्तोकमात्रमिति' । 'स्तोकाल्पक्षुल्लका:' इत्यमरोऽपि ।

"हितानुकूलोपकाराश्च साहाय्ये दुःखहा: सदा" ।

स चोपकार: आर्थिक शारीरिक वाचनिक मानसिकभेदेन

**न कदापि देवता अवमन्तव्या ॥ १० ॥**

**न चक्षुः समं ज्योतिरस्ति ॥ ११ ॥**

---

चतुर्विधः। धनदानेन, परिश्रमेण, हितवाक्येन, इष्टचिन्तया चेति ॥ ८ ॥

देवानां गुरूणाञ्चापमानकरणनिषेधमाह नेति। कदापि कस्मिंश्चित्काले देवता देवा अमराः। तादृशा लोकाश्च। ते नावमन्तव्याः। अत्र देवता इत्युपलक्षणम्। अन्ये तत्तुल्या स्तेषां तादृशानि कार्य्याणि च ज्ञेयानि। केनापि पुरुषेण ते नावमन्तव्याः प्रमादाद्बलाद्वा तुच्छीकृत्य न लङ्घितव्याः। देव-तत्सदृश-लोक-तत्कार्य्याणाञ्चावज्ञानं कदापि न कार्य्यमिति सारः। तत्करणे स्वस्य परस्य च हानं स्यात्। तथा च 'न च दैवात् परं बलम्' इति। 'न कदाचिद्दैवकृतान्यवमन्तव्यानि' इति सूत्र पाठे तु देवो नृपो गुरुजनश्च। एतेषां ये आदेशाः यानि च कार्य्याणि तानि नावज्ञातव्यानीति। तदात्वे सुशिक्षा सदाचरणहानिः स्यात्। देवशब्दात् स्वार्थे तल्॥ १० ॥

मानवानां नेत्रज्योतिभिः सममन्यज्ज्योतिर्नास्तीत्याह नेति। चक्षुर्नयनं नेत्रमिति दर्शनेन्द्रियमिति च कथ्यते। वस्तु दर्शने तत्समं तुल्यमन्यज्ज्योतिर्वस्तु रूपग्रहणलिङ्गं नास्ति। चक्षु-रिन्द्रियेण लोको हि सर्वं द्रष्टुं शक्नोति। यस्य तु तन्नास्ति स चान्धः वहिरनन्त सौरालोकेन किमपि द्रष्टुं नार्हति

चक्षुर्हि शरीरिणां नेता ॥ १२ ॥

---

विनापि दर्शनशक्त्या। अतश्चक्षुर्महता यत्नेन रक्षणीयम्। तदुक्तं नीतौ 'न नेत्रहीनः कनकाद्यलङ्कृतः' इति। रससेवन-शोणित-शुक्र-विकृत्यत्युदरामय-पैत्तिक-संक्रामक-रोगादि-दोषैर्नेत्रस्य दृष्टि-हानिः प्रजायते। अन्यदस्ति वैद्यके माधवकरीये निदाने च। 'नेत्रमीक्षणनयने चक्षुर्दर्शनमक्षि च' इति कोषः॥ 'चष्टे' चक्षते-ऽनेन वा। चक्षिङः धातोः 'चक्षेः शिच्च' इत्यौणादिकसूत्रादुसिः शित्त्वा दनार्द्धधातुकत्वात् ख्याञादेशो न भवति ॥ ११ ॥

पूर्व्वसूत्रे नेत्रज्योतिषः श्रेष्ठत्वमुक्त्वा अस्मिन् सूत्रे जीवाना-न्तस्य नेतृत्वमाह चक्षुरिति। चक्षुर्लोचनमिति। शरीरिणां प्राणिनां सर्वेषाम्। हि निश्चितम्। नेता नायकः। सर्व्व-कर्म्मसु दर्शनशक्त्या प्रेरकोऽन्धकारे आलोके च परिचालकः। यस्य चक्षुषी नस्तः सोऽन्धः। यस्यैकं चक्षुर्नास्ति सः काणः। यथा हि नेता सर्व्वान् कर्म्मकरान् हितकरकर्म्मसु चालयति तथा चक्षुर्दृष्टिमतः लोकान् जगति स्वशक्त्या रूपग्रहणादौ प्रेरयतीति भावः। शरीरान्तः सूक्ष्मस्नायु-प्रवाहिताक्षिगोलका-न्तर-कृष्णतारकाग्रवर्त्ति-रूपग्रहण तेजोवत्त्वं चक्षुस्त्वमिति। पित्तादिवैषम्ये ओजःक्षये मस्तिष्कक्षये च चक्षुर्दर्शनशक्तिहानं स्यात्। तथा च वैद्यके—

"तथा ऋतूनाञ्च विपर्य्ययेण,
क्लेशाभिघातादतिमैथुनाच्च।

**अपचक्षुषः किं शरीरेण ॥ १३ ॥**

**नाप्सु मूत्रं कुर्य्यात् ॥ १४ ॥**

---

वाष्पग्रहात् सूक्ष्मनिरीक्षणाच्च,

नेत्रे विकारान् जनयन्ति दोषाः" ॥

मांस-विमलक्षीर-नवनीत-हविर्भक्षणेन तच्छक्तिर्वर्द्धते। 'ज्योतिरग्नौ दिवाकरे। पुमान्, नपुंसकं दृष्टौ स्यान्नक्षत्र प्रकाशयोः' इति मेदिनी ॥ १२ ॥

दर्शनशक्तिशून्य चक्षुषो जनस्य शरीरधारण-भारो दुर्व्विषह इत्याह अपेति। अपचक्षुषः दर्शनशक्ति-विरहित-नेत्रस्य। शरीरेण देहेन किम्। तेन न किमपि कार्य्यं सिध्यति। वाहकविहीनं यानमिव भवति। तदुक्तं विष्णुना—

"काणेन चक्षुषा किंवा चक्षुः पीड़ैव केवलम्"।

चक्षुर्वदन्येषामपि करणानामपाटवे तद्वैकल्यं स्यात्। तथाच—

"वाधिर्य्यं कुण्ठितान्ध्यञ्च जड़ता जिघ्रता तथा।

मुकता कौण्य-पङ्गुत्वं क्लैव्योदावर्त्तमन्दताः" ॥

इति तत्त्वकौमुद्यां ज्ञानकर्म्मेन्द्रियाणां शक्तिहानमुक्तम्। अपचक्षुष्ट्वमाह वैद्यके—

"वातात् पित्तात् कफाद्रक्तादभिस्यन्दश्चतुर्विधः।

प्रायेण जायते घोरः सर्वनेत्रामयाकरः" ॥

अपचक्षुषः सकलवस्तुदर्शनविरहेण शरीरभारः क्लेशप्रद इति। पदनिरुक्त्यादिकं पूर्व्वमुक्तम् ॥ १३ ॥

## न नग्नः प्रविशेज्जलम् ॥ १५ ॥

---

सम्प्रति विषयान्तरमवतारयन् सलिले मूत्रत्यागपरिहारमाह नेति। अप्सु सलिलेषु। स्वभावतः स्वच्छे वारिणि मूत्रं प्रस्रावः उपस्थ-निर्गतवारि। न कुर्य्यान्नत्यजेदित्यर्थः। तदुक्तं धर्म्म-शास्त्रकृता मनुना—

"न मूत्रं पथि कुर्व्वीत न भस्मनि न गोव्रजे।
न फालकृष्टे न जले न चित्यां नच पर्वते॥
न जीर्णदेवायतने न वल्मीके कदाचन"। इत्यादि।

देहनिर्गतदुष्टपदार्थत्वेन च जलं दुष्टं विषाक्तं भवति। तत्पाने रोगोत्पत्तिः स्वास्थ्यनाशश्च। एवं राजमार्गे देवालये गोगृहे परि-षदि वासगृहे श्मशाने तीर्थे विचार-विद्यागारे मूत्रं न त्यजेत्। नच तद्वेगधारणं कुर्य्यात्। तद्वेगधारणे रोगसम्भावना प्रबला। दण्डायमानस्य वारिपाने मूत्रत्यागे च मुष्कस्थौल्यरोगो भवति। गोमूत्रस्य निक्षेपे मूत्र-दुर्गन्धमयस्थाने तद्विषदोषं नश्यति। मूत्र प्रस्रवणे, मूत्रयते। ततो घञ्। अप्स्विति। आप्लृ व्याप्तौ, आप्नुवन्ति आप्यन्ते वा। 'आप्नोतेर्ह्रस्वश्च' इति क्विप्। ह्रस्वत्वञ्च ॥१४॥

अपरिहिताम्बरस्य जलप्रवेशे जलजन्तुदंशनभयात्तन्निषेध-माह नेति। नग्नो विवसनो जलं वारि। न तस्मिन् विशेत् नापि निमज्जेत् अवगाहेत। तादृशजनस्य जलावमज्जने जलजीवै-राक्रमणसम्भवः सलिलस्वच्छतापि विनश्यति। एवं नग्नः सन्

**यथा शरीरं तथा ज्ञानम् ॥ १६ ॥**

**यथा बुद्धिस्तथा विभवः ॥ १७ ॥**

---

मार्गे गमनं भोजनं शयनमपि न कुर्य्यात्। 'नग्नो वन्दि-क्षपणयोः पुंसि त्रिषु विवाससि' इति विश्वः। कौर्म्मे च—

"न नग्नां स्त्रियमीक्षेत पुरुषं वा कदाचन।
नच मूत्रं पुरीषं वा न वै संस्पृष्टमैथुनम्॥
नोच्छिष्टं संस्पृशेन्नित्यं न नग्नः स्नानमाचरेत्।
न गच्छेत् न पठेद्वापि न चैव स्वशिरः स्पृशेत्" ॥ इति।

ओलसजी ब्रीड़ि, लज्जते। अकर्मकत्वात्ततः क्तः। 'ओदितश्च' इत्यनेन नत्वं स्यात्॥ १५॥

शारीरिकशक्त्यनुसारि-ज्ञानमाह यथेति। यथा यादृशं शरीरं देहस्तत्सामर्थ्यञ्च तादृक्। यथा ज्ञानमपि विषयेन्द्रियसन्निकर्षजन्यं यत्तत् लोकस्य भवति। शरीरपरिमाणान्नाधिकं न वा न्यूनम्। यद्वा ज्ञानं बुद्धिः। शरीरे पुष्टे सम्यक् सुस्थे ज्ञानमपि प्रखरं पुष्टञ्च भवति। विपुष्टे क्षीणे रुग्णे च ज्ञानञ्च तथैव प्रकाशते, शारीरिक नैरुज्याज्ज्ञानं वर्द्धते। तज्ज्ञानं नानाविधम्। यथा-विषयज्ञानम्। शिल्पशास्त्रयोर्विज्ञानम्। पदार्थतत्त्वसूक्ष्मवीक्षणेन तत् संयोगवियोगाभ्याञ्चाभिनवस्त्वाविस्करणं विज्ञानम्। ईश्वरविषये तत्त्वज्ञानम्। अतस्मिन् तद्बुद्धिर्मिथ्याज्ञानञ्च। 'नहि ज्ञानेन सदृशं पवित्रमिह विद्यते' इति सर्वथा ज्ञानप्राशस्त्यमुक्तम्। ज्ञा अवबोधने। जानातेः करणे ल्युट् ॥१६॥

## अग्नावग्निं न निक्षिपेत् ॥ १८ ॥

लोकानां बुद्ध्यनुसारेण विभवः स्यादित्याह यथेति । बुद्धिः धीशक्तिर्मनीषेति । सा यस्य यादृशी भवति, प्रखरा मलिना वा । तस्य विभवः सम्पत्तिर्विपुलधनं लोके तादृशं भवति । मतिमान् स्वमति-प्राखर्य्यात्तद्बलेनाधिकं धनमर्जयति । मति-हीनः सञ्चितमपि वित्तं परिहरति । तदुक्तं कौटिल्यैरस्यावसाने—

'बुद्धिरेव जयत्येका पुंसः सर्व्वार्थसाधिनी ।

यद्बलादेव किं किं न चक्रे चाणक्यभूसुरः' ॥ इति ।

शिक्षासौशील्य-सत्सङ्गैः लोकस्य बुद्धेः प्राखर्य्यम् । तेन धन-मानादेरागमः सुकरः स्यात् । मूढ़स्य न तत् स्यात् । 'बुद्धि-र्मनीषा धिषणा धीः प्रज्ञा शेमुषी मतिः' इत्यमरः । बुधिर् बोधने, बुध्यते अनया इत्यतः क्तिन् । विपूर्व्वाद् भवतं रचा विभव इति ॥ १७ ॥

प्रज्वलिताग्नौ पुनरग्निनिक्षेपस्य निषेधमाह अग्नाविति । अग्नौ वह्नौ वैश्वानरे च । प्रज्वलिते पुनरग्निनिक्षेपणं वृथा भवति । तद्द्विगुणः सन् स्वस्यान्यस्य च दाहं करिष्यतीति । यद्वा जले जलप्रक्षेपवत्तस्य वैयर्थ्यञ्च । अथवा पानोन्मत्तस्य रागा-न्धस्य च पानसाहाय्यं क्रोधवर्द्धनञ्च यथा नोचितन्तथा पुनरग्ना-वग्निक्षेपो नोचित इति । 'अग्निर्वैश्वानरो वह्निः' इत्यमरः । अग्निः । अगि गतौ, अङ्गति । ततोऽङ्गेर्न लोपश्च । इत्यौणा दिकान्निर्न लोपश्चेति । क्रुद्धस्य क्रोधशान्तये, सुरासक्तस्य च तन्निवृत्तौ सदा यतितव्यं न तद्वर्द्धनाय । तदुक्तम्—

**परदारान् मनसापि न गच्छेत् ॥१९॥**

**तपस्विनः पूजनीयाः ॥२०॥**

---

"कामिनो वर्णयन् कामान् लोभं लुब्धस्य वर्णयन्।
नरः किं फलमाप्नोति कूपेऽन्धमिव पातयन्" ॥

नीतौ चैवमेव प्रशस्तम् ॥ १८ ॥

सम्प्रति विषयान्तरोदाहरणच्छलेनाह परेति। परेषां लोकानां दारान् पत्नीः पाणिगृहीतीरिति। मनसा चित्तेन तद्वृत्त्या सङ्कल्पालोचनप्रसङ्गेन च। यद्वा रिरंसया रूपलावण्य-सौन्दर्य्यचिन्तया च न गच्छेत् नाभिरमेत्। सर्व्वेन्द्रियव्यापारा-मनोव्यापारपूर्व्वका भवन्तीत्यत उक्तं मनसेति। मानसिक-चिन्तयेन्द्रिय-चाञ्चल्य सम्भावना तच्छक्तिहानञ्चेति। उक्तञ्च राजनीतौ—

'परीवादं परस्वेच्छां परदाराभिमर्षणम्।
परवेश्मनि वासञ्च न कुर्व्वीत कदाचन' ॥ इति।

सन्त्यन्यानि धर्म्मशास्त्रे प्रतिषेधसूचकवचनानि। तत्कृते स्वास्थ्य-सत्य-चरित्र-चित्तप्राशस्त्यानां हानमवश्यं स्यात्। दाराः, दृ विदारणे, दारयन्ति भ्रातॄन् इति णिजन्तः। 'दारजारौ कर्त्तरि णिलुक्च' इति वार्त्तिकाद् घञ्। मन ज्ञाने, मन्यतेऽनेनेति असुन्। तेन मनसा ॥ १९ ॥

परमेशध्यानपरायणानामाराधनेन कल्याणमाह तपस्विन इति। तपस्विनः सन्न्यासिनो योगिन इति। ईदृशा ये, ते

## अन्नदानं भ्रूणहत्यामपि मार्ष्टि ॥ २१

लोकानां पूजनीयाः अर्हणीयाः भक्तिभाजना इति यावत् । नतु वेशमात्रधारिणः केवलं गैरिक-काषायाम्बरधारिणः । यथार्थ साधवः कल्याणाय तपसः षड्भागं लोकेभ्यो वितरन्ति । तेषां तपश्चरणेन आशिषा च सामाजिका निरापदो भवन्ति । अतः सन्न्यासिनो महनीयाः । यत्र तपश्चरन्ति तत्र तपो माहात्म्यात् भुजग नकुलयोर्विरोधाभावः । देशस्तु क्षोभरहितः आधिव्याधि-हीनः शान्तिपूर्णः स्यात् । तदुक्तं मार्कण्डेयपुराणे—

"प्रशान्त-श्वापदाकीर्णं मुनि-शिष्योपशोभितम्" ।

मुनिवर्य्यस्य मेधसस्तपोवनमोदृशमासीदित्यर्थः । तपस्वि-भिक्षु-दण्डि प्रभृतीनां दर्शनेन पुण्यं प्रजायते । बुद्धिरपि तादृशी समु-देति । 'तपस्वी तापसे चानुकम्प्ये' इति मेदिनी । तपः कृच्छ्र-चान्द्रायणादीनि कर्म्माणि । तदस्यास्तीति 'तपः सहस्राभ्याम्' इति विनिः ॥ २० ॥

अन्नदानमाहात्म्यमाह अन्नदानमिति । अन्नानां क्षुन्निवर्त्तका-दनीयद्रव्याणां दानमन्यस्मै वैधार्पणम् । देवविप्र ब्रह्मचारि-विद्यार्थिसाधु-दीनान्धातुर-पङ्गु-निःसहायेभ्यो निजधनस्य प्रीत्या समर्पणम् । तथा च श्रुतिः 'दानेन द्विषन्तो मित्रा भवन्ती'ति ।

"अन्नेन धार्य्यते सर्व्वं जगदेतच्चराचरम् ।
अन्नदानात् परं दानं न भूतं न भविष्यति" ॥

## न वेद-वाह्यो धर्म्मः ॥ २२ ॥

---

"कलौ अन्नगत-प्राणाः न बुद्धिबलजीवनम्" ।
'अन्नाद्भवन्ति भूतानि'। 'वृष्टेरन्नं ततः प्रजाः'। इत्यादि स्मृतयश्च। अन्न-गुणाश्च 'बुद्धि-शुक्र-प्रीति-पुष्टिधात्विन्द्रियबलकारित्वं जीवनवर्द्धकत्वं गुरुत्वं क्षुधाक्षय-रोग-श्रम-कार्श्यनाशित्वं पथ्यत्वञ्चेति। पुराण-नवोष्ण-शीत-पर्य्युषितभेदेन अन्नानां गुणतारतम्यमस्ति। सामिषान्नान्निरामिषान्नं नैरुज्यकरमायुर्वर्द्धकञ्चेति। भ्रूणस्य गर्भस्य हननं विनाशश्च। तज्जनितं पापमपिमार्ष्टि। अन्नदानेन तत् प्रणश्यति। अद् भक्षणे, अद्यते। अदः क्तप्रत्ययः। 'अन्नाण्' इति निपातनात् सिद्धम्। 'बहुलं तणि' इति वार्त्तिकाद् अदः स्थाने न जग्धिरादेशः। 'भ्रूणो गर्भेऽर्भके कुक्षौ सन्धौ पनसकण्टके' इति मेदिनी। 'भ्रूण आशा विशङ्कयोः' इत्यन्यत्र च। भ्रूण्यते, घञा सिद्धः। सूत्रादौ 'यथा चरितमिति' कुत्रचित् पाठः। तत्रार्थः सुगमः॥ २१ ॥

धर्म्मस्य वेदवाह्यत्वे निषेधमाहनेति। वेदाश्चत्वारः। ऋक साम-यजुरथर्वाणः। तेषां शिक्षादयोऽङ्गानि षट्। उपवेदाश्चत्वारः। आयुर्वेद-धनुर्वेद-गान्धर्वार्थशास्त्राणि। एते साङ्गोपाङ्गवेदाः। स्मृतीतिहासपुराणानि वेदमूलकानीति। वहिर्भवो वाह्यः। वेदेभ्यो वाह्यो वेदवाह्यः। वेदविरुद्धः। तादृशो धर्म्मो नाचरणीयः। वेदमूलको धर्म्मोऽनुष्ठेयः। तथाच—

"वेद-प्रणिहतो धर्म्मो ह्यधर्म्मस्तद्विपर्य्ययः"। इति।

## न कदाचिदपि धर्म्मं निषेधयेत् ॥२३॥

---

मनुना च—"या वेदवाह्याः स्मृतयः याश्च काश्च कुदृष्टयः"। वेदवाह्याः स्मृतयश्चार्वाकादीनां नास्तिकानाम्। सर्व्वेषां धर्म्मादिविषयाणां साङ्गोपाङ्ग-वेदमूलत्वेऽपि धर्म्म-दर्शन-चिकित्सा-ज्यौतिष-मन्त्र नीतिशास्त्राणां सिद्धान्तस्योद्देश्यगतपार्थक्यमस्त्येव। तेनेश्वरे कस्यापि विप्रतिपत्तिर्नास्ति। लोकविधारकोऽभ्युदय निःश्रेयससिद्धिप्रदो धर्म्मः। शास्त्रयोनित्वाधिकरणे ऋग्वेदादेः शास्त्रत्वमुक्तम्। गीतायाञ्च शास्त्रविध्यनुसारेण धर्म्मानुष्ठाने ऐहिकविशेषसुखं पारलौकिकपरागतिश्चोक्ता, तद्विरुद्धानुष्ठाने तयोरभावः। प्राङ्निगदितमन्यत्, कोष-पदनिरुक्तौ प्रागुक्तेस्तः॥ २२ ॥

धर्म्मविरुद्धाचरणे प्रतिषेधमाह नेति। धर्म्ममभ्युदय-निर्वृति-कारणं वेद-स्मृति-पुराणेतिहासविहितम्। कदाचिदपि क्रोध-द्वेषानादरभरेणापि कस्मिंश्चित्कालेऽपि। न निषेधयेत् नापि प्रतिषेधयेत्तद्विरुद्धाचरणं कुर्य्यात्। सदा तं कायमनोवाग्भिः सर्व्वकर्म्मस्वनुपालयेत्। तदुक्तं भारते विदुरनीतौ—

"न जातु कामान्नभयान्नलोभा-
द्धर्म्मं त्यजेज्जीवितस्यापि हेतोः"।

यतश्च 'धर्म्मेण हीनाः पशुभिः समानाः'। धर्म्महीना लोका पशुवत् काम-लोभ-क्रोधपरायणाः परस्परम् आक्रमन्ति निर्दयाः स्वार्थान्धाश्च स्युः तेन समाजेषु चिराशान्तिः। मनुना च—

स्वर्गं नयति सुनृतम् ॥२४॥

---

'एक एव सुहृद्धर्म्मो निधनेऽप्यनुयाति यः ।
शरीरेण समं नाशं सर्व्वमन्यत्तु गच्छति' ॥

सदा जीवितकाले यदि धर्म्मानुष्ठानेऽशक्तस्तदा कस्मिन्नपि कालेऽवश्यमनुष्ठेयः । धार्म्मिकः सन्तुष्टः परहितरतो मान्यो लोके प्रशंसार्हश्च भवति । अधार्म्मिके विश्वासाभावः । 'कदाचिदपि धर्म्मं निषेवेत' इत्यपि पाठान्तरमस्ति । तदाले कस्मिंश्चित्काले धर्म्माचरणं कुर्य्यात् । प्रागुक्तमन्यत् ॥ २३ ॥

प्राग्धर्म्मसंरक्षणे प्रयोजनमुक्त्वा सम्प्रति तत्फलमाह स्वर्गमिति । सुनृतं सम्यक् सत्यम् । तच्च धर्म्माचरणजनितं फलम् । सत्यपरं लोकं स्वर्गं निर्व्विशेषसुखरूपममरस्थानं नयति प्रापयति । तदुक्तं श्रुतौ—

'सत्यमेव जयते नानृतम्,
सत्येन पन्था विततो देवयानः ।
येनाक्रमन्त्यृषयो ह्याप्तकामाः,
यत्र तत् सत्यस्य परमं निधानम्' ॥

काटके—

'स्वर्गे लोके न भयं किञ्चनास्ति,
न तत्र त्वं जरया बिभेति ।
उभे तीर्त्त्वा अशनाया पिपासे,
शोकातिगो मोदते स्वर्गलोके' ॥

## नास्ति सत्यात् परन्तपः ॥२५॥

---

'सुनृतस्य फलं स्वर्गः पापाद्दुःखं प्रजायते'।

इति स्मृतिश्च। 'सुकृतमिति' पाठे तु सुष्ठुकृतं शास्त्रविहितं सत्-कर्म च। तच्च याग-योग-तपश्चरणादि। तदनुष्ठातॄन् मानवान् स्वर्गं प्रापयतीति वार्थः। पुण्येन कर्मणा गमनमूर्द्धं स्वर्गादौ। अधर्म्मेण च गमनमधस्थात् पातालादौ। छान्दोग्यश्रुतौ च—'तस्मिन् यावत् सम्पातमुषित्वाऽथैतमेवाध्वानं पुनर्निवर्त्तन्ते' इति। तस्मिन् स्वर्गधाम्नि। यावन्निर्दिष्टकर्म्मफलभोगार्थम्। उषित्वा-निवासं कृत्वा। अथानन्तरम्। एतमेवाध्वानं दक्षिण-मार्गम् आश्रित्य पुनरागच्छन्ति इति श्रुत्यर्थः। गीतायाञ्च—

'ते तं भुक्त्वा स्वर्गलोकं विशालम्
क्षीणे पुण्ये मर्त्यलोकं विशन्ति'।

सुनृतस्य सत्यस्य फलमुक्तं योगदर्शने। तथा च 'सत्यप्रतिष्ठायां क्रियाफलाश्रयत्वम्'। 'सत्यान्नास्ति-परो धर्म्मः' इति च। अन्यत् सत्यमाहात्म्यं भारतादौ पुष्कलमस्ति। प्राङ्निगदितमपरम् ॥ २४ ॥

सत्यस्य तपसः श्रेष्ठत्वमाह नेति। सत्यात्तथ्यात् सुनृताद् यथा भूतविषयादिति यावत्। परं श्रेष्ठं तपः आराधनं योगो वा नास्ति। सत्यसंरक्षणेन परिसेवनेन च लोकः काले महान् तपस्वी भविष्यतीति। सत्यपरा लोकाः समाजेषु अनायासेन विश्वस्ततया च सर्व्वं कार्य्यं सम्पादयन्ति। सत्यं परमेशस्य स्वरू-

**सत्यं स्वर्गस्य साधनम् ॥ २६ ॥**

**सत्येन धार्य्यते लोकः ॥ २७ ॥**

---

पम् । अतः सततं तत्पालनं परमं कल्याणकरन्तप इति ज्ञेयम् । असत्य बाहुल्ये व्यावहारिक-विषयेषु लोकानां परस्परं महती कार्य्यहानिर्भवति । तत्य पालनञ्च चित्ते वाचि क्रियायामैकरूप्यम् । यथास्थितं यथास्वरूपं वस्तु तथैव वचसा कर्म्मणा मनसा च व्यवहरिष्यते । राजनीतौ तु महाप्रयोजन साधने क्वचित्तदत्यतिक्रमः स्यान्नापि सर्व्वत्रेति ॥ २५ ॥

सत्यस्य श्रेष्ठसाधनत्वमाह सत्यमिति । स्वर्गस्यामरधाम्नो देवलोकस्येति । यावत् । साधनं हेतुः । सत्याचरणशीलाः तत्साधनबलेन देवलोकं गन्तुमलं शीनार्हा भवन्ति । यतः सत्यधामैव तल्लोकः । तदुक्तं स्मृतौ—

"सत्येन विधृता देवाः सत्येन विधृताः प्रजाः ।

सत्येन कार्य्य-सम्पत्तिः सत्याद् दुःखं प्रणश्यति" ॥ इति ।

'सत्यं शपथ-तथ्ययोः' इत्यमरः । सति परमेशे यथाभूतवस्तुनि च साधु सत्यम् । 'तत्र साधुः' इति यत् । विषयेऽस्मिन् प्रागुक्तमन्यत् । सत्यञ्च ऋषिभिर्यमादिषु परिगृहीतम् । अन्यन्महाभारते योगदर्शनभाष्ये चास्ति ॥ २६ ॥

सत्यस्य लोकविधारकत्वमाह सत्येनेति । सत्येन यथाभूत वैध-व्यवहारेण । सर्व्वो लोको धार्य्यते । तेन तत्र सर्व्वो लोको-

## सत्याद्देवो वर्षति ॥ २८ ॥

ऽवस्थीयते। सत्यं यदि विलुप्तं स्यात् तदा सर्व्वमाकुलमेव भवति। तदुक्तं वृद्धचाणक्ये—

"सत्येन धार्य्यते लोकः सत्ये सर्व्वं प्रतिष्ठितम्।
सत्यात् स्वर्गमवाप्नोति ह्यसत्येन विनश्यति" ॥

भारते राजधर्म्मे च—

"सत्यञ्च समता चैव दमश्चैव न संशयः।
अमात्सर्य्यं क्षमा चैव ह्रीस्तितिक्षाऽनसूयता ॥
त्यागो ध्यानमथार्य्यत्वं धृतिश्च सततं दया।
अहिंसा चैव राजेन्द्र! सत्याकारास्त्रयोदश ॥
कीर्त्तिर्यशश्च पुण्यञ्च पितृदेवर्षि-पूजनम्।
आद्यो विधिश्च विद्या च सर्व्वं सत्ये प्रतिष्ठितम्" ॥

सर्व्वमन्यदाग्नेये वाराहे गारुड़े ब्रह्मवैवर्त्ते च पुष्कलमस्ति। विस्तरभिया ह्यत्र नोक्तम् ॥ २७ ॥

सत्यपालनफलमाह सत्यादिति। सत्यपरायणा हि दान-यज्ञ-तप आदिभिर्देवाराधनं नियतं कुर्व्वन्ति। तेन देवः प्रसन्नः सन् काले वर्षति। तदुक्तं मनुना—

"आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजा" ॥ इति।

गीतायाञ्च—

'अन्नाद्भवन्ति भूतानि पर्जन्यादन्नसम्भवः'।

## नानृतात् परं पापम् ॥ २९ ॥

---

यज्ञधूमान्मेघो मेघाद्वृष्टिः वृष्टेरन्नं ततः प्रजाः। ज्योतिषि च—

"ग्रहाणामुदये चास्ते तथा वक्रातिचारयोः।
प्रायो वर्षन्ति जलदा नृपाणामुद्यमेऽपि च" ॥

"वारिपूर्णां मही कृत्वा पश्चात् संक्रमते गुरुः"।

इति च तत्रैवास्ति।

"देवः सुरे घने राज्ञि देवमाख्यातमिन्द्रिये"।

इति विश्वः। दीव्यन्तीति देवाः। पचादिषु पाठात्ततोऽच् ॥२८॥

अनृतस्य पापजनकत्वमाह नेति। अनृतं न ऋतमनृतम्। अनृतं मिथ्येति। अनृतादसत्यात् परं प्रधानं पापं दुरितं नास्ति। यस्मादनृतमाचरति स सर्वं पापं कर्त्तुं शक्नोति। असत्याचरणशीलेऽशेष पापं क्रमशः सम्भविष्यति। 'अनृतं कृषिः। विततन्त्वनृतं वचः' इत्यमरः। नीतिविषयविशेषेषु सर्वं सत्यानृतमिथुनीभूतम्। तत्र विवेकसम्पन्नेन पुंसा क्षीरनीरयोर्हंस इव सत्यमादाय कार्य्यं सम्पाद्यमिति। विशेषस्तु भारते कर्णपर्वणि—

"विवाहकाले रतिसंप्रयोगे,
प्राणात्यये सर्वधनापहारे।
विप्रस्य चार्थे ह्यनृतं वदेच्च,
पञ्चानृतान्याहुरपातकानि" ॥

**न मीमांस्या गुरवः ॥३०॥**

**खलत्वं नोपेयात् ॥३१॥**

---

अतः अनिष्टतो हिताधिक्यान्नीतिनिमयानुसारेण विवाहादि-पञ्चकेषु अनृतकथनं न पापजनकमिति ॥ २९ ॥

गुरूणां ज्ञानगुणवयोवृद्धानां वचांसि कार्य्याणि च अमीमांस्यानीत्याह नेति। गुरवः शिक्षकाः ज्ञानधर्म्मोपदेष्टारः अचार्य्या इति यावत्। ते न मीमांस्याः 'पूजितविचार-वचनो मीमांसाशब्दार्थः' इति भामती। विप्रतिपत्तौ सम्य-ग्राद्धान्तो मीमांसा। अन्यत्र जैमिन्यादिप्रणीतदर्शने वेदा-दिवाक्यानामविरोधापादानं विचारणा चेति। मीमांसन-योग्याः मीमांस्याः। न तेषु तेषामनुष्ठितकार्य्येषु च। मन्द-मतीनां गुणा दोषाश्च विचार्य्याः। प्राज्ञानां समीच्यकारिणां गुणदोषविचारोऽज्ञैर्नैव कार्य्यः। उक्तञ्चान्यत् 'आज्ञा गुरूणां ह्यवि-चारणीया' इति। प्राज्ञानां कार्य्ये अज्ञैर्दोषप्रदर्शने कार्य्यव्याघा-तोऽशिष्टाचरणमपि वर्द्धते। प्राज्ञाः सूक्ष्मबुद्ध्या कार्य्याणि विधा-स्यन्ति, तैः प्राकृतजनदोषप्रदर्शनमुपेक्षणीयम्। यतः मेघध्वनि-श्रवणात्परं पञ्चाननो गर्जति न हि बहुगोमायुरुतश्रवणात् परमिति ॥ ३० ॥

दुराचरण-शीलत्वस्य निषेधमाह खलत्वमिति। खलत्वं कलह-शीलत्वं दुर्जनत्वमिति यावत्। नोपेयात् लोकैः सार्द्धं वृथा पैशुन्यादिकं नाचरेत्। यस्तु स्वभावतो दुर्जनस्तस्य

## नास्ति खलस्य मित्रम् ॥३२॥

प्रतिक्षणं विपदापतति, अपरमपि विडम्बयति । 'पिशुनो दुर्जनः क्रूरः खलो दुःशील इत्यपी'ति व्याडिः । 'खलः कल्के भुवि स्थाने क्रूरे कर्णे जपेऽधमे' इति मेदिनी च । 'कलहं नोपेयात्' इत्यपि पाठान्तरमस्ति । तदात्वे अर्थः सुगमः । कविसमयश्च—

'न दुर्ज्जनः सहायः स्याद् भुजङ्ग-प्रकृतिर्यतः ।
उपकारच्छलेनैव पश्चाद् दुःखं प्रदास्यति' ॥

खल सञ्चये, खलतीत्यतोऽचः सिद्धम् । यद्वा खं छिद्रं लाति यः स खलः । सदा परच्छिद्रानुसन्धानपूर्व्वकं विवदतीति भावः ।

खलस्वभावस्य बन्धुत्वाभावमाह नेति । खलस्य दुर्जनस्य मित्रं सखा नास्ति । सर्व्वैः सार्द्धं प्रीतिपूर्णव्यवहाराभावात् । तादृशे व्यवहारे कृते खलत्वस्यावसराभावः । यतः—

'व्यवहारेण जायन्ते मित्राणि रिपवस्तथा' । इति ।

सद्व्यवहारे सौहृद्यं, दुर्व्यवहारे वैरित्वञ्च भवति । उक्तञ्च नीतिनिपुणैः—

'दुर्जनेन समं सख्यं प्रीतिश्चापि न कारयेत्' ।

इति प्रागुक्तमन्यत् ।

'नास्तिकलहस्य मित्र'मिति पाठान्तरत्वे कलहस्य तत्प्रियस्य लोकस्येत्यर्थः । अत्र कलहोऽस्यास्तीति अर्श आदित्वादच् ।

**लोकयात्रा दरिद्रान् बाधते ॥३३॥**

**अतिशूरो दानशूरः ॥३४॥**

---

'कलह-विग्रहौ' इत्यमरः । 'कलन्तु मधुरध्वनौ' इति धरणिः । कलस्य हननम् । अन्येभ्योऽपि इति वार्त्तिकात् हन्तेर्डः ॥३२॥

निःस्वस्य लोकसमागमः पीड़ादायकस्तमाह लोकेति । लोकयात्रा लोकानां समागमः । स्वगृहे अशेषजनागमः । यद्वा उत्सवः बहुसम्मेलनम् । दरिद्रान् निर्द्धनान् लोकान् सा बाधते । निरन्तरं धनाभावात् क्लिश्नाति । दरिद्रास्तु समागतलोकानां स्थानदानपानभोजनादिभिः परितोषजनने असमर्था भवन्ति । अतस्ते दुःखिताः क्लिश्नन्ति । 'यात्रा तु यापनेऽपि स्यात् गमनोत्सवयोः स्त्रियाम्' इति मेदिनी । धनवन्तस्तु लोकयात्रानृत्योत्सवैरानन्दमधियन्ति । उक्तञ्च वृद्धैः—

'लोकयात्रा विवाहस्य उत्सवो बान्धवागमः ।
गीतं नृत्यं देवसेवा धनिकानान्तु शोभनम्' ॥

या प्रापणे, यानम् । 'हु या माश्रभसिभ्यस्त्रन्' इति याते स्त्रन् । स्त्रियामाप् । दरिद्रा दुर्गतौ, दरिद्राति । ततः पचाद्यच् ॥३३॥

धनदातुर्वीरश्रेष्ठत्वमाह अतीति । दान-शूरः । शूरो दाने सदुद्देशे स्वधनस्य सम्यग्तर्पणे । यद्वा धर्म्मार्थं स्व-स्वत्वध्वंसपूर्वक-परस्वत्वापादानकर्मणि । तत्र शूरो वीरः वदान्यः । अतिशूरोऽधिकश्रेष्ठः, वीरो दैहिकबलात् शौर्य्यमात्रं प्रकटयति । दानशूरस्य

**भूषणं गुरु-देव-ब्राह्मणेषु भक्तिः ॥३५॥**

**सर्व्वस्य भूषणं विनयः ॥३६॥**

---

दान-बाहुल्येन बहूनां जीवनरक्षणं धर्म्मादिकार्य्यञ्च सम्पादयति अतो वीरादपि श्रेष्ठः। दानशूरः सकल दीनदुःखापहारको हित-कृद्धार्मिकश्चेति भावः। 'शूरोवीरश्च विक्रान्तः'। 'शूर वीरविक्रान्तौ' शूरयति। इत्यस्मादचा सिद्धः। प्रागुक्तमन्यत् ॥३४॥

सज्जनस्याभरणमाह भूषणमिति। गुरुराचार्य्यो ज्ञानदाता। विद्या-सम्बन्ध-वयोज्येष्ठश्चेति। देवः परमेश्वर इन्द्रादिश्च। ब्राह्मणो विप्रोवर्णज्येष्ठ इति यावत्। स चादिवर्णो ब्रह्ममुखजः तपः श्रुतिसम्पन्नः। तत्र 'ब्राह्मणोऽस्य मुखमासीत्' इति श्रुतिः। 'तपः श्रुतिश्च योनिश्च त्रयो ब्राह्मण-कारण'मिति स्मृतिश्च। एषु श्रेष्ठेषु मङ्गलास्पदेषु भक्तिः परानुरक्तिः सेवानुरागश्चेति। 'सा चेश्वरे परानुरक्तिः' इति शाण्डिल्यसूत्रे भक्तेर्लक्षणम्। सा प्रसिद्धा, चित्तस्य निर्विशेष सात्त्विकी वृत्तिः। ईश्वरे भगवति उपास्ये। परानुरक्तिरहैतुकोऽनुराग इत्ययं सूत्रार्थः। सल्लो-कानां भूषणमलङ्कारः। तेन च लोकाः शिष्टाः शिक्षिताः सन्तो विश्वस्ता भवन्ति। तथैव धन गुण-वृद्धे नृपे चानुरक्तिः कार्य्येति। 'विप्रश्च ब्राह्मणः' इत्यमरः। ब्रह्मणोऽपत्यम्, तस्यापत्यमित्यण्। अनित्यत्वेन टिलोपो न भवति। यद्वा ब्रह्माधीते 'तदधीते तद्वेद' इत्यनेन च अणा सिद्धः। प्रागुक्तमन्यत् ॥ ३५ ॥

लोकानां व्यवहार-निर्वाहाय विशेष-भूषणमाह सर्व्वस्येति।

आचारवान् विनीतोऽकुलीनोऽपि आर्य्यः॥३७॥

---

सर्व्वस्य जनस्येति जातावेकवचनम्। सर्वेषामिति व्यक्तिभेदेन प्रयोगः साधुः। भूषणमलङ्कारः। विनयो नम्रता सौशील्यमिति। विनय-तुल्यो गुणो दुर्लभः। विनयिनः शत्रुर्विरलः। विनयेनापदो ह्युत्तीर्णो भवति तेन च व्यावहारिके विषये सर्वे वश्याः स्युरिति। 'विनीतस्तु निभृते निर्जितेन्द्रिये वाणिज्ये साधुवाह्यश्वे विनयग्राहिते ह्रिते' इति हैमः। प्राग् व्याख्यातमन्यत्॥३६॥

आश्रमानुसारेण विनयाचार-पालने कुलीनत्वाभावेऽपि आर्य्यत्वमाह एति। अविनीतो विनयरहितः समुद्धतः। अकुलीनोऽनुच्च कुलजातोऽपि जनः यद्याचारवान् संयतोभवेत्तदा आर्य्यः श्रेष्ठः स्यात्। सदाचारविनय-विहीन आर्य्योऽपि अनार्य्यवदाचरणे समर्थः दुःशीलत्वात्। अत आचारविनययोः कौलिन्ये हेतुत्वमुक्तम्। 'महाकुल-कुलीनार्य्य सभ्य-सज्जन साधवः' इत्यमरः।

'अकुलीनोऽपि शास्त्रज्ञो दैवतैरपि पूज्यते'।

इति नीतिविदः। 'अकुलीनोऽपि विनीतः कुलीनाद्विशिष्टः' इत्येवं पाठान्तरत्वे। विनयाचरण-युक्तो जनोऽकुलीनोऽपि कुलीनात् श्रेष्ठो भवतीत्यर्थः स्यात्। प्रागुक्तमार्य्यलक्षणम्। कुलस्यापत्यम्। 'कुलात् खः'। 'अपूर्वपदात् अन्यतरस्यां यड्ढकञौ चेति' सिद्धम्। आर्य्य इति। ऋ गतौ, अर्य्यते। 'ऋ हलोर्ण्यत्' इत्यनेनार्य्यपदं सिद्धम्॥३७॥

**आचारादायुर्वर्द्धते कीर्त्तिश्च ॥ ३८ ॥**

**प्रियमप्यहितं न वक्तव्यम् ॥ ३९ ॥**

---

सदाचरणस्य फल-माह आचारादिति। आयुर्जीवितकालः। कीर्त्तिर्यशो गुणप्रचार इति। द्वावेतौ आचारात् सदाचरणात् सर्व्वतश्च वर्द्धते। 'आचाराल्लभते ह्यायुराचारादीप्सित-प्रजाः' इति धर्म्मशास्त्रकृतः। तादृशाचरणेन स्वास्थ्यम्, स्वास्थ्यादिन्द्रिय-नैर्म्मल्यम्, तस्माद्बुद्धेः प्राखर्य्यं नैरुज्यञ्च, ततो ह्यायुषो वर्द्धनम्। आचारः कुत्रचिद् व्यवहारः। यथा च बृहस्पतिः 'आचारे'-णावसन्नोऽपीति' प्रागुक्तम्। तदाचरणं त्रिविधम्। वृद्धसम्मताचरणम्। कौलिकम्। शास्त्रीयञ्चेति। आयुः। इण गतौ, एति। 'एतेर्णिच्च' इत्यौणादिकसूत्रादुषिः। 'कीर्त्तिः प्रसादयशसोर्विस्तारे कर्द्दमेऽपि च' इति व्याडिः। कृत संशब्दने, कीर्त्त्यते। 'ऊति पूति' इत्यादिना कीर्त्तिपदं निपातितम् ॥ ३८ ॥

लोकानामुद्वेगकरत्वादहित प्रियकथने अनौचित्यमाह प्रियमिति। प्रियं प्रीतिजनकं हृद्यमनुकूलमिति यावत्। तद्यदि अहितमनिष्टकरं स्यात्तदा न वक्तव्यम्। तदुक्तं मानवे 'न ब्रूयात् सत्यमप्रिय'मिति। 'प्रियञ्च नानृतं ब्रूयादि'ति च तत्रैव। यत्र तु समाजानिष्टं महदापतति तत्र तावुभौ वक्तव्यौ इति केवलनीतिविदः। यतोऽल्पलाभाय बहुहानं नोचितम्। तत्र विषयेगुरुत्वलघुत्वे चिन्तनीये। 'प्रियौ हृद्यौषधे हृद्येऽनुकूले धवे'

बहुजन-विरुद्धमेकं नानुवर्त्तेत ॥४०॥

न दुर्ज्जनेषु भागधेयं कर्त्तव्यम् ॥४१॥

---

इति हैमः। प्रीञ् तर्पणे, प्रीणाति। 'इगुपध' इति कप्रत्ययः ॥ ३८ ॥

अनेकजन-प्रतिकूलमताचरणे निषेधमाह बह्विति। बहूनामनेकेषां विरुद्धं प्रतिकूलम्। एकं विषयं मतं जनं वेति। मतिमान् मानवः नानुवर्त्तेत तन्नानुसरेत्। बहुजनविरोधाद्विपदापातशङ्का, कार्य्यसाफल्याभावश्चेति सूच्यते। काले भविष्यति यदि स च विषयः सकलजन-हितकरः स्यात्तदा अत्रबहुजन-मतमनादृत्यानुतिष्ठेत्। यत्र वा बहूनामैकमत्यन्तत्र एकस्मिन् विषये प्रातिकूल्यं न कुर्य्यात्तत्परमनुवर्त्तेत। अन्यथा स्यानिष्टमिति। बहवो जना महान्तो जना वेति ॥ ४० ॥

दुष्टलोकेषु स्वीयभाग्योन्नतिः स्पृहा-निषेधमाह नेति। दुर्जनेषु हीनस्वभावदुष्ट-क्रूरलोकेषु। भागधेयं भाग्यम्। शुभम् अशुभं वा लब्धव्यमिति च निर्भरः स्पृहणञ्च न विधेयम्। यतो दुर्जनाः स्वयं नष्टाः परानपि नाशयन्ति कृतमपि घ्नन्ति च। ते परेषां किमुपकारं करिष्यन्ति। कथं वा तेष्वाश्वासः। यद्वा 'भागधेयः करो बलिः'। दुर्जनेषु अस्य निर्भरो न कार्य्यः।

'भागधेयं मतं भाग्ये भागप्रत्यययोः पुमान्' इति व्याड़िः।

'दुर्जनः परिहर्त्तव्यो सद्भावैर्मण्डितोऽपि सन्'।

इति वृद्धचाणक्ये दुर्जनस्य परिहार्य्यत्वमुक्तम्। यथा दुष्टसमी-

**न कृतार्थेषु नीचेषु सम्बन्धः ॥४२॥**

**ऋणाग्नि-शत्रु-व्याधिष्वशेषः ॥४४॥**

---

रणसंयोगि काले सुस्थोऽपि रुग्णो भवति तद्वत् तत्सम्बन्धश्च। भज श्रिङ् सेवायाम्। भज्यते। ततः कर्म्मणि घञा निष्पन्नाद्भाग-शब्दात् 'भागरूपनामभ्योधेय' इति वार्त्तिकाद्धेयप्रत्ययः ॥४१॥

सम्पादितार्थेषु हीनजनेषु सम्बन्धो न विधेयस्तमाह नेति। कृतार्थेषु नीचजनेषु शठेषु च। कार्य्यार्थसम्बन्धो नोचितः। तेषु पामरेषु कार्य्यार्थसम्बन्धे कृते कार्य्यहानिः स्वयमपि विपन्नः स्यादिति रहस्यम्। तदुक्तं भारविभिः—

'समुन्नयन् भूतिमनार्य्यसङ्गमा—
द्वरं विरोधोऽपि समं महात्मभिः'।

प्रसङ्गादत्रान्यत् तु प्रागुक्तम्। अपरञ्च—

'त्यज दुर्जनसम्बन्धं भज साधुसमागमम्'।

इति सामान्यनीतौ। 'नीचः क्रूरो दुर्जनश्च शठोऽनार्य्यस्तु पामरः' इति कोषः। उक्ता व्याख्यानमन्यत् ॥ ४२ ॥

ऋणादीनां परिशेषरक्षणे पुनर्वर्द्धनशङ्कया तन्निषेधमाह ऋणेति। ऋणमुत्तमर्णाद् गृहीतद्रव्यम्। यद्वा पश्चाच्छोध्य-त्वेनाङ्गीकृत्य गृहीतं द्रव्यमृणम्। तत्र दाता उत्तमर्णः। ग्रहीता चाधमर्णः। अग्निरनलः। शत्रुररातिः रिपुरिति। व्याधिः पीड़ा रोगः इति। यद्वा व्याधिः धातुरसकरणवैषम्यमात्रम्,

# भूत्यनुवर्त्तनं पुरुषस्य रसायनम् ॥४४॥

---

तेष्वंशतोऽपि सत्सु । अशेषः परिशेषरहितकरणं युक्तम् । यत एते लेशतो विद्यमाना अपि परं परिवर्द्धन्ते । वह्निस्फुलिङ्गस्य महानलवत् । तैर्विनाशो दाहो हानिर्दहनाशश्चावश्यम्भविष्यतीति । अतस्तेषां समुच्छेदेन निःशेषश्च कार्य्यः । तथा च महर्षिः—

'ऋणशेषोऽग्निशेषश्च व्याधिशेषस्तथैव च ।
शत्रुशेषः पापशेषो निःशेषमपि शेषयेत्' ॥

'ऋणाग्निव्याधितेष्वशेषः कर्त्तव्यः' त्यं सूत्रपाठे चार्थासारल्यं नास्ति । ऋ गतौ, अर्य्यते । इत्यतस्तः । 'ऋणमाधमर्ण्ये' इत्यनेन नत्वम् । प्राग् निरुक्ता अग्न्यादिशब्दाः ॥ ४३ ॥

ऐश्वर्य्यानुवर्त्तने पुंसो हितमाह भूतीति । भूतिः विपुलधनस्यैश्वर्य्यस्य च । अनुवर्त्तनमनुधावनमिति । पुरुषस्य मानवस्य । रसायनम् । अतिशय सुखजनकत्वेन जराव्याधिविनाशकम् । रसस्य नवनवरोत्पादनं देहपुष्टिकरं येनोपायेन तत् । तदुक्तं वैद्यके—

'यज्जरा-व्याधि-विध्वंसि, भेषजं तद्रसायनम्' ।

तत्रैवान्यच्च—

'यज्जराव्याधिविध्वंसि वयसस्तम्भकन्तथा ।
चक्षुष्यं बृंहणं वृष्यं भेषजन्तद्रसायनम्'

## नार्थिषु अवज्ञा कार्य्या ॥४५॥

---

रसायनफलं यथा तत्रैव—

'दीर्घमायुः स्मृतिर्मेधामारोग्यं तरुणं वयः ।

देहेन्द्रियबलं कान्तिं नरो विन्देद्रसायनात्' ॥

ऐश्वर्य्येण पार्थिवसुखं निश्चितमेव । 'विभूतिर्भूतिरैश्वर्य्य'मित्यमरः । यथा रसायनेन पुरुषस्य वृंहणादि भवति तद्वद् विपुलधनेनापि लोको गर्वितो मत्तः सुखी च भवति । वैद्यके भावप्रकाशादौ रसायनवृत्तं सम्यगस्ति ॥ ४४ ॥

धनादि-पार्थनाकारिणो जनान् प्रति हेयकरणनिषेधमाह नेति । अर्थिषु याचकेषु प्रार्थनाकारिषु इति । तादृश जनेषु अवज्ञा अवमाननं हेयज्ञानञ्च न कार्य्यम् । वरं तेषां यथाशक्ति धनादिना साहाय्यमेव सम्यग् विधेयम् । कविसमयश्च—

'धनदानेन दीनानां दुःखहर्त्ता जनोत्तमः ।

येनैवं क्रियते लोके स सुधीः सच स्वर्गभाक्' ॥

तथा च—'याचकं नावजानाति प्रीतिं करोति सर्व्वदा ।

ददाति किञ्चित् स्नेहेन स धनी पुरुषोत्तमः' ॥

यदा च धनादेरभावस्तदा मधुरवाचा विनयादिना च याचकास्तोषणीया इति नियमः साधुः । स्वाभाविकनियम एव यच्चिह्नैनानाम्धनिभिरूपकारसाधनमिति । अवज्ञानमवज्ञा, अवपूर्वाज्जानाति 'रातश्चोपसर्गे' इत्यङ् । 'वनीयको याचनको मार्गणो याचकार्थिनौ' इत्यमरः । अर्थोऽस्यास्तीति 'अर्थाच्चासन्निहिते'

सुदुष्करं कर्म्म कारयित्वा कर्त्तारं नावमन्येत ॥ ४६ ॥

न कृतघ्नस्य नरकान्निवर्त्तनम् ॥ ४७ ॥

---

इति वार्त्तिकादिनिः । यद्वा अर्थ याचने, अर्थयते । ग्रहादित्वात् णिनि. ॥ ४५ ॥

दुष्करकर्म्मानुष्ठानात् परं तत्कर्त्तुरवमाननं नोचितमित्याह सुदुष्करमिति । सुदुष्करमतिकठिनं दुःसाध्यमिति । यत् कर्म्म तत्कारयित्वा सम्पादयित्वाऽभिनिष्पाद्य च । वैकल्यङ्गते कार्य्ये तत्कर्त्तारं कार्य्यानुष्ठाता नावमन्येत । तं नावजानीयात् । 'दुष्करं कर्म्म कारयित्वा कर्त्तारमवमन्यते नीच' इत्येवं पाठान्तरत्वे नीचोजनः दुष्करं कर्म्मकारयित्वा तत्कर्त्तारं अवजानातीत्यर्थः । यदि कर्म्मकर्त्तुर्दोषो वर्त्तते तदा तस्य गर्हणं युक्तमिति । कर्मणो दुष्करत्वे तत्फलस्यालाभे तत् कर्त्तुर्न दोष इति प्राज्ञानामभिमतम् । अज्ञानान्तु तद्विपरीतम् । कारणगतदोषात् कार्य्यहानिरिति समाधिः । असम्पन्ने कर्मणि निष्फले वा तत्कर्म पुनरनुष्ठेयम् ॥ ४६ ॥

कृतघ्नस्य तत्कार्य्ये फलं नरकमाह नेति । कृतघ्नस्याकृतज्ञस्य । कृतमुपकारं हन्तीति तस्य । नरकान्निरयात् परमदुर्गतेः । न निवर्त्तनं नापि तस्मादव्याहृतिः परन्तत्रैव पापाधिक्याच्चिरनिवासः । तदुक्तं विष्णुना—

# जिह्वायत्तौ वृद्धि-विनाशौ ॥ ४८ ॥

'ब्रह्मघ्ने च सुरापे च चोरे भग्नव्रते शठे ।
निष्कृतिर्विहिता सद्भिः कृतघ्ने नास्ति निष्कृतिः' ॥

इति पूर्व्वमुक्त' मन्यत् सर्व्वम् ।

कृतघ्नस्तूपकारमनुभूयापि प्रत्युपकारमकृत्वा तत्कर्त्तुरनिष्टाचरणं कुर्वन्नधिक पापिष्ठः । 'नरकः पुंसि निरयो देवाराति प्रभेदयोः' इति विश्वः नृ नये, नरति नृणाति वा । 'कृञादिभ्यः संज्ञायां वन्' इत्यौणादिकात् । यद्वा नराः कायन्त्यत्रेति 'मूलविभुजादित्वा'दिति वार्त्तिकात् को न भवति, 'कर्त्तरि कृत्' इति बाधनादधिकरणे तद्वार्त्तिकोक्त विषयाप्रवृत्तेः ॥ ४७ ॥

कार्य्यस्याच्छेदवृद्ध्योर्द्वयोरसनाधीनत्वमाह जिह्वेति । जिह्वाया रसनेन्द्रियस्यायत्तौ अनुगतौ । वृद्धिवर्द्धनमाधिक्यम् । विनाशः समुच्छेदोऽभावो वा । कार्य्यस्य एतौ द्वौ जिह्वाधीनौ स्याताम् । दुर्वचसा व्यवहारे कार्य्यहानिर्मधुरवचसा तु कार्य्यसौकर्य्य मित्यतो व्यवहारकाले सुचिन्तया संयतवाग्भवेत् । तदुक्तं कविभिः—'न दोषा गृह्यन्ते मधुरवचसां केनचिदपि' । अपरञ्च—'वाङ्माधुर्य्यात् सर्व्वलोकप्रियत्वम्'। यथाऽर्भकस्य । 'वाक्पारुष्यात् सर्व्वलोकाप्रियत्वम्' । यथा तुरङ्गमस्य । 'रसज्ञा रसना जिह्वा' इत्यमरः । भोगाधिक्यात् सम्पदो विनाशस्तस्याः संयमेधनादेर्वृद्धिर्भवतीति । अत्र जिह्वेत्युपलक्षणमन्येषामिन्द्रियाणामपि सांयत्य चाञ्चल्ये वृद्धिहाने च चिन्तनीये । जिह्वेति ।

विषामृतयोराकरो जिह्वा ॥४९॥

प्रियवादिनो न शत्रुः ॥५०॥

---

लिह आस्वादने, लेढ़ि। लिहन्ति अनया वा 'ग्रीवयह्व जिह्वा' इत्यौणादिकसूत्रात् तत्पदं साधु। केचित्तु लिहेः 'पूर्व्वं जिह्वा ग्रीवा' इति वन्प्रत्ययस्तेन सिद्धम्, पृषोदरादित्वादित्याहुः ॥४८॥

प्रागुक्तविषयस्य स्पष्टीकरणमाह विषेति। विषं हलाहलः गरलञ्चेति। अमृतं सुधा मृतिरोधकम्। एतयोर्द्वयो जिह्वा रसना आकरः चेत्रं प्रसवभूमिः। जिह्वासाहाय्येन वागिन्द्रियं सद्वक्ति तेन सुधोपमः व्यवहारः, सर्व्वत्र कार्य्यं सौख्यञ्च। दुर्व्वाक्यं वक्ति चेत्तेन विषवन्महद्दानं स्यात्। जिह्वा हि परमेशनाम जपादिमन्त्रसाधनेन निर्वाणमपि प्रापयति। यद्वा असदुक्त्या वाग्वज्रप्रहारेण विषमुद्गिरति, जनं दुःखयति स्वात्मानमपि पीड़यति च। तेन हि लोकाः शत्रवो भवन्ति। हितमित-तत्त्ववचाभिर्निधनादपि समुत्तारणं भवति। विषॢ व्याप्तौ, विश प्रवेशने वा। उभयोः क्विपा सिद्धम्। अमृतमविद्यमानं मृतं मरणमत्र। मृङ् प्राणत्यागे, इत्यस्माद् भावे क्तः। 'आकरो निकरे श्रेष्ठे' इति कोषः। डुकृञ् करणे, आकुर्व्वन्त्यत्र, कॄ विक्षेपे, आकीर्य्यन्ते वस्तून्यत्रेति वा 'पुंसि संज्ञायाम्' इति कप्रत्ययः ॥ ४९ ॥

हितवादिनो जनस्यारात्यभावमाह प्रियेति। प्रियवादिनः। प्रियमनुकूलं मधुरमिति यावत्। तद्वक्तुं शीलमस्येति। प्रिय-

**स्तुता देवा अपि चिरन्तुष्यन्ति ॥५१॥**

**अनृतादपि दुर्व्वचश्चिरन्तिष्ठति ॥५२॥**

---

वाक्य-कथन-शीलस्य जगति कोऽपि शत्रुररातिर्न भवतीत्यर्थः। उक्तञ्च कविभिः 'हितं मनोहारि च दुर्लभं वचः'। अन्यच्च—

'मधुरोक्त्या हितोक्त्या च प्रियो भवति सर्व्वतः।
पारुष्यवचनाच्छत्रुर्लोको भवति निश्चितम्' ॥

अपरञ्च—

'हितवाक्यप्रयोक्तुश्च दातुः परोपकारिणः।
साधोर्बालस्य जगति रिपुर्नैव प्रदृश्यते' ॥

प्रीञ् तर्पणे, प्रीणाति। 'इगुपध' इत्यादिना कः। 'प्रियोऽद्रुमौ-षधे हृद्ये धवे' इति हैमः। प्राङ्निरुक्तमन्यत्॥ ५०॥

प्रियाचरणेन देवानामपि परितोषमाह स्तुता इति। स्तवेन आरोपितगुणादि कथनेन परितुष्टाः। गौरविताश्च। देवा अमरा इन्द्रादयः। अपि निश्चितं, चिरमनियम्। तुष्यन्ति सन्तुष्टाः प्रसन्ना भवन्ति किंपुनर्मानवाः? देवा अपि सुप्रसन्नाः स्युः। अतः स्तुतिवाक्येन प्रशंसया वा सर्व्वे सन्तोष्टव्याः जगति न कोपि गुणान् हित्वा स्वदोषं स्वापमानवचनञ्च श्रोतुमिच्छति अप्रीतिकरत्वादुद्वेगकरत्वाच्च। ये पराराधन निपुणाः प्रियभाषिणस्ते अनायासेन कृतकृत्याः स्युः। स्तुञ् स्तुतौ, स्तविति स्तौति च। ततो कर्म्मणि क्तप्रत्ययः॥ ५१॥

असत्याद् दुर्वाक्यस्य दीर्घकालस्थायित्वमाह अनृतादिति।

## राजद्विष्टं नच वक्तव्यम् ॥५३।

---

अनृतान्मिथ्यावाक्यात्। दुर्वचः दुष्टवाक्यं कुत्सितवाक्। यद्वा हृदय-सन्तापकारि-परावज्ञाकारिवचः। चिरं सुदीर्घकालं तिष्ठति। असत्यं सत्यवचसा तिरोधत्ते। दुर्व्वचस्तु क्लेशप्रदत्वेनाविरत काल-स्थायीति। अतो दुर्वचनं सदा परिहर्त्तव्यम्। अस्मिन् विषये प्रागुक्तमन्यत्। 'अनृतमपि दुर्वचनं चिरन्तिष्ठति' इत्थं पाठभेदे सुगमार्थमिदं सूत्रम्। अनृतं मिथ्या, यद् दुर्वचनम्, तत् दीर्घकालं तिष्ठत्येव ॥ ५२ ॥

नृपविरुद्धभाषणे स्वानिष्टं राजावज्ञा-प्रकटनम्भवति तन्निषेधमाह राजेति। राज्ञां नृपाणां भूभृतामिति। द्विष्टं द्वेषान्वितमप्रियसूचकमिति यावत्। तत्कदापि न च वक्तव्यम्। यतः तेषां क्रोधो महानिष्टकरः तादृशेन वाक्येन समुत्पद्यते। वक्तुस्यावश्यं दण्डादिना हानं स्यात्। अत राजेत्युपलक्षणम्। तेन देव-गुरु-साधु-सीमन्तिनी महाजनानां द्विष्टमपि वचः परिहार्य्यम्। 'राजद्विष्टं न वक्तव्य'मिति पाठान्तरं दृश्यते। तेन नार्थपार्थक्यम्। 'अत्र चकारोपादानेन सर्व्वथा निषेधः सूचितः। राजानुष्ठितकार्य्यस्य विरूद्ध समालोचनं तद्भाविकार्य्ये आरोपो विधानलङ्घनमपि तेन प्रतिसिद्धं प्रजानां हानिकरत्वादिति। तथा च प्राञ्चः 'राज्ञामाज्ञामिवान्यत् पालयेत्' इत्याहुः। द्विष् अप्रीतौ, द्वेष्टि। ततः क्तप्रत्ययः ॥ ५३ ॥

श्रुतिसुखाः कोकिलालापाः ॥५४॥

तप्यते दुष्करकारी यत्नवान् नाम ॥५५॥

---

पिकरव श्रवणस्य श्रोत्रेन्द्रिय-प्रीतिकरत्वमाह श्रुतीति। श्रुतिः श्रवणं तदिन्द्रियमिति। तस्य सुखाः प्रीतिजनकाः। कोकिलानां वनप्रियाणां ये आलापाः कूजनाः मधुररवास्ते पक्षिरवा सन्तोऽपि स्वतः श्रवणाभिरामाः चित्तविनोदकराश्च भवन्ति। किमुत मानवमधुर-वाक्यानां बालवचसां वा मनोभिरामत्वे। 'वनप्रियः परभृतः कोकिलः पिक इत्यपि' इत्यमरः। कुक आदाने, कोकते। 'सलिकुल्यनि' इति इलच्। 'श्रुतिसुखात् कोकिलालापात्तुष्यन्ति' इति पाठभेदे श्रुतिसुखकरपिकालापश्रवणात् लोकाः परितुष्टा भवन्ति। सुखं नाम सर्वथा अनुद्वेगकरमनोवृत्तिमात्रम्। 'श्रुतिः श्रोत्रे च तत्कर्म्मण्याम्नायवार्त्तयोः स्त्रियाम्' इति कोषः। श्रु श्रवणे, श्रूयते अनयेति करणे क्तिन्॥ ५४॥

असाधु-कर्म्मानुष्ठातुः पश्चात् सन्तापानुभवमाह तप्यत इति। दुष्करकारी दुराचारी क्रूरकर्म्मा कठोरस्वभाव इति। यत्नवान् अतिसमुद्योगसम्पन्नः निपुणोऽपि तप्यते परिक्लिश्नाति। स्वीयानुष्ठितगर्हित कर्म्मफलेन स्वयमेवानुतप्तो भवति। यादृक् कर्म्म तत्फलन्तु तादृगेव स्यादिति नियमात्। यथा शैशवेऽनधीतविद्यस्य तारुण्ये अनुतापः, साधुकारी तु स्वयं सुखी परहित-

स्वधर्म्महेतुः सत्पुरुषः ॥ ५६॥

नास्ति अर्थिनो गौरवम् ॥५७॥

---

कारी च। 'दुष्करं कठिने काय्यें गर्हिते पापकर्म्मणि' इति कोषकारः। दुष्करं कर्तुं शीलमस्येति ताच्छील्ये करोतेर्णिन्। 'यत्नवांश्च समुद्योगी काय्यें जागरूकः सदा' इति च। पदनिरुक्त्यादि प्रागुक्तम् ॥ ५५ ॥

स्वधर्म्माज्र्जनात् पुंसां श्रेष्ठत्वमाह स्वेति। स्वस्यात्मनो यो धर्म्मस्तस्याचरणाद्धेतोः। तदाचरणशीलः सदुत्तमः श्रेष्ठो मानवः स्यात्। यद्वा यो विद्याचारित्र-ज्ञानादिना स्वधर्म्मस्य हेतुः कारणं भवति स एव जगति सदुत्तमः पुरुषो भवेदिति। सत्पुरुषः स्वधर्म्ममनुष्ठाय परेषामपि धर्म्माचरणोपदेशे धार्म्मिकत्वेन हेतुर्भवतीति सारः। तदुक्तं धर्म्मशास्त्रे—

'वरं स्वधर्म्मो विगुणो न पारक्यं स्वनुष्ठितम्'।

तदेवान्यत्र—

'स्वधर्मे निधनं श्रेयः परधर्मो भयावहः' इति गीतायाम्। परस्यान्यस्य धर्मः परधर्मः। अन्यदीयत्वेन प्रकृतिप्रतिकूलत्वाद् भयावहः। यद्वा परः श्रेष्ठो धर्मः तस्यानुष्ठाने क्लेशप्रदत्वाद् भीतिजनकः। 'स्वधर्महेतुभूतः सत्पुरुषविशेषः' इत्थं पाठभेदे सूत्रार्थस्तु सुगमः। सत्पुरुषविशेषः एव स्वधर्महेतुभूतो न सर्वे जनाः। प्राङ्निगदितमन्यत् ॥ ५६ ॥

याचकस्य श्रेष्ठत्वाभावमाह नेति। अर्थिनो याचकस्य

## स्त्रीणां भूषणं सौभाग्यम् ॥५८॥

प्रार्थिनः। यद्वा धनवतो वादिनश्च। गौरवस्य प्राधान्यस्य माननीयत्वस्याभावः स्यात्। यतः प्रार्थिनः स्वदैन्यप्रकाशेन गौरवम् ह्रसति। धनवतश्च तद्द्याकार्य्ये सततं चमशीलत्वाद्दानाभावे कृपणत्वेन निन्दा प्रसरति। वादिनश्च विवादे जयाशया गौरवं हित्वा स्वकार्य्यसाधनाय च लघुत्वमपि श्रेयः स्यात्। एकस्य हाने अन्यस्य प्राप्तिरवश्यम्भाविनीति। 'प्रार्थने माननाशश्चेति' लघुचाणक्ये। 'चाणि कस्यास्ति गौरवम्' इत्यन्यत्र। अपरञ्च—

'कार्य्यसाधन-व्यग्रस्य लघुत्वं कुत्रचित् भवेत्'।

सूत्रमिदं क्वचिदादर्शग्रन्थे नोपलभ्यतेऽन्यत्र विद्यते। सर्वत्र च—

'स्वकार्य्यमुद्धरेत् प्राज्ञः कार्य्यध्वंसे च मूर्खता'।

इति नीतिरेषा मनोरमा। गुरोर्भावो गौरवम्। श्रेष्ठत्वमित्यर्थः ॥ ५७ ॥

नारीणां विशेषभूषणमाह स्त्रीणामिति। स्त्रीणां महिलानां वरवर्णिनीनामिति। भुषणमलङ्कारः सुषमाकरः। सौभाग्यं शुभादृष्टलक्षणं पति-पुत्रवत्त्वम्, पातिव्रत्यञ्च। 'लज्जैव भूषणं स्त्रीणा'मिति केचित्। 'क्षमा लज्जा च योषिति' इत्यपरे।

'सौभाग्यलक्षणं स्त्रीणां पातिव्रत्यं प्रकीर्त्तितम्' इत्यन्ये। 'असौभाग्यं ज्वरः स्त्रीणाम्' इति वृद्धचाणक्ये च। पतिपत्न्योर्विवाहमान्त्रिकसंस्कारेण ऐकात्म्यात् पतिभक्त्वं परं सौभाग्यसूचकम्। तथा च श्रुतिः 'मम व्रते ते हृदयं ददाति'।

# शत्रोरपि न पतनीया वृत्तिः ॥५६॥

'ध्रुवा द्यौः ध्रुवा पृथिवी, ध्रुवं विश्वमिदं जगत् ।

ध्रुवासः पर्वता इमे ध्रुवा स्त्री पतिकुले इयम्' ॥ इत्यादि च । 'सौभाग्यं कर्त्तुराचारता' इति पाठभेदे कर्त्तुः पत्युश्च यः आचारस्तादृश एवाचारः नार्य्या कार्य्यः । नतु स्वेच्छाचारः । आचारशीलता पत्युः परिचर्य्या वा । अपरे तु तासां 'देवसेवा विनयः क्षमा पातिव्रत्येन सहैते सौभाग्यगुणाः' इत्याहुः । अपरासां 'शिल्पं धैर्य्यं गृहकर्मदाक्ष्यं विद्या विनय'श्चेति प्राहुः । सुभगस्य भावः सौभाग्यम् । सुभगशब्दात् ष्यञ् ॥ ५८ ॥

अरातेरपि वृत्तिसमुच्छेदे निषेधमाह शत्रोरिति । शत्रोररातेरपि निश्चितम् । वृत्तिर्जीविका । यया वृत्त्या भोजनाच्छादनावस्थिति-निर्वाहः स्यात् सा । न पतनीया नापि समुच्छेद्या । अपि तु विदुषा सा रक्षणीया । अत्र पतनीयेति पातनीयेत्यभवति ण्यन्तविवक्षया । उक्तञ्च 'वृत्तिच्छेदेन तद्वधः' इति । अत्र वृत्तिच्छेदो जीविकाहानिकरणम् । 'शत्रुभिरनभिपतनीया प्रवृत्तिः' इति भिन्नपाठोऽप्यस्ति । मनस्विनः पुंसः प्रवृत्तिः । शत्रुभिरनभिपतनीया शत्रोः सम्यक् आक्रमणशून्या भवतीत्यर्थः । तेन स्वमनीषया शत्रोराक्रमणं प्रतिबध्य सर्वत्र स्वसामर्थ्यं प्रकटयति । 'वृत्तिर्विवरणे जीव्ये कैशिक्यादिषु चेष्यते' इति विश्वः ॥ ५८ ॥

**अप्रयत्नोदकं क्षेत्रम् ॥६०॥**

**एरण्डमवलम्ब्य कुञ्जरं न कोपयेत् ॥६१॥**

---

क्षेत्रनिरूपणमाह अप्रयत्नेति। क्षेत्रं सस्यादीनां प्रसवभूमिः। अप्रयत्नोदकम्, अप्रयत्नेनानायासेन सुलभसंल्योदकं जलं यत्र तत् क्षेत्रं प्रशस्तमित्यर्थः। निवासादेरपि तद्योग्यम्। अन्यन्निर्जलं मरुस्थानम्, सस्योत्पादननिवासादेरयोग्यम्। अनुच्चावचं सागरसन्निहितं निःसिकतं समुर्व्वरं क्षेत्रं कृषि-वासादेर्योग्यं स्वास्थ्यकरञ्चेति। 'अप्रयत्नादेकं क्षेत्र'मिति पाठान्तरम्। तेन प्रयत्नाभावात् कर्षणकेदारबन्धन-सलिल-सेकादिरहितं क्षेत्रमेकं कार्य्योपयोगि भवतीत्यर्थो न पृथक्। 'कबन्धमुदकं पाथः' इत्यमरः। उदकम्। उन्दी क्लेदने उनत्ति। 'उदक'मित्युणादिसूत्रेण साधुः। न तु उन्दतीति चोरस्वामिमते, उन्देरौधादिकत्वात्। 'क्षेत्रं शरीरे केदारे सिद्धस्थान-कलत्रयोः' इति विश्वः। क्षि निवासगत्योः, क्षीयते धान्यादिभिरत्रेति। ततः क्षिधातोः ष्ट्रन् ॥ ६० ॥

अयोग्यलघूपायेन वृहत्कार्य्यसाधननिषेधमाह एरण्डेति। एरण्डमुरुबकवृक्षं सारशून्यमदृढम्। तद्दण्डत्वेनावलम्ब्याश्रित्येति। कुञ्जरमैरावतं महाकायवारणम्। न कोपयेत् न तं रोषयेत्। तेन तस्य ताड़न-निवृत्ति-निग्रहसम्भावनाः सर्व्वतो विरला एव। परन्तेन तस्य जनस्य महानिष्टं स्यात्। प्रकृते तु

## अतिप्रवृद्धा शाल्मलिर्न वारणस्तम्भः ॥६२॥

---

बलवता शस्त्रपाणिना नृपेण सह निरस्त्रो दुर्बलो नैव विगृह्णीयाद्विवदेच्च। तादृश विग्रहे स्वात्मनाशसम्भवः। यद्वा यादृक् कार्य्यं कुर्य्यात् प्राक् सामग्री-समवधानमपि तादृगेव कर्त्तव्यम्। नतु लघूपायेन गुरुकार्य्यसाधनम्। यथा नखनिकृन्तनेन सारवद्बृहत्तरुच्छेदनं युक्तम्। तत्र हि करपत्र-कुठारयोः साधकतमत्वात्। 'एरण्ड उरुवूकः' इति वोपालितः। तथैवामरोऽपि। इर गतौ कम्पने च, आ ईरति वायुम्। एरण्डतैलस्य वायुनाशकत्वा देवं मूलत्वचोऽपि। अस्मान्निजन्ताद्धातोर्बाहुलकादण्ड च्। द्विविधोऽयमेरण्डः। रक्तः श्वेतश्चेति। विशेषतो वैद्यकेऽस्य गुणादिकं रोगहारित्वञ्च वर्णितमस्ति॥ ६१ ॥

असारद्रव्यस्य सुकठिनकार्य्यसाधनेऽयोग्यत्वमाह अतीति। अतिशयेन प्रवृद्धा पुरातना, प्रकाण्डा विशाला शाल्मलिः स्थिरायुर्वृत्तः। वारणस्य कुञ्जरस्य स्तम्भो बन्धनस्थूणा न भवति। प्राचीन-प्रकाण्डोऽपि शाल्मलितरुः असारत्वादकाठिन्याच्च वारणबन्धनायालमिति। अतो यत्र यदसाधकं तदतिस्थलत्वेनापि योग्यं न भवति। नहि मेदगदेन पीवरकायः पुमान् नीरोगबलवत् कृशकायेन योद्धुं तं निवारयितुं वा शक्नोति तादृशसामर्थ्याभावात्। शाल्मलितरोर्द्दृढत्वं यथा 'षष्ठिवर्षसहस्राणि वने तिष्ठति शाल्मलिः' इति वचनात्। 'पुरणी शाल्मलिद्रुमे' इति कोषः। 'स्थिरायुः शाल्मलिर्द्वयोः' इत्यमरोऽपि। शल

**अतिदीर्घोऽपि कर्णिकारो न मुसली ॥६३॥**

**अतिदीप्तोऽपि खद्योतो न पावकः ॥६४॥**

---

चलने, शालयतीति निजन्तस्ततः क्विप्। मल धारणे, मलते। 'सार्व्वधातुभ्य इन्' इतीन्। शाल् चासौ मलिश्चेति कर्म्मधारयात्तत्सिद्धम् ॥ ६२ ॥

पूर्व्वसूत्रतात्पर्य्यस्य विशदीकरणसूचकमिदं सूत्रम्। उदाहरणान्तरमाह अतीति। कर्णिकारः परिव्याधस्तदाख्यो द्रुमः। यद्वा तत्फलम्। सोऽतिदीर्घोऽपि द्राघीयानपि नमूसली नापि तालमूलिका भवति वस्तुनः स्वाभाव्यात्।

'मुसलं स्यादयोऽग्रे च पुं नपुंसकयोः स्त्रियाम्।

तालमूल्यामाखुपर्णी गृहगोधिकयोरपि' ॥ इति मेदिनी। अन्यत्र 'मुसलीगृहगोधिका ज्येष्ठी'। 'कर्णिकारः पुमानारग्वधे द्रौ च द्रुमोत्पले' इति मेदिनी। अथवा अतिदीर्घोऽपि कर्णिकारः न मूसली मूसलधारीव भवति। दीर्घः। दृ विदारणे, दृणाति। बाहुलकाद्घञ्। कर्णिकामियर्त्तीति कर्म्मण्यण्। मुस मण्डने, मुस्यति। 'वृषादिभ्य'श्चित्यौणादिकसूत्रात् कलच्। स्त्रीविषयत्वेन, गौरादित्वाद् ङीष्, क्वचिदाकृत्या सादृश्येऽपि वस्त्वेकं सम्यगपरं भवतीति। 'न दीर्घोऽपि कर्णिकारः मूसली भवति' इति पाठभेदे दीर्घोऽपि कर्णिकारः तद्फलस्याकारसादृश्यात् न मूसली भवतीत्यर्थः। सुगमञ्चान्यत ॥ ६३ ॥

· पूर्व्वोक्तविषय-समर्थन दार्ढ्यायोदाहरणान्तरमाह अतीति।

## न प्रवृद्धत्वं गुणहेतुः ॥६५॥

---

अति दीप्तोऽतिशयेन प्रज्वलितः । खद्योतोज्योतिरिङ्गणः । अपि प्रकाशवत्त्वान्न पावकः । नाप्यनलो भवति शक्तिवैषम्यात् । यथा डुण्डुभोऽहित्वाविशेषेऽपि न जाति-सर्पः । एवं मन्दार-महीरुहस्य बृहत्त्वेऽपि न स सारवत् शालकाष्ठायते । दीप्तः । दीप दीप्तौ, दीप्यते । ततः क्तप्रत्ययः । खे आकाशे द्योत्यते । खं दीतयतीति कर्मणाचा अणा वा सिद्धम् । 'पावकोऽग्नौ सदाचारे वह्निमन्थे चे'ति कोशकृत् । पुञ् पवने, पुनाति । ण्वुल्प्रत्ययेन सिद्धः । 'अतिज्वलितोऽपि खद्योतो न पावके नियुज्यते' इति पाठान्तरत्वे नार्थ वैषम्यम् । सुगमार्थञ्चेदं सूत्रम् ॥ ६४ ॥

वृद्धत्वस्य गुणहेतुत्वेनिषेधमाह नेति । प्रवृद्धं प्रकृष्टरूपेण वार्द्धक्यम् । अतिमान्यत्वं प्राचीनत्वञ्चेति यावत् । न गुणहेतुः । गुणानां चान्यौदार्य्य धैर्य्यादीनाम् । हेतुः कारणं न भवतीत्यर्थः । परं पाण्डित्येन तत्त्वज्ञानेन च युवापि प्रवृद्धत्वं याति । तदुक्तं पालिग्रन्थे—

> 'न तेन थेरोहोति येनऽस्सफलितं सिरो ।
> परिपक्को वयो तस्स मोघजिण्णोति वुच्चति' ॥

मानवे एतस्यानुरूप श्लोकोयोऽस्ति प्रागुक्त एव सः पुनरुक्तिभिया-नालोच्यते । अन्यच्च—

सुजीर्णोऽपि पिचुमर्द्दो न शर्करायते ॥६६॥

यथा बीजं तथा निष्पत्तिः ॥६७॥

---

'वित्तं बन्धुः वयः कर्म्म विद्या भवति पञ्चमी।
एतानि मान्यस्थानानी'—

त्येतत् पूर्व्वमुक्तापि प्रसङ्गादत्रोच्यते। तेन च हीनस्य शठादेः गुणप्राचुर्य्यं सर्व्वथा न वृद्धत्वमिति। यद्वा प्रकृष्टवृद्धत्वं नापि गुणवत्त्वं पाण्डित्यञ्च प्रवृद्धत्वे हेतुः। पदनिरुक्तिः प्रागुक्ता ॥६५॥

वस्तुस्वभावस्य जीर्णत्वेऽपि नान्यथाभावमाह स्विति। पिचु-मर्दः निम्बतरुः स्वाभाविक-तिक्तः। सुजीर्णोऽपि न शर्करायते नापि स्वतो मधुरगुणयुक्ता सिता भवति। ततश्च स्वभावतिक्तो निम्बो वार्द्धक्ये यथा न माधुर्य्यं याति तथा द्रव्यान्तरस्यापि ज्ञेयम्। 'पिचुमन्दो न शङ्कुलायते' ईदृशे सूत्रपाठभेदे तदर्थो न प्रीत्यावहः स्यात्। तस्य प्राचीनत्वे शङ्कुत्वं स्थूणात्वं यास्यत्येव। नापि शर्करात्वं तिक्तस्वाभाव्यात्। 'पिचुमर्दश्च निम्बे' इत्यमरः। पिचून् कुष्ठान् मर्दयतीति पिचुमर्दः। मृद क्षोदे, णिच्। ततः, कर्म्मण्यण्। पिचून् मन्दयतीति चीरस्वा-मिमते पाठः। शर्करा, शॄ हिंसायाम्। 'शः करन्' इत्यौणादिकसूत्रात सिद्धम् ॥ ६६ ॥

बीजानुसारेण तत्फलनिष्पत्तिमाह यथेति। यथा यस्य यादृशं बीजं हेतुः कारणशक्तिः। तस्य तादृशी फलनिष्पत्तिः

## यथाश्रुतं तथा बुद्धिः ॥६८॥

---

फलोत्पत्तिः फलविपाको वा। यथाम्रबीजे समुप्ते नापि कोविदारस्योत्पत्तिः। व्यभिचरति च कदाचिद्, यथा दावाग्निदग्धस्य वेत्रबीजस्य कटलीकाण्डोत्पादने शक्तिः। यद्वा गोमयाद् वृश्चिकादेरुत्पत्तिः। अत्र तत् कारणवैचित्र्यात् कार्य्यवैचित्र्यम्। भामतीग्रन्थेऽप्येवम्। कारणवैचित्र्यात् कार्य्यवैचित्र्यमिति न सर्व्वत्र व्यभिचारस्तस्य कादाचित्कत्वात्। बीजस्य याथार्थ्यं कार्य्यमप्यविकलं भवेत्। बीजस्याव्याहतत्वं सर्व्वदा रक्षणीयम्। यथा शस्याद्युत्पत्तौ तथा प्रजोत्पत्तावपि ज्ञेयम्। 'हेतुर्ना कारणं बीजम्' इत्यमरः। विशेषेण ईजते। ईज गति कुत्सनयोरित्यस्मादच्। अत्र वर्गीयौष्ठ्यवकारयोरभेदः। निरुपसर्गात् पदधातोर्भावे क्तिन्॥ ६७॥

शब्दश्रवणानुसारेण च तद्विषये बुद्धिरपि तथैवोत्पद्यते इत्यत आह यथेति। यथा श्रुतं यथा श्रवणजनितं शास्त्रार्थज्ञानं भवति। तथैव। ज्ञातविषयानुसारेण बुद्धिर्मतिः स्यादिति। अतो यादृशवस्तुदर्शन-श्रवण-स्पर्शनादिकं भवति तादृशं ज्ञानमसति बाधके भवति। सुतोत्पत्तिवाक्यश्रवणेन मनसि हर्षः, शत्रोर्वाक्यश्रवणेन विषादो जायते। अतो हितं प्रियञ्च वाक्यं वक्तव्यम्। तथैव श्रोतव्यञ्चेति। नाहितं न परुषं नापि मृषा वाक्यं वदेत्। 'श्रुतं शास्त्रावधृतयोः' इत्यमरः। श्रु श्रवणे, शृणोति। ततः क्तः। 'बुद्धिर्मनीषा धिषणा धीः प्रज्ञा' इत्यमरः॥ ६८॥

यथाकुलं तथाचारः ॥६९॥

सुसंस्कृतोऽपि पिचुमर्द्दो न सहकारः ॥७०॥

---

कुलप्रथा तत्संस्कारानुसारेण च लोकानां प्राय आचारस्तथैव स्यादित्याह यथेति। जनानामित्यूहनीयम्। यथा यादृशं धर्म्म-गुण-गौरवपूर्णं कुलं वंशः। तथा तादृश आचारः आचरणं कार्य्यानुष्ठानं लौकिकव्यवहारोऽपि भवतीति शेषः। वंशपरम्परागत-शक्त्यनुसारेण लोकानां शिष्टाचारः प्रवृत्तिः कार्य्यानुष्ठानादिकञ्च दृश्यते। अतः कुलाचारः शिष्टाचारः लोकाचारः स्त्र्याचारश्च पृथक्त्वेन प्रसिद्धोऽस्ति। यथा शैलशेखरजातस्य औषधादेः यादृशं रसवीर्य्यविपाकादिकं न तथा जलबहुलदेशजातस्य। एवं लोकेषु च—

'सुतः पितृगुणं धत्ते धत्ते मातृगुणं सुता'। इति।

नीतिविद्भिर्न तथा मन्यते यतः शिक्षालब्धगुणस्य उत्कटतपःसाधनस्य च वंशशक्त्यपेक्षा नास्ति। तथा च—

'गुणाः सर्व्वत्र पूज्यन्ते पितृवंशो निरर्थकः'।

अन्यच्च 'दैवायत्तं कुले जन्म' इति वेणीसंहारे। अपरञ्च—

'किं कुलेन विशालेन गुणहीनस्तु यो नरः'।

इति लघुचाणक्ये च। व्याधकुलजातस्य रत्नाकरस्य महर्षित्वम्। दैत्यकुल-सम्भूतस्य प्रह्लादस्य तद्वैपरित्यञ्चेति। निरुक्त्यादि प्रागुक्तम् ॥ ६९ ॥

पूर्व्वसूत्रोदाहरणमुखेनेदमाह स्विति। पिचुमर्द्दः निम्बतरुः

## न चागतं सुखं परित्यजेत् ॥७१॥

सुसंस्कृतोऽपि सम्यक् संस्कारेण विशुद्धोऽपि। सहकारी रसाल-तरुर्न भवति। निम्बस्य स्वाभाविकतिक्तत्वाच्च कृते संस्कारे न सहकारी भवति। तदुक्तं कविना—

शर्करा शतभारेण निम्बवृक्षोऽप्युपार्जितः।
पयसा परिसिक्तश्च न निम्बो मधुरायते' ॥

यस्य यः स्वभावः स तं यत्नशतेनापि न परिहरति। तदुक्तं तात्त्विकैः—

'न हि स्वभावो भावानां व्यावर्त्त्यं तौष्ण्यवद्रवेः' । इति।

'सहकारोऽतिसौरभः'। अति शयितं सौरभं यस्य स आम्रः। इन्दं सहकारयति मेलयतीति सह पूर्व्वात् करोते रच्। संस्कृतः कृत्रिमे शस्ते भूषितेऽप्यन्यलिङ्गकः। क्लीवन्तु लक्षणोपेते' इति मेदिनी। संस्क्रियते इति संपूर्व्वात् करोतेः क्तः। 'सुट् भूषणे समपर्य्युपात्' सुडिति कालापाः ॥ ७० ॥

दौर्लभ्यत्वात्तदुपस्थितसुखपरिहारे निषेधमाह न चेति। आगतमुपस्थितं प्राप्तम्। वर्त्तमानं यत्सुखमनुकूलवेदनीयन्तन्नैवपरित्यजेत्। यतो दुःख-बहुलोऽयं संसारः। सुखन्तु क्षणिकं गाढ़ान्धकारेऽस्मिन् लोके खद्योतालोकवद् दुर्लभम्। तच्च सदा प्रार्थनीयमुत्पाद्यञ्च। नित्यं दुःखस्य परिहारप्रवृत्तिर्जीवेषु दृश्यते। अतो योगसूत्रमत्रार्थे प्रमाणयति। 'हेयं दुःखमनागत'मिति। उपस्थितं सुखं परित्यज्यानागतसुखलिप्सया भ्रम-

**स्वयमेव दुःखमधिगच्छति राजचर्य्यात् ॥७२॥**

**न रात्रि-चारणं कुर्य्यात् ॥ ७३ ॥**

---

णमपि नाचितम्। परं क्वापि सुखभ्रमे दुःखं नाश्रयणीयम्। सुखनिरुक्तिः प्रागुक्ता ॥ ७१ ॥

राजचर्य्याया दुःखजनकतामाह स्वयमिति। धातूनामनेकार्थत्वाच्चर्य्या शब्दार्थः प्रातिकूल्यम्। राजचर्य्याद्राज्ञां प्रातिकूल्यात्तद्रोहाद्वा लोकः स्वयमेव दुःखं क्लेशमधिगच्छति। अथवा दीनो राजचर्य्यातः नृपवदाचरणादवश्यं दुःखमाप्नोति। यद्वा संसारस्य दुःख स्वाभाव्याद् राजचर्य्यातोऽपि दुःखमवश्यमधियन्ति प्रागेवास्ताम् अन्यस्मिन् कर्म्मणि दुःखानुभवः। 'चर्य्याचरण सेवाऽप्युपासना पर्य्यस्थितिः'। चर गतौ, चरणम्। 'गममदचरयमश्च' इति यता चर्य्यमपोति सूत्रकारसम्मतम् ॥ ७२ ॥

रात्रौ विचरणे विघ्नहेतोस्तन्निषेधमाह नेति। रात्रौ रजन्यां चारणं भ्रमणं चंक्रमणमिति। वृथा तन्न कुर्य्यात्। तदुक्तं वृद्धचाणक्ये—

"विषं चंक्रमणं रात्रौ अजीर्णे भोजनं विषम्".।

रात्रौ वृथाव्यायां वायुप्रकोपः अग्निमान्द्यं शरीरशैत्यादिकं भवति। दशघटिकातःपरं रात्रौ दीर्घमार्गभ्रमणे स्वास्थ्यहानिश्च। तदुक्तं वैद्यके—

"दिवसे भ्रमणं कृत्वा स्वप्याद्रात्रौ यथाविधि"।

चरणमेव चारणं स्वार्थिकः प्रत्ययः। अन्यत्र चारणो वन्दि-विशेषः

**न चार्द्धरात्रं स्वप्यात्॥ ७४॥**

**तद्विद्वद्भिः परीक्षेत॥ ७५॥**

---

कुशीलवश्च। चर गतौ, चारयन्ति कीर्त्तिम्। चरतेर्णिजन्ताल्लुट्। नन्द्यादि-ल्युः॥ ७३॥

स्वास्थ्यहानभयादर्द्धरात्रे शयन निषेधमाह नेति। अर्द्धरात्रं निशीथकालः। रात्रेरर्द्धं मध्यभागः। तदा न स्वप्यात्। न स्वपेदिति पाठो न श्रेयान्। स्वपेदिति कुत्रचित् पाठस्त्वार्षवज्ज्ञेयम्। तत्काले शय्यारोहणं न विधेयम्। नाद्यसंवेशनं नाद्यमुत्थानञ्च युक्तम्। रजन्याः पूर्व्वयामात्परं शयनं पश्चिमयामशेषे समुत्थानं हितकरम्। परमर्द्धरात्रकालं व्याप्य स्वप्यादिति। दिवानिद्रा परिहारः श्रेयान्। अजीर्णरोगी दिवसे निद्रा हितकारिणी। अनियतकालं निद्राहार-स्नान-भ्रमणे रोगसम्भावना प्रबलेति। अन्यद्वैद्यके आह्निकाचारतत्त्वे च बहुधा प्रपञ्चितमस्ति। रात्रेरर्द्धमर्द्धरात्रम्। 'अहः सर्वैकदेश' इत्यादिवचनाच्। ऋधु वृद्धौ, ऋधनोत्यनेन। 'हलश्चेति' घञा अर्द्धमिति सिद्धम्॥ ७४॥

शयनाशनगमनादीनां परीक्षणं विदुषामेवोचितमित्याह तदिति। तदर्द्धरात्रे शयनं भ्रमणमशनञ्च युक्तमयुक्तमिति सुधीभिः परीक्ष्येत, शास्त्रयुक्त्या वैधमवैधञ्च तत्सर्व्वं ज्ञात्वा किं किं फलं स्यादकृते किं वाऽनिष्टं ते तत्तद्विषये परीक्षां कुर्य्युः। कार्य्यतो मानवे विवेकं विना केवलं च वाश्मात्रेण फलानुभवो

**परगृहमकारणतो न प्रविशेत् ॥७६॥**

**ज्ञात्वापि दोषमेव करोति लोकः ॥७७॥**

---

न स्यात्। अविद्वांसस्तु विचारानुष्ठानानुभवैर्विना यथेच्छं कुर्वन्तो निरन्तरं क्लेशमधियन्ति।. 'न तद्विपरीक्षेत' इति पाठ-भेदे तदा परीक्षाकरणे न विपरीक्षेत, नापि विपरीतं कुर्य्या-दिति। यद्वा प्रागुक्तविषयेषु स्वयमेव दुःखमधिगच्छन् विरुद्ध-भावेन प्रमादात् स्वेच्छया वा परीक्षां न कुर्य्यात्तेन न्याय्यहानिः स्यात् ॥ ७५ ॥

प्रयोजनेन विनान्यस्य गृहे प्रवेश-प्रतिषेधमाह परेति। परेषामन्येषां गृहं परस्वामिकस्थानञ्च अकारणतः किमपि कारणं विना। गृहादेः स्वामिनामनादेशेन पूर्व्वपरिचयविश्वा-साभावाच्च तत्र तत्र नान्तर्गच्छेत्। गमने तादृशद्रव्यग्रहे च अवैधकार्य्यत्वादपराधो भवेत्। अत्र गृहमित्युपलक्षणम्। अप्रवेश्यं पराधिकृत-स्थान-द्रव्य-शस्य क्षेत्रोद्यानादिकं बोध्यम्। दानानुमतिस्वत्वं विना परद्रव्यग्रहणे चौर्य्यं स्यादिति केचन सूरयः आहुः। धर्म्मशास्त्रकृतस्तु परद्रव्येष्वभिध्यानमपि दुरितजनकं वदन्ति। यस्य यद् योग्यं लभ्यं तत्रावैधभावेन कोऽपि जनः प्रतिबन्धको भवेद् ग्रहणादौ, स तदा न्यायालये अभियोज्यः ॥ ७६ ॥

प्रमादादज्ञानाद्वा परद्रव्यादिकं बहुशापि हरणादिरूपदोषं करोति तदाह ज्ञात्वापीति। लोको जनः इति जातावेकवच-

**शास्त्रप्रधाना लोकवृत्तिः ॥७८॥**

**शास्त्राभावे शिष्टाचारमनुगच्छेत् ॥७९॥**

---

नम् । तद्द्रव्यादि परकीयमिति निश्चितं ज्ञात्वा विदित्वापि द्रव्यादिकं संगृह्य चैत्रादौ. प्रविश्य वा दोषमपराधं करोति । अतः परकीये द्रव्ये गृहादौ प्रवेशे च अनुमतिः प्रदानञ्च अपेक्षणीयम् । प्रसह्य तन्नैव कुर्य्यात् । 'दोषोऽराधो विकृतिरन्यायश्चे'ति ॥ ७७ ॥

लोकवृत्तेः शास्त्रमूलकत्वमाह शास्त्रेति । शास्त्रं हितानुशासनम् । यद्वा शासनोपदेष्टृ-प्रवादर्शं वा । अथवा शास्त्रं ऋग्वेदादि । तत्प्रधानं यस्यां लोकवृत्तौ इति बहुव्रीहिः । तादृशी लोकवृत्तिः शास्त्रप्रधाना शास्त्रानुशासनमूलिका भवतीत्यर्थः । शास्त्रेषु लोकवृत्तिरुपदिष्टा । शास्त्रविध्यनुसारेण लोकाः कार्य्याकार्य्यं अवबोध्य प्रवर्त्तन्ते । यादृच्छिक प्रवर्त्तने तु नैष्फल्यं कार्य्यहानिश्च । तथा च स्मृतौ—

'अङ्गानि वेदाश्चत्वारो मीमांसान्यायविस्तरः' ।

इत्यादि प्रमाणैः शास्त्रनामानि प्रागुक्तानि । नाति न्याय-वैद्यकजौतिष-वास्तु-शास्त्राणि तेषु अन्तर्नीतानि । अन्यदस्ति श्रीमन्मधुसूदन कृते प्रस्थानभेदे । 'लोक प्रवृत्तिरिति' पाठभेदे शास्त्रप्रतीत्यनुसारेण लोकप्रवृत्तिर्भवतीति ॥ ७८ ॥

अनुशासनाभावे लोकयात्रा निर्व्वाहोपायमाह शास्त्राभाव इति । शास्त्राणां श्रुतिस्मृतीतिहासपुराणवाक्यानाम् । यत्रा-

## नाचरिताच्छास्त्रं गरीयः ॥८०॥

चरणे तेषामभावो भवति तत्र शिष्टानां मनुव्यासादीनां तादृश-परवर्त्तिनां जनानामाचार्य्याणाञ्चाचारमनुष्ठानपद्धतिमनुगच्छे-दनुसरेदिति। अतो धर्म्मनिष्ठ-सूरि-जनाचरणमपि शास्त्रोप-देशवत् प्रमाणम्। एवं मिताक्षराव्याख्यानादौ शिष्टाचार-कुलाचार-देशाचार-स्वाचारादीनां प्रामाण्यमङ्गीकृतम्। शिष्ट-लक्षणमुक्तं सूरिभिः—

'न पाणिपादचपलो न नेत्रचपलो मुनिः।
न च वाग्भङ्गचपल इति शिष्टस्य लक्षणम्'॥

शिष्टापरिग्रहाधिकरणे भगवता शङ्कराचार्य्येण मनुव्यासादीनां शिष्टत्वमुक्तम्। नीतौ तु बृहस्पति-भार्गव-वातव्याधि-विशालाक्ष-बाहुदन्तीपुत्र-पिशुन-कौटिल्यादीनां यदाचरणं तदनुकार्य्यम्। महतामुपदेश एव ग्राह्यो नापि तेषामनुष्ठितकार्य्ये दोषानु-सन्धानम् ॥ ७९ ॥

शिष्टाचरणाच्छास्त्रस्य दौर्बल्यमाह नेति। आचरिताच्छिष्ट-जनानुष्ठितात्तत्परिषेविताद्वा। शास्त्रं बृहस्पति-प्रभृतिविरचित मनुशासनं वाक्यं सूत्रादि वा। न गरीयः नातिशयेन श्रेष्ठं भवतीति। यत्र शास्त्रकृतां बहुधा मतभेदोऽस्ति यत्र च द्वयोः शास्त्रलोकाचारयोः स चास्ति। तत्र तयोर्लोकाचारस्य प्रत्यक्ष-त्वाच्छास्त्रस्य तत्प्रणेतुश्च परोक्षत्वादाचारो गरीयान्। यद्वा सन्देहे कस्य मतं ग्राह्यं कस्य वा त्याज्यं तद्दुर्निरूप्यम्। शास्त्राभिप्रायस्य

दूरस्थमपि चारचक्षुः पश्यति राजा ॥८१॥

काललुप्तत्वात् सर्व्वस्मिन् न सुलभः। अतस्तदार्थ्यपरम्परागतरीतिमनुपालयेत्। अन्यच्च ये तु शास्त्रानभिज्ञास्ते प्राचीनाचारमेवानुष्ठाय कार्य्यं सम्पादयन्ति। 'निर्देशग्रन्थयोः शास्त्र'-मित्यमरः। शासनमाज्ञा निर्देशः। शासु अनुशिष्टौ, शिष्यतेऽनेन। ततः 'सर्व्वधातुभ्यष्ट्रन्'। अतिशयेन गुरुर्गरीयान्। 'प्रियस्थिर' इत्यादिना सिद्धम् ॥ ८० ॥

राज्ञः चारनेत्रेण दूरस्थ-विषयावलोकनमाह दूरेति। राजा नृपो भूपाल इति। चारचक्षुः दूतनेत्रः। चारो दूतविशेषश्चक्षुर्यस्य सः। दूरस्थं व्यवहितं राष्ट्रविषयं सर्व्वम्। समीपस्थमिव। पश्यति अवलोकयतीति। स्वस्थानस्थितेन राज्ञा दूतेन कारस्थितं वस्त्विव विश्वस्तत्वेन सर्व्वमवलोक्यते। तथाच—

'इच्छामात्रेण तद्भङ्क्ते राजेवात्माखिलेश्वरः'।

इति सांख्यसारे। अन्यदुक्तं प्राचीनैः 'राजानश्चारचक्षुषः' इति। अपरञ्च—

'राजा पश्यति श्रोत्रेण धिया पश्यति पण्डितः'।

'भूते पश्यन्ति वर्व्वरा' इति पूर्व्वमुक्तम्।

वर्व्वराः पामरा मूढाश्छागाश्चेति। 'स्याद्दूरं विप्रकृष्टकम्'। दुःखेन इयते। 'दूरीणो लोपश्चे'ति साधुः। चक्षुरिति, चष्टे अनेनेति चक्षिङ्धातोः 'चक्षेः शिच्च' इत्यौणादिकसूत्रादुसिः। शित्त्वादनार्द्धधातुकत्वात् ख्याञादेशो न भवति ॥ ८१ ॥

## गतानुगतिको लोकः ॥ ८२ ॥

## जीविभिस्तस्मिन्नाजीवेत् ॥ ८३ ॥

---

लोकाः प्रायशः समयपरम्परागतविषयमनुधावन्ति तदाह गतेति। यद्गतं तदनुपश्चाद्गतं गतिर्यस्य सः। अविवेकेनातीत-लोकपथानुवर्त्ती। तादृशः साधारणो लोको भवति। सन्तः परीक्ष्य विषयमेकं हित्वा अन्यतरम् उपादेयं भजन्ते, न तु सर्व्वे प्राकृता जनाः विमृश्यकारिणः स्युः। साधारणा लोकाः प्रति-विषयं विचिन्त्य न किमपि कुर्वन्तीति भावः। लोकायतिका अपि तथैवाचरन्ति। नापि सर्वेषां वस्तुविवेकबुद्धिर्वर्त्तते। ते लोकदृष्टान्तानुसारेण सर्वं सम्पादयन्ति। अतस्ते लोकप्रवाह-मध्ये धावन्ति विषयेष्विति। तथाच महाकवि भासेनोक्तम्—

"कालक्रमेण जगतः परिवर्त्तनीया
चक्रारपङ्क्तिरिव गच्छति लोकपङ्क्तिः"।

'लोकस्तु भुवने जने' इति। नापि सर्व्वं पुरातनमेव ग्राह्यं वर्त्तमानमपि हितकरमुपादेयम्। तदुक्तं कविप्रवरेण—

"पुराणमित्येव न साधु सर्वम्
न चापि काव्यं नवमित्यवद्यम्"। इति।

पूर्वमुक्तमन्यत् ॥ ८२ ॥

जीवानां गतानुगतिक-रीत्या जीवन-निर्व्वाहः स्यात्तदाह जीवीति। जीविभिर्मानवैः प्राणिभिर्वा। यस्मिन् गतानुगति-करीतिमनुसृत्य तादृशमुपायमाश्रित्य च। आजीवेज्जीवनयात्रां

यमनुजीवेत्तं नापवदेत् ॥ ८४ ॥

सम्पादयेत्। नहि प्रत्यहं सर्वे लोकाः प्रत्येकं वस्तु विचार्य्यावलोक्य च सम्यक् कार्य्यं कर्त्तुं शक्नुवन्ति । प्राचीनागतनियमानुसारेण व्यवहारिकमन्यद्वा किमपि निर्वाहयन्ति । महाजनानुसृतपथानुसारेण सर्वो लोको गच्छेत् । तदुक्तं भारते 'महाजनो येन गतः स पन्थाः' इति । धर्म्मशास्त्रकृद्भिश्च—

'येनास्य पितरो याता येन याताः पितामहाः ।
तेन यायात्' इत्यादि प्रागुक्तम् ।

नीतिविदस्तु—'नहि सर्वेषु विषयेषु पैतामहपथमनुसरेत्' । तदुक्तं भामतीकारेण 'नहि पूर्वजो मूढ़ आसीदित्यात्मनापि मूढ़ेन भवितव्यम्' इति । अतः सद्धितकरविषये तत्सरण्यनुसरणम् ॥ ८३ ॥

यमाश्रित्य जीवति तस्यापकरणे निषेधमाह यमिति । यम् भूमिपालं पुरुषधौरेयमन्यद्वा । समवलम्ब्य जीवेत् जीविकाद्यर्ज्जनेन प्राणान् धारयेत् । तन्महान्तं पुरुषं भूमिपं वा लोको नापवदेत् । यदि वा नृपतौ जीविका भवेत्तदातदपवादकरणे राजविरोधो भवेत् । अन्यानुपकारकान् प्रति कृतघ्नता चेति । यत्तु 'सर्वः सार्थवशाज्जनोऽभिरमते कस्यास्ति को वल्लभः' इत्युक्तं तदापाततः दृष्ट्या न तु परमार्थतः । धनमानपुण्यधर्म्मादिभिरुपकार्य्योपकारकत्वोच्चावचत्वादि-विषयः सुचिरं तिष्ठत्येव । एषैव रीतिः लोकस्थितिविधायिनी ॥ ८४ ॥

तपः सार इन्द्रियनिग्रहः ॥ ८५ ॥

दुर्लभः स्त्रीबन्धनान्मोक्षः ॥ ८६ ॥

---

योग-ध्यान-तपसां मध्ये श्रेष्ठमाह तप इति। इन्द्रियाणां चक्षुरादीनां ज्ञानकर्मेन्द्रियाणामुभयेषां निग्रहो निरोधः संयमः विषयतो निवृत्तिरिति यावत्। स च तपसः सारः तपश्चर्य्यायाः प्रधानम्। येषामिन्द्रियनिग्रहो नास्ति ते नैव तपस्विनो भवन्ति। निगृहीतेन्द्रिया एव तपसः सारं लब्धुं शक्नुवन्ति। तथा च श्रुतिः 'व्यावृत्तचक्षुरमृतत्वमिति' इति। तपः कृच्छ्रचान्द्रायणादि। तच्च यमाद्यष्टाङ्गयोगेषु नियमान्तर्नीतम्। 'तपसा कल्मषं हन्ति' इति स्मृतिः। 'तपोलोकान्तरेऽपि च। चान्द्रायणादौ' इति मेदिनी। अन्यच्चोक्तं—

"वनेऽपि दोषाः प्रभवन्ति रागिनाम्,
गृहेऽपि पञ्चेन्द्रिय-निग्रहस्तपः।
अकुत्सिते कर्म्मणि यः प्रवर्त्तते,
निवृत्तरागस्य गृहं तपोवनम्' ॥

'तत्सारमिन्द्रियनिग्रहः' इति पाठभेदे तज्जीविकाया जीवितस्य वा सारं प्रधानमिन्द्रियसंयम इति ॥ ८५ ॥

नारीबन्धनान्मुक्तिलाभः संसारे पुंसां दुर्लभस्तमाह दुरिति। स्त्रीभिर्नारीभिः संसारे अस्मिन् मानवस्य यद्बन्धनं समासक्तिः। तस्मादमोक्षोऽव्याहतिलाभो बन्धनच्छेद इति। दुर्लभः अति-

**स्त्री नाम सर्व्वाशुभानां क्षेत्रम् ॥८७॥**

**न च स्त्रीणां पुरुष-परीक्षा ॥ ८८ ॥**

---

क्लेशेन लभ्यः कदाचित् केनापि संयमाराधनादिना, तन्नब्धुं शक्यते न सर्व्वे इति सारः। संसारकारालये रमणीरज्जुः पुमांसं दृढ़भावेन बध्नाति, ये तु सर्व्वस्वं श्रीपरमात्मबुद्ध्या परिहृत्य सन्न्यस्यन्ति ते तस्माद्बन्धनान्मुच्यन्ते। अन्येतूर्णनाभ इव स्वकर्म्मणा स्त्र्यादिभिश्च संसारजाले बद्धाः स्युरिति ॥ ८६ ॥

प्राङ्नारीणां संसारबन्धहेतुत्वमुक्त्वा सम्प्रति अशेषविघ्नाकरत्वन्तासामुच्यते स्त्रीणामिति। सर्वेषां काम-क्रोध-विषादादीनामशुभानाममङ्गलानां क्लेशानाञ्च क्षेत्रमाधार उत्पत्तिस्थानम्। स्त्री नारीति। शुभस्याप्याकरः स्त्री मन्तव्या तत्पश्चाद्वक्ष्यते। गृह्ये कर्म्मणि अपत्यजनने स्नेह प्रीति-वर्द्धने, परिचर्य्यां सहिष्णुतादौ च। 'क्षेत्र' पत्नी शरीरयोः'। 'क्षेत्र' शरीरे केदारे। सिद्ध-स्थानकलत्रयोः' इति मेदिनी। क्षि निवासगत्योः, क्षीयते अनेन। ततः क्षिधातो ष्ट्रन् प्रत्ययः ॥ ८७ ॥

स्त्रीणां पुरुषपरीक्षणे प्रायोऽधिकाराभावमाह, न चेति। स्त्रीणां योषितामबलानामिति। पुरुष-परीक्षा। पुरुषाणां नराणां परीक्षा सम्यक् पर्य्यालोचनपूर्व्वकदर्शनम्। नच युक्तं स्यात् प्रयोजनाभावात्। पुरुषतो नारीणां बुद्धेस्तैक्ष्ण्य-विवेकाभावात् अमासहिष्णुतया च पुम्भिरेव तासां परीक्षणं युक्तं नापि

**स्त्रीणां हि मनः क्षणिकमेकस्मिन्न तिष्ठति ॥८९॥**

**अशुभद्वेषिणः स्त्रीषु न प्रसक्ताः ॥९०॥**

---

ताभिः पुंसाम्। यद्वा पुरुषैरेव विवाहात् प्राक् स्त्रीणां सम्यक् परीक्षणं विधेयम्। तथाच शास्त्रकृतः 'दाराः। परीक्ष्यन्ते प्रयत्नेन पूर्व्वमेव करग्रहात्' इत्याहुः। सामुद्रिकैर्वैद्यकैश्च कन्या विवाहात् प्राक् परीक्षणीया। परमन्धाः क्लीवा जड़ा व्यङ्गा-वधिराः चिरपीड़िता पानसक्ता उन्मत्ताः पुमांसोऽपि उपय-मानर्हा इति केचन नीतिविदः। अन्यत्र परीक्षा दिव्यक्रिया। सा च महर्षिबृहस्पति-प्रोक्ता नवविधा धर्म्मशास्त्रनिबन्धे दिव्यतत्त्व-सन्दर्भेऽस्ति ॥ ८८ ॥

नारीणां स्वाभाविक-मानसलौल्यमाह स्त्रीणामिति। स्त्रीणां नारीणामबलानाम्। मनः चित्तं नैसर्गिकसारल्यादधिकमस्थिरं चञ्चलमिति यावत्। अतः एकस्मिन् विषये दीर्घकालं स्थातुं नार्हति। महता श्रमेण विषये एकस्मिन् स्थैर्य्यं लब्धुं शक्यते। यद्यपि उभयोरेव स्त्रीपुंसोश्चित्तचाञ्चल्यमस्ति। तथापि स्त्रीणां सारल्यात् कोमलत्वाच्चाधिकन्तद्भवति, वस्तुस्वाभाव्याद्वा। अत एताः संग्रामादावयोग्याः। बलाद् यत्नतश्च प्रयुक्तानां तासां स्वाभाविकपेलवताया अपत्योत्पादनशक्तेश्च हानिर्भवति। पूर्व-मुक्तमपरम्। अन्यदस्ति बृहच्चाणक्ये॥ ८९ ॥

अशुभद्वेषकारिणां नारीषु प्रसक्तिनिषेधमाह अशुभेति।

## यज्ञफलज्ञास्त्रिवेदविदः ॥८१॥

अशुभस्यामङ्गलस्योपद्रवस्येति यावत् । द्वेषिणः द्वेष्टारः दोषप्रहर्त्तारः । शुभाकाङ्क्षिणो लोकाः । ते स्त्रीषु नारीषु । न प्रसक्ताः न सम्यगासक्ताः नानुरता भवन्तीति शेषः । 'अशुभवेशाः स्त्री न प्रशस्ताः' इत्येवं पाठान्तरमपि दृश्यते । अशुभवेशा मलिनवेशाः पुरुषा रुग्णा भग्नस्वास्थ्या वा नारीषु न श्रेष्ठा-भवन्तीत्यर्थः । ये तु शुभाशयास्ते स्त्रीषु निरन्तरं समासक्ता न स्युः । तेन स्वास्थ्यमत्यायुः यशसो बुद्धेश्च प्राखर्य्यं वर्द्धते । स्त्रीषु अत्यासक्ताः दुर्बलाः क्षीणाः पीड़िताः प्रायः स्मृतिहीनाश्च भवन्ति । ये मध्यमासक्तास्ते शक्तिमन्तः । अनासक्तास्तु ओजस्विनो भवन्ति । अन्यद्वैद्यके कामसूत्रादौ च विषयेस्मिन् वर्त्तते ॥ ८० ॥

यज्ञकर्म्मविदां वेदज्ञत्वेन प्रशंसनमाह यज्ञेति । यज्ञानां अग्निष्टोमाश्वमेधवाजपेयराजसूयाणां पञ्चमहायज्ञानाञ्च यानि फलानि स्वर्गलाभ ब्रह्महत्यापनोदन-स्वाराज्यादीनि । तज्ज्ञातार ऋषयो मन्त्रद्रष्टारः । अन्ये च ऋत्विजः । त्रिवेदान् त्रयीः ऋग्यजुः सामानि । तद्विदो ज्ञातारः ते सम्यग्जानन्तीत्यर्थः । नान्ये अज्ञा लोका नास्तिका वा । अथर्ववेदस्य ऋगादिषु अन्तर्भावः । वेदानां पौर्वापर्य्यालोचनसरणौ प्रमाणाभावः । ये तु तादृशं मन्यन्ते पुरावृत्तदृष्ट्या ननु ते तात्त्विकबुद्ध्या पौर्वापर्य्य रहस्यज्ञाः । तेषाम् अनिर्दिष्टकालागतत्वे नेश्वरप्रणीतत्वेना-

## स्वर्गस्थानं न शाश्वतम् ॥८२॥

लौकिकार्थसमर्पकत्वेन च वा पौर्वापर्य्यां भावः। वेदविदो हि परमेशं जानन्ति। तथा च श्रुतिः 'नावेदविन्मनुते तम्बृहन्तम्'। 'तन्त्वौपनिषदं पुरुषं पृच्छामि' इति। तं परमात्मानमित्यर्थः। 'यज्ञः स्यादात्मनि मखे नारायण हुताशयोः' इति हैमः। यज देवपूजादौ, इज्यते अनेनेन वा। 'यजयाचन' इत्यादिना नङ्। त्रीन् ऋगादीन् विदन्तीति वेत्तेः 'सत्सु द्विष' इति क्विप्। पञ्चमहायज्ञाः स्मृतौ प्रसिद्धाः। यज्ञवृत्त' कात्यायनाश्वलायनापस्तम्बश्रौतसूत्रादिष्वस्ति ॥ ८१ ॥

कर्म्मफलेन प्राप्त-स्वर्गलोकस्य फलभोगात्परं च्यवित्वमाह स्वर्गेति स्वर्गस्यामरलोकस्य यत्स्थानं देवनिवासभूमिः। न तत् शाश्वतं नैव नित्यं सनातनमिति। तदुक्तं गीतायाम्—

'क्षीणे पुण्ये मर्त्त्यलोकं विशन्ति'।

इत्यत्रापि प्रकरण प्रसङ्गादायातम्। तत्रैव च—

'एकया यात्यनावृत्तिमन्यया वर्त्तते पुनः'।

श्रुतिरपि छान्दोग्ये 'तस्मिन् यावत् सम्पातमुषित्वाथैतमेवाध्वानं पुनर्निवर्त्तन्ते' इति। अतोऽश्वमेधादि यागजन्यापूर्व्वभोग-विषयस्य स्वर्गस्यानित्यत्वम्। तथा च न्याय-वित्समयः-स्वर्गः क्षयी मखापूर्व्वजन्यत्वात् घटादिवत् यद् यज्जन्यं तत्तदनित्यमिति। शाश्वतम् आत्मस्वरूपावगतिरिति औपनिषदाः। सिद्धवस्तुविषयत्वेन ब्रह्मात्मैकत्वावगमस्याक्रिया जन्यत्वेन च सना-

यावत् पुण्यफलं तावदेव स्वर्गफलम् ॥९३॥

न च स्वर्गपतनात् परं दुःखम् ॥९४॥

---

तनत्वात्। अन्यदाकरे भाष्ये भामत्यामद्वैतसिद्धौ चास्ति। स्वर्गः। अर्ज्ज अर्ज्जने, सुष्ठु अर्ज्यते इति कर्म्मणि घञ्। शाश्वतम्। शश पत गतौ, शशति। बाहुलकाद्वत्। शश्वद् भव 'तत्र भवः' इत्यण्। अनित्योऽव्ययानां टिलोपः। 'वहिषष्टिलोपवचनादिति' वार्त्तिकादिति ज्ञापकात् ॥ ९२ ॥

स्वर्गभोगस्य पुण्यकर्म्मफलस्य परिमितत्वमाह यावदिति। पूर्व्वसूत्रोदाहरण भूतत्वेनेदमुत्सूत्रमिति केचनाहुः। यावत्कालं व्याप्य पुण्यस्य सुकृतस्य फलं विद्यमानं भवेत्तावत्कालपर्य्यन्तं स्वर्गप्राप्त-पुरुषेण तद् भुज्यते। तत्समाप्तौ तस्य पुनरागति मर्त्त्यलोके, छान्दोग्य-पञ्चमप्रपाठकोक्त पञ्चाग्निविद्या नियमेन भवतीति। सुगममन्यत्। पुण्यकर्म्मणा मर्त्त्यलोके कीर्त्तिः सुखं परोपकारः सुशिक्षा च वर्द्धते। परकाले अमरधाम लाभः। कोष-निरुक्ती प्रागुक्ते ॥ ९३ ॥

अमरलोकात् पतनमति-क्लेशकरन्तदाह न चेति। स्वर्गपतनात्। स्वर्गात् शुभकर्म्मफल-भोगानन्त ' पतनात् मर्त्त्यलोकागमनात्। परमधिकं दुःखं नास्तीति। मर्त्त्येऽनित्यक्षणिकसुखभोगापेक्षया अमरधाम-सुखभोगः श्रेयानिति विशेषदुःखजनकन्ततः पतनम्। उक्तञ्च सांख्यवृद्धैः 'दृष्टवदानुश्रविकः सह्य-

**देही देहन्त्यक्त्वा ऐन्द्रपदं वाञ्छति ॥ ८५ ॥**

**दुःखानामौषधं निर्व्वाणम् ॥ ८६ ॥**

---

विशुद्धिक्षयातिशययुक्तः। तद्विपरीतः श्रेयान् व्यक्ताव्यक्तज्ञ-विज्ञानात्' इति। श्रुतौ तथैवोक्तम्। 'तद्यथेह कर्म्मचितोलोकः क्षीयते, एवमेवामुत्र पुण्यचितो लोकः क्षीयते'। कर्म्मणा चितो लोकः कर्म्मचितः कर्म्मणा लब्धः। पुण्येन चितः पुण्यचितः। तयोरुभयोर्लोकयोः पुनरागतिर्भवति। 'न च स्वर्गफलं दुःखम्' इति पाठान्तरमस्ति। तदात्वेऽर्थः सुगमः। मर्त्त्यलोके दुर्गतिर्गर्भ-वासः पुनर्मृत्यादिक्लेशजनकं दुःखम्। यद्वा स्वर्गेऽपि तारतम्य-जनितं दुःखमस्ति ॥ ८४ ॥

शरीरिणां मनुजानां देह-परिहारानन्तरमैन्द्रपदलाभेच्छा भवति तदाह देहीति। शरीरी देहधृग् जीवः। देहं त्यक्त्वा परिहृत्य संसारदुःखयन्त्र-निपीड़नेन ततः ऐन्द्रपदं देवराजपद-मनन्त-सुखाय वाञ्छति प्रार्थयति। यथा निदाघे-मार्गगामिनो गुरुभारोद्वहन-शीलस्य सुस्निग्ध-समीरणच्छाय-द्रुमतले विश्रामाय श्रेयस्तद्वत् संसारानल-सन्तप्तस्य जीवस्येन्द्रपदमिति। देही। देहोऽस्यास्तीतीन्। दिह उपचये, दिह्यते। दिहेर्घञ्। इन्द्र-स्येदमैन्द्रम्। 'तस्येद'मित्यण्। सूत्रे 'न वाञ्छन्ति' इति क्वापि पाठोऽस्ति, तदा अज्ञाः संसारसुखात् परं देवराजपदं न वाञ्छन्ति नाभिलषन्ति, विषकीटवत् संसारमेव भुञ्जते, तद्विषये मौढ्या-दिति ॥ ८५ ॥

## अनार्य्य-सम्बन्धाद्वरमार्य्य-शत्रुता ॥९७॥

दुःखात्यन्तनिवृत्त्युपायमाह दुःखानामिति। दुःखानां प्रतिकूलवेदनीयानां परितापानाम्। औषधं परिनिर्वृतिहेतुः तद्दानहेतुर्वा। यथौषधेन रोगोपशान्तिस्तद्वत् निर्व्वाणेन दुःखनिवृत्तिः। 'अथ त्रिविधदुःखात्यन्तनिवृत्तिरत्यन्तपुरुषार्थः' इति कापिलाः। 'तदत्यन्तनिवृत्तिर्हान'मिति पातञ्जलाः। निर्व्वाणं कैवल्यं मोक्षश्चेति। 'सम्यग्दुःखापायादपवर्गः' इति गौतमाः। 'पदार्थतत्त्वज्ञानान्निःश्रेयसाधिगमः' इति काणादाः। 'आत्मस्वरूपाधिगमः' इति वेदान्तिनः। 'द्विविधकर्म्मोच्छेदात् परमनवरतजीवस्योर्द्ध्वमलोकाकाशे गमनमिति' जैनाः। एतन्नये 'तत्त्वार्थश्रद्धानं सम्यग्दर्शनम्'। तत्त्वसाक्षात्काररूपौषधेनैव दुःख रोगः सम्यग् नश्यतीति रहस्यम्। अन्यत् तत्त्वार्थाधिगमसूत्रभाष्यादावस्ति। ओषः प्लोषो दीप्तिर्वा धीयतेऽत्र। धाञ् धारणपोषणयोः। ततः किः। निर्व्वाणम्। वा गतिगन्धनयोः निर्वाति। 'गत्यर्था' इत्यादिना क्तः। 'निर्वाणोऽवाते' इति साधुः॥ ९६॥

नीच-सङ्करणादपि श्रेष्ठेषु विरोधः श्रेयान् इत्याह अनार्य्येति। अनार्य्यस्य नीचस्य शवरादेश्च। सम्बन्धात् सम्मेलनात् सङ्करणादिति। आर्य्येषु महाकुलजातेषु महात्मसु वैरं वरं श्रेष्ठमुत्तममिति। तथा च भारविः—

"समुन्नयन् भूतिमनार्य्य-सङ्गमा-
द्वरं विरोधोऽपि समं महात्मभिः"। इत्युक्तं प्राक्।

निहन्ति दुर्व्वचनं कुलम् ॥९८॥

न पुत्र संस्पर्शात् परं सुखम् ॥९९॥

---

अन्यच्च राजनीतौ—

'दुर्जनैः सह सम्बन्धात् सज्जनोऽपि विनश्यति' ।

दस्यु-तस्कर-पामर-सम्बन्धेन धनलाभात् साधुसम्मेलनात्तदला-भोऽपि हितकरः । तादृशसम्बन्धाल्लाभे हानिरवश्यम्भाविनी । साधुसङ्गे जाते धनालाभेऽपि शान्तिर्भवेति । चौराम्लसम्बन्ध-वदसाधुसम्बन्धः । पयः शर्करासङ्गवत् स्वाधुसंमेलनम् ॥९७॥

लोकेषु कुत्सितवाक्य-प्रयोगे स्वीय कुलविनाशमाह नीति । दुर्वचनं गर्हितवाक्यं परं निहन्ति गौरवहीनं करोति शत्रुत्व-मपि वर्द्धते । अतः स्वकुलगौरवरक्षणाय कार्य्ये सौकर्य्यायापि च न वदेत् कुत्सितं वचः । 'नातिदुर्वचनं कुलमिति' पाठा-न्तरम् । तादृश पाठे कुलं नातिदुर्वचनं नाति निन्दनीयम् । यतो दोषाचरणं लोकस्यैव न तु तत्कुलस्य । पुरुषकार्य्यदोषेण कुले दोष आपतति । कुलमादौ परिचितं पश्चात् स्वस्य परि-चयः । पूर्वपाठोऽत्र मनोहरः ॥ ९८ ॥

संसारे तनय-स्पर्शनात् परमधिकसुखाभावमाह नेति । पुत्रस्यात्मजस्याधिकप्रियस्य । संस्पर्शादङ्गादौ समुपसर्पणात्तन्मुख-दर्शनाद्वा । इतःपरं श्रेष्ठं सुखंहर्षजनकमनुभवनीयं नास्ति । तथाच 'पुत्त्रेणायं लोकोजय्यः' । महाभारते च—

## विवादे धर्म्ममनुस्मरेत् ॥१००॥

## निशान्ते कार्य्यं चिन्तयेत् ॥१०१॥

'पुत्त्रः प्रियाणामधिको भार्य्या च सुहृदाम्बरा'! इत्युक्तं प्राक् । श्रुतिः स्मृतिरप्यत्रार्थे प्रमाणम् । 'अपुत्त्रस्य गतिर्नास्ति' । 'पुत्रहीनं गृहं शून्यमि' ति लघुचाणक्यवाक्येन पुत्रस्य श्रैष्ठ्य' प्रख्यापयति । अतस्तत्संस्पर्शे अतिसुखं स्यादिति । प्रागुक्त-मन्यत् ॥ ९९ ॥

विवादे उपायान्तरमाह विवादेति । विवादे धनसम्पदादेर्वि-रोधे समुपस्थिते कौशलेन धनेन च यदि मीमांसा न भवेत्तदा धर्म्मं लोकविधारकं श्रेष्ठोपायमनुस्मरेदनुतिष्ठेत । विवादमीमां-सायै अन्योपायमनपेक्ष्य धर्म्माश्रयणं प्रधानमुपायः । अद्यत्वेऽपि धर्म्माधिकरणे सत्यनिरूपणाय धर्म्मोद्देशे न्यायाधीशः शपथं कार-यति । एवमपि समाजिकेषु धर्म्मशपथेन विवादो मीमांस्यते । यश्च मानवोक्तः सामासिको धर्म्मः स सर्व्वेषामाश्रयः । अनुस्मरे-दित्यत्र पश्चात् स्मरणतो हि प्राग् धर्म्माश्रयणमनुष्ठानञ्च श्रेयः । अतः अनुस्मृतिरनुसरणार्थो युक्तः । 'विवादे कार्य्यमनुस्मरेत्' इति सूत्र पाठभेदे, विवादे समुपस्थिते: कार्य्यं स्वापराजयजनकं कर्म्मा-नुचिन्तयेदिति । येन कर्म्मणा स्वोत्कर्षो भवति तदेवानुसन्द-ध्यात् । अनुपूर्व्वात् स्मरतेर्लिङानुस्मरेदिति सिद्धम् ॥१००॥

कार्य्यानुचिन्तनस्य प्रशस्तावसरमाह निशेति । निशायाः यामिन्या अन्ते अवसाने रजनीशेषे, तन्मध्ये वा, निद्राविगमे शरीरेन्द्रिय-

## प्रदोषे न संयोगः कर्त्तव्यः ॥ १०२ ॥

---

स्थैर्य्यान्मनसः स्थैर्य्ये संजाते विषयान्तरात् प्रत्याहृतमानसः सुस्थत्वेन । कार्य्यं सांसारिकं कर्म्म । अन्यदा धर्म्मादिकं चिन्तयेत् । स्वयं कार्य्यगुरुत्वेन मन्त्रिभिः सार्द्धं वा, तदा तादृशकार्य्यप्रणिधौ अन्येषां अवणायोग्यत्वमपि बोध्यम् । प्रागविश्रामे पश्चात् मनसः स्थैर्य्यात् कालस्य सुखकरत्वात्तस्मिन् विषयपरिचिन्तनमक्लेशेन भवतीति सारः । वासरे कार्य्यबाहुल्यात् मानसचाञ्चल्याद्वा न तत्सम्भवति । तदुक्तं पूर्व्ववृद्धैः 'गुप्तस्थाने स्निग्धवायौ विश्वस्ते सुहृदि पराश्रवणे प्राज्ञैः स्वयं वा चिन्तयेत्' इति । निशान्ते गृहे विजने वा । 'निशान्तं त्रिषु शान्ते स्यात् क्लीवन्तु भवनोषसोः' इति मेदिनी । 'निशान्तं सदनं वस्त्यमागारं मन्दिरं पुरम्' इति वाचस्पतिश्च । निशेति । अम गतौ, अम्यते । निशायामम्यते वा । ततः क्तप्रत्ययः । 'रुष्य मत्वर' इत्यादिना नेट् । निशाया अन्तो यत्रेति वा ॥ १०१ ॥

सायंकाले कर्म्मसम्बन्ध-निषेधमाह । प्रदोष इति प्रदोषे रजनीमुखे सायंकाले दिनयामिन्योः सन्धिक्षणे इति । संयोगः केनापि कर्म्मणा सम्बन्धः तदारम्भोऽनुधावनं वा । न कर्त्तव्यः नैवोचितः । तत्क्षणस्य सन्धित्वेनानुधावनायोग्यत्वादवसरकालः सः । तदुक्तं राजनीतौ—

'चत्वारि घोररूपाणि सन्ध्याकाले विवर्जयेत् ।
आहारं मैथुनं निद्रां स्वाध्यायञ्च विवर्जयेत्' ॥

उपस्थित-विनाशो दुर्नयं मन्यते ॥१०३॥
चीरार्थिनः किं करिण्या ॥ १०४ ॥

---

संयोगः सङ्गम इति केचित्। दिवसारम्भक्षणः कार्य्यारम्भे प्रशस्तः। प्रदोष-समये दिनयामिन्योः सन्धिकाले परमेश-चिन्तनस्य विश्रान्तेश्चावसरत्वेन न कर्म्मसयोगस्य योग्यावसरः। अहनि सौरालोकस्य विस्फारितत्वाद्बुद्धेरपि सर्वविषयेषु सुप्रसृतिर्भवतीति न सायम्, तदानीं सौरालोकस्य मान्द्यादिति। 'प्रदोषो रजनीमुख'मित्यमरः। दुष वैकृत्ये, प्रादुष्यति। प्रपूर्व्वाद्रात्रिप्रारम्भेऽर्थे पचाद्यच्। टापि तु दोषा इति। तदा प्रारब्धो दोषायः। प्रादिसमासः। यद्वा प्रारब्धा दोषा यस्मिन्निति वा ॥ १०२ ॥

उपस्थित-विनाशस्य-दुर्नीतित्वमाह उपेति। उपस्थितस्य वर्त्तमानस्य कार्य्यस्य सञ्चितस्य वस्तुनो वेति यावत्। विनाशो हानं समुच्छेदोऽपि। तदधिपतिः दुर्नयं दुर्नीतिं मौर्ख्यं रक्षणासामर्थ्यञ्च प्रवीणो मन्यते। समुपस्थितं लब्धञ्च यत्नतो रक्षयेत्। यदवश्यलभ्यं तत्प्रयासेनार्जयेत्। उपात्तं विवेकेन व्यवहरेदिति नीतिसारः। सञ्चितनाशे क्लेशो दैन्यं बुद्धिमान्द्यञ्च। भाविवस्त्वयाशया लब्धं न परिहरेत्। तस्यानागतत्वात्। सुनिश्चिते भविष्यति लाभाधिक्ये त्यजेच्चेति रहस्यम्। प्रागुक्तमन्यत् ॥१०३॥

कार्य्योपयोगिद्रव्यालाभे तदुद्योगनिषेधमाह चीरेति। चीरार्थिनो दुग्धप्रार्थिनः पुंसः करिण्या हस्तिन्या किं स्यान्न तया

## न दानसमं वश्यम् ॥ १०५ ॥

दुग्धप्रयोजनसिद्धिः। यस्य तु यत् प्रयोजनं तदुपादानद्रव्यं समाहार्य्यम्। यथा तण्डुलार्थिनो धान्यानि न तु माषाः। यस्य तु यन्न प्रयोजनम्, तेन तन्नोपादेयम्। यथा जलार्थिना सिकता। तथा च—

'प्रयोजनमनुद्दिश्य न मन्दो हि प्रवर्त्तते' इति।

वृथा कर्म्मानुष्ठाने क्वचित् कदापि स्वानिष्टमपि स्यात्। शास्त्र-कृतापि 'न कुर्व्वीत वृथा चेष्टाम्' इत्युक्तम्। तत्कार्य्यानुपयोगि-वस्त्वासादनमपि वृथा भवति ॥ १०४ ॥

दानस्य परायत्तीकरणे हेतुमाह नेति। दानसमम्, दानेन स्वद्रव्यस्य हितोद्देशेनोपकाराय परस्वीकरणेन। तत्समं तुल्यम्। वश्यं लोक-वशीकरणकार्य्यमन्यद् नास्तीत्यर्थः। तथा च श्रुतिः—

'दानेन द्विषन्तो मित्रा भवन्ति'

'तस्माद्दानं परमं वदन्ति'।

अपरा च 'त्रयो धर्म्मस्कन्धा यज्ञोऽध्ययनं दानञ्चे'ति। स्मृतिरपि 'दानमेकं कलौ युगे'। वृहस्पतिवाक्ये—

"न प्रदानैः क्षयं यान्ति नोपभोगेन सम्पदः।

ददध्वं दानमनिशं माऽभुवन् कृपणा जनाः" ॥ इति च।

"कृपणस्य धनं याति नृपाग्निचोरशत्रुषु"।

विष्णुरप्याह। 'धनेन किं यो न ददाति नाश्नुते'। धर्मिभिर्धर्म-

परायत्तेषूत्कण्ठां न कुर्य्यात् ॥ १०६ ॥

---

रनायासेन स्वपरहित-कीर्त्ति जनक-परवशीकरण-कार्य्याणि साधयितुं शक्यते । दानविषये पूर्व्वमुक्तं सूत्रोक्तविषयप्रसङ्गादत्रो-च्यते ॥ १०५ ॥

परहस्तगतविषये उद्वेगकरणनिषेधमाह परेति । परेषा-मन्येषां बलवतां वा । आयत्तानि हस्तगतानि यानि धनान्यन्ये विषयाश्च । तेषु उत्कण्ठामुत्कलिकामुद्वेगमिति । तन्मतिमान् न कुर्य्यात् । 'उत्कलिका तु हेलायां तरङ्गोत्कण्ठयोरपि' इति रभसः ।

"चिन्ता तु स्मृतिराध्यानं स्मरणं सस्पृहे पुनः ।
उत्कण्ठोत्कलिके तस्मिन् अभिध्यातूभयोरपि' ॥

इति शब्दार्णवे च । पराधीन-धनदर्शनेन स्वधनस्य परकराय-त्तत्वेन च पुनरुद्धार सम्भावना विरहादुत्कण्ठां खेदञ्च मतिमान् न विदध्यात् । परन्तु तदर्जन रक्षण सन्नियोगाश्चिन्तनीयाः । अन्यच्च—

"पराधीनं न कर्त्तव्यं तरुणीधनपुस्तकम् ।
कृतश्चेल्लभ्यते दैवाद् भ्रष्टां नष्टं विमर्द्दितम्" ॥

उत्कण्ठा । कठि शोके, उत्कण्ठनम् । ततो 'गुरोश्च' इत्यादि सूत्रेण अः स्यात् ॥ १०६ ॥

**असत्समृद्धिरसद्भिरेव भुज्यते ॥१०७॥**

**निम्बफलं काकैर्भुज्यते ॥ १०८ ॥**

---

असदुपायार्जितधनस्यासत्पथगामित्वमाह असदिति। असती परपीड़ाचौर्य्यादिना हीनमार्गेण वा आगतोपार्जिता या समृद्धि-र्विपुलधनमैश्वर्य्यमिति यावत्। तादृशी सम्पत्तिरसद्भिः चौर-दस्यु-शठ-गणिकादिभिर्भुज्यते उपभोगः क्रियते च, यदि तस्याः भोगः सत्कार्य्ये व्ययः सत्पात्रे समर्पणं न स्यात्। तदुक्तं वृद्धचाणक्ये—

'सञ्चितं क्रतुषु नोपयुज्यते, प्रार्थितं गुणवते न दीयते।

तत्कदर्थ्य-परिगतं धनं चौर-पार्थिवगृहेषु भुज्यते'॥

प्रागुक्तमन्यत्। 'ऋद्धिः स्यादौषधिभेदे समृद्धावपि योषिति' इति मेदिनी। समृद्धि', ऋधु वृद्धौ, समर्द्धनम्। ततः क्तिन्॥१०७॥

पूर्व्वसूत्र विशदीकरण समर्थन-प्रसङ्गेनेदं प्राह निम्बेति। निम्बफलं पिचुमर्द्दाख्यतिक्तफलम्। काकैर्वायसैर्भुज्यते अद्यते। न सुस्थलोकैः। तिक्ताधिक्यादरुचिकरत्वादिति। अतितिक्तः स्वास्थ्यहानिकरः। एतेन यथा स्वभावतिक्तं निम्बफलं तथा तद्-योग्यो भोक्ता करट इति। एवमसदुपायार्जितं धनं तस्करादिभि-रेव भुज्यते इति पूर्व्वसूत्रानुसङ्गः। 'पिचुमर्द्दश्च निम्बेऽथ' इत्य-मरः। 'काके तु करटारिष्ट बलिपुष्ट सकृत्प्रजाः। बलिभुग् वायसा अपि' इत्यमरः। निम्बः निवि सेवने, निम्बति लोकानां

नाम्भोधिस्तृष्णामपोहति ॥१०९॥

वालुका अपि स्वगुणमाश्रयन्ते ॥११०॥

---

स्वास्थ्यम्। ततः पचाद्यच्। काकः। 'कै शब्दे, कायति। इण् भीका' इत्याद्यौणादिकसूत्रात् कन् ॥ १०८॥

लोकतृष्णाविगमे वारिधेरपि सामर्थ्याभावमाह नेति। अम्भोधिर्वारिधिः सागर इति। लोकतृष्णां विषयवासनाम्। नापोहति न पूरयितुं शक्नोति नित्यवृद्धिस्वभावात्। तदुक्तं कविभिः—

'धनाशा जीवनाशा च जीर्य्यतोपि न जीर्य्यति'। इति।

वारिधिपक्षे तु पिपासायाः सततं वर्द्धमानत्वेन पुनः पुनः पिपासुत्वाज्जलधिस्तामपनेतुं न शक्नोति। पौराणिकास्तु 'आशा वैतरणी नदी' इत्याहुः। यथा जीवनावसाने वैतरणी नदी समुत्तीर्य्यते तद्वत् आशानद्यपि। सति जीवने आशानदी समुत्तरणे नास्ति सम्भवः। तात्त्विकैरुक्तम्—

'सा तृष्णा चेत्परित्यक्ता को दरिद्रः क ईश्वरः'।

'आशाहि परमं दुखं नैराश्यं परमं सुखम्'।

अम्भोधिः। अभि शब्दे, अम्भो जलं धीयते इति। 'उदकेस्वम्भौ च' इत्यनेन असुन्, नुमागमश्च। 'तृट लिप्सायामुदन्यायां स्मरपुत्रामपि स्त्रियाम'। तृष्णा, ञितृष् पिपासायाम्, तर्षणं तृष्णा। "तृषिशुषिरसिभ्यः कित्" इत्यौणादिकाम्नश्च ॥१०९॥

क्षुद्रस्यापि स्वगुणत्यागाभावमाह वालुका इति। वालुकाः सिकताः। परस्परासंहता अपि स्वस्यात्मनो गुणं स्वाभाविक

## सन्तोऽसत्सु न रमन्ते ॥ १११ ॥

---

परस्पर संहतस्वभावाः पदार्थाः जल-तैल-चीरादयः तेषां कैव कथा अविभागे। खतः शुष्ककर्कशानामीदृशी अवस्था च। स्निग्धास्तु सम्मेलन स्वभावाः। 'वालुका सिकतासु स्यात् वालुकन्त्वेलवालुके' इति मेदिनी। बल प्राणने, ततो बाहुलकादुन्। स्वार्थे कन्। अथवा 'एला वालुकमैलेयः' इत्यनेन वालुका गन्धद्रव्यं विज्ञेयम्। किंवा वालुकापदेन गन्धयुक्तिरीत्या पुष्पसारादेर्मेलनं बोध्यम्। 'गुणः, त्यागे शौर्यादि सन्ध्यादि सत्त्वाद्यावृत्तिरज्जुसु' इति कोषः। गुण आमन्त्रणे, गुण्यते। तत्र च घञ् प्रत्ययेन सिद्धम् ॥ ११० ॥

सतां सद्भिरेव सङ्गः श्रेयान् नासद्भिस्तदाह सन्त इति। असत्सु नीचपामरशठेषु तादृशविषयेषु वा। सन्तो विद्वांसः साधवो न रमन्ते नापि सम्मिलिता भवन्ति। तदात्वे सत्त्वात् प्रच्युतिः स्यात्। तथाचोक्तं वृद्धवाक्ये—

'सद्भिरासीत सततं सद्भिः कुर्व्वीत सङ्गमम्।
नासद्भिः किञ्चिदाचरेत्' इत्युक्तं प्राक्। सङ्गमं सम्मेलनमित्यर्थः। 'न सतां मूर्खेषु रतिः' इत्थं पाठद्वैधे नार्थवैषम्यम्। 'सभ्य-सज्जन-साधव' इति। कविनापि 'सतां सद्भिः सङ्गः कथमपि हि पुण्येन भवति' इत्युक्तम्। रमन्ते क्रीड़न्ति ऐक्येन कार्य्याणि साधयन्ति इति। पूर्व्वमुक्तमन्यत् ॥ १११ ॥

**न हंसाः प्रेतवने रमन्ते ॥ ११२॥**

**अर्थार्थं प्रवर्त्तते लोकः ॥ ११३ ॥**

इति नीतिदर्शनात्मके चाणक्यसूत्रे पञ्चमोऽध्यायः ॥ ५ ॥

---

अ[illegible]ग्यस्थाने [illegible]लन-गमनादेर्निषेधमाह नेति। हंसाः [illegible]सा: जालपा[illegible] इ[illegible]। प्रेतवने मृतवने जीर्णारण्ये चेति। न रमन्ते नापि क्रीड़न्ति विचरन्ति च। तद्वद्विद्वांसः साधवः। असत्सु हीनेषु न सज्जन्ते। यस्य तु यदनुद्वेगकरम् अनुकूल-स्थानं स तत्रैव मिलति संसक्तश्च भवति, नान्यत्र। अदः सूत्रं पूर्व्वसूत्रस्य भावप्रसारणव्यञ्जकम्। 'प्रेतो भूतान्तरे पुंसि मृते स्याद्वाच्यलिङ्गकः' इति मेदिनी। तद्विषये सूरिभिरुक्तं 'काकः पद्मवने धृतिं न लभते हंसश्च कूपोदके' इति। 'हंसः स्या-न्मानसौकसि' इति विश्वः। हन हिंसा गत्योः, हन्ति गच्छति। 'वृ' तु वदि हनि' इत्यादिना सः। यद्वा अचिप्रत्यये 'भवेद्वर्णाग-माद्धंसः' इत्यनेन सक् ॥ ११२ ॥

धनादिप्रयोजनसाधनार्थं लोक-प्रवृत्तिस्तदाह अर्थेति। अर्थार्थं धनार्थं लोको जनः। प्रयोजनसम्पादनाय च। प्रवर्त्तते, लोक प्रवृत्तिर्व्यापारः जगति अर्थार्थं दृश्यते। तेन जागतिक-कार्य्य-निर्वाहः। द्विविधं हि लोकप्रवर्त्तनं कार्य्यं भवति। स्वार्थेन करुणया वा। अज्ञानात्तु वृथैव प्रवृत्तिः। यत्र तु स्वार्थकरुणे नस्तो न तत्र प्रवृत्तिः। यथा मरुस्थल दर्शने। भारते च—

'अर्थस्य पुरुषो दासो दासस्त्वर्थो न कस्यचित्' । इति ।
वृहच्चाणक्ये च—

'अर्थैर्विहीनस्य पदच्युतस्य
भवन्ति काले स्वजना हि शत्रवः' ।

'अर्थोऽभिधेयशब्दानां धनकारणवस्तुषु' । इति
पदनिरुक्त्यादि पूर्व्वमुक्तम् ॥ १२२ ॥

इति दर्शनभूतचाणक्यसूत्रव्याख्यायां श्रीईश्वरचन्द्रशास्त्रिशर्म्म-
कृतायां सारार्थबोधिन्यां पञ्चमोऽध्यायः ॥५॥

---

## षष्ठोऽध्यायः ।

आशया बध्यते लोकः ॥ १ ॥

पञ्चमाध्याये नानाविषयानुक्त्वा सम्प्रति विषयान्तरमाह आशयेति । लोको जनः । आशया ममेदं भविष्यतीति वासनया, नियतं जगति आशा-पाशैर्बध्यते । प्रतिक्षणं विवर्द्धते चाशालता । तदुक्तं—

## न चाशापरैः श्रीः सह तिष्ठति ॥२॥

---

'आशापाशेन बध्यन्ते मानवाः सततं भुवि ।
निराशाः सुखिनो लोका यथा मुक्तास्तथाऽपरे' ॥

सा तु यदि सद्विषये भवेत्तदा तत्परो लोको मानवोत्तमः स्यात् । 'आशा ककुभि तृष्णायाम्' इति हैमः । अशु व्याप्तौ, आसमन्तादश्नुते । ततः पचादित्वादच् । 'इतः परमधीतः परं कुशलो भविष्यतीत्याशया लोको जीवति' इति पाठद्वैविध्यमस्ति । तदा अस्मात् कालात्परमधीतः ज्ञातशास्त्रः सन् मानवः कुशली-भविष्यतादृश्याशया स जीवति । प्राणान् धारयतीत्यर्थः स्यात् । 'लोकस्तु भुवने जने' इत्यमरः । प्राङ्निरुक्तमन्यत् ॥ १ ॥

आशापाशबद्धपुरुषस्य तद्वेगेन धावतः श्रीपरिहारहेतुमाह न चेति । आशा तृष्णा विषयस्पृहा । तत्परास्तदनुसर्त्तारः मानवाः । तैः सह श्रीः ऐश्वर्य्यं सम्पद् न तिष्ठति, नापि वर्त्तते । ये च लोके आशा पाशबद्धहृदया इतस्ततो नितरां भ्रमन्ति क्वापि परितोषं न लभन्ते, तैः सार्द्धं श्रीर्नैव तिष्ठति ।

'श्रीर्लक्ष्मीः कमला शोभा ऐश्वर्य्यं सम्पदित्यपि' ।

अन्यच्च—

'आशया जीव्यते जन्तुराशया बध्यते पुनः' ।

अपरञ्चोक्तं सूरिभिः—

'दुराशां परिहृत्यैव सदाशां वर्द्धयेत् सदा' ।

नात्याशा परे धैर्य्यम् ॥ ३ ॥

दैन्यान्मरणमुत्तमम् ॥ ४ ॥

---

आशा शब्दस्य कोषनिरुक्त्यादिकं प्रागुक्तम ॥ २ ॥

अविरताशापरस्य विक्षिप्तमानसस्य धैर्य्याभावमाह नेति। आशा तृष्णाभिलाषश्च। परा: श्रेष्ठा यस्य स: तस्मिन् तत्परे पुरुषे, धैर्य्यं स्थितिर्विवेको वेति। नास्ति न विद्यते। नियतमाशया मृग्यमानस्य पुंस: कुत: स्थैर्य्यं सम्भवति? रसनाबद्धनीयमानपशुवत्। केवलमुत्तरोत्तरमाशया धावमानस्य मनसो विक्षेपात् क्वापि धैर्य्यं न लभते। प्रागेवास्तां शान्ति:। तदुक्तं गीतायां—

'आशापाशशतैर्बद्धा कामक्रोधपरायणा:'। इति।

'आशा तृष्णापि चायता' इत्यमर:। अश्नुते विक्षिपति जनमिति। तत: पचाद्यच् ॥ ३ ॥

नै: स्वस्य निधनतुल्य क्लेश-जनकत्वमाह दैन्यादिति। दैन्याद्दारिद्र्यान्निर्द्धनत्वादिति। दैन्यन्तु प्रत्यहं क्लेशदायकम्। मरणक्लेशस्तु एकक्षणे भवति। मरणं निधनं प्राण परिहार:। तदुत्तमं श्रेष्ठम् यत: तत् सद्यो दु:खाकरम्। तदुक्तं मृच्छकटिके—

'दारिद्र्यान्मरणाद्वापि मरणं मम रोचते न दारिद्र्यम्।
अल्पक्लेशे न मरणं दारिद्र्यमतिदु:सहम्' ॥

**आशापरो निर्लज्जो भवति ॥ ५ ॥**

**न मात्रा सह वासः कर्त्तव्यः ॥६॥**

---

राजनीतौ च—

'चण्डालश्च दरिद्रश्च द्वावेतौ तुलया धृतौ ।
एकः स्वजातिभिः पृष्टोऽपरस्त्यज्यते च तैः' ॥ इति ।

'निःस्वस्तु दुर्विधो दीनो दरिद्रो दुर्गतोऽस्त्रियाम्' इत्यमरः । दीनस्य भावो दैन्यम् । दीङ् चये, दीयते । 'गत्यर्था' इत्यादिना क्तप्रत्ययः ! 'स्वादय ओदितः' । ओदितश्चेति नत्वम् । प्रागुक्तमन्यत् ॥ ४ ॥

आशातत्परस्य निस्त्रपत्वमाह आशेति आशाद्रव्याभिकाङ्क्षा विषयो-लोलुपत्वमिति । तत्परो नियताशाजालबद्धो मानवः । निर्लज्जो निस्त्रपो भवति । आशापाशबद्धो नरस्तया परिचालितो यत्र तत्र लोभात् प्रार्थी सन् लज्जां परिहृत्याऽसाध्वाचरणं करोति । तेन शिष्टत्वं नश्यति । लोभः पविर्द्धते च । अतोऽमिताशामत्याशाञ्च परित्यजेत् । निर्नास्ति लज्जा यस्य स निर्लज्जः । ओलसू जी व्रीड़े, लज्जते । अ-प्रत्ययात् 'झलां जश् झशि' इत्यनेन सिद्धम् । अन्यत् पूर्व्वमुक्तम् ॥ ५ ॥

जनन्या सह निवासविशेष-निषेधमाह नेति । मात्रा जनन्या प्रसूत्या सह एकशय्याशयनासनेषु, वास-उपवेशन-शयनादयो न विधेयाः । नैवायं निषेधः शिशूनां तनयानां पक्षे ।

## नात्मा क्वापि स्तोतव्यः ॥ ७ ॥

---

अपि तु तरुणानाम्। मात्रा युवत्या प्रौढ़या वा न त्वतिवृद्धया सहेति। तदुक्तं मानवे—

'मात्रा स्वस्रा दुहित्रा वा नाविविक्तासनो वसेत्।
बलवानिन्द्रियग्रामो विद्वांसमपि कर्षति' ॥

भोगलौल्यात् स्वभावतो हि मानवानां विषय-विषयानीन्द्रियाणि कदा कस्मिंश्चिद्विषये कस्येन्द्रियस्य विकृतिर्भवेत्तद्वक्तुं नैव ते शक्नुवन्ति। ततो युवती जननी गुरुपत्नी कुमारी पररमण्यादिभिः सार्कं एक-शय्या सम्वेशनोपवेशन पान भोजनादीनि न कुर्य्यादिति। अत्र मातृपदं वासपदञ्चोपलक्षणम्। तेन विमात्रगम्यादिभिः सार्द्धं शयनादीनि न विदध्यात्। वयस्य-भावपूर्ण-व्यवहारे गौरवहानिश्च भवति। प्रागुक्तमन्यत्॥ ६ ॥

स्वप्रसंशा करणनिषेधमाह नेति। क्वापि कुत्रचित् काले विषये च। स्वस्यात्मनः श्रेष्ठत्व न कीर्त्तनीयम्। यद्वा स्वयं, स्वेनात्मना न स्तोतव्यः। न गुणादिकथनैः श्लाघनीयः। परमन्यद्वारा स्वप्रशंसा कार्य्या। उक्तञ्च कविभिः—

'स्वगुणं हि स्वयं चोक्ता न शुभाय कदाचन।
कामिनी करपद्माभ्यां स्वकुचत् सम्बाहनं यथा'

आत्मश्लाघया स्वस्य दाम्भिक्यमभिमानित्वञ्च प्रख्याप्यते तेन लोका:

न दिवा स्वप्नं कुर्य्यात् ॥ ८ ॥

न चासन्नमपि पश्यत्यैश्वर्य्यतिमिरचक्षुर्न शृणोतीष्टम् ॥ ९ ॥

---

अप्रीताः स्युः। परप्रशंसाकरणमात्मनश्च यशोऽन्येन प्रसार्य्यम्। नहि प्रसूनं स्वसौरभं दिक्षु विकिरति अपि च वायुना। तद्वत् प्रायेन गुणप्रकाशने ते च गुणा परिवर्द्धन्ते। लोकाश्च प्रीताः भवन्ति। पदनिरुक्त्यादि प्रागुक्तम् ॥ ७ ॥

दिवसे निद्रा निषेधमाह नेति। दिवा दिवसे दिवा इत्यव्ययम्। शयनं न विदध्यात्। तेन कार्य्यहानिः। आलस्यं वायोश्च वृद्धिः। अग्निमान्द्यं शिरोरोगश्चेति। शिशोर्न तद्दूषणम्। रोगिणोऽवस्थाविशेषे दिवा भोजनात्प्राक् स्वप्नः प्रशस्तः। यश्च यामिन्यामनिद्रः स दिवसे शयानो भवेत्। 'मा दिवा स्वाप्सि' इति श्रुतिः। 'आयुःक्षयो दिवानिद्रा' इति स्मृतिश्च। भारते च—

'दिवाशया न मे पुत्रा न रात्रौ दधिभोजिनः'।

इत्येतत्सर्व्वं सामान्यरीत्या निषेधः। विशेषतश्चाहानि उत्तप्त-सौरालोक स्पृष्टवायुना निद्रितस्य मस्तिष्के उष्माधिक्यं श्लेष्माधिक्यं वा भवति। बुद्धेश्च मन्दता स्फुर्त्तिराहित्यञ्चेति। वैद्यके वर्णितमस्त्यन्यत्। पदनिरुक्त्यादि प्रागुक्तञ्चेति ॥ ८ ॥

कुतश्चित्कारणाद्दृष्टिशक्तिमालिन्ये आसन्नवस्त्ववलोकनाभावमाह न चेति। ऐश्वर्य्यमितिरचक्षुः। ऐश्वर्य्यं विपुलं धनम्।

स्त्रीणां भर्त्तुः परं दैवतम् ॥ १० ॥

---

तन्मत्ततया चक्षुषोः तिमिरं दृष्टिराहित्यादन्धकारो यस्य सः । तादृश नयनः पुमान् । आसन्नं समीपवर्त्तिवस्त्वपि न पश्यति । मत्तो रमण्यामत्यासक्तोऽपि तद्वत् । इन्द्रियघात इव धनवैला-स्यान्मानसाधैर्य्याच्च दृष्टि-वैषम्यं जायते । समुपस्थितविपत्तौ तु इन्द्रियवैकल्यं बुद्धिमालिन्यञ्च भवति । तथाच—

'प्रायः समापन्न-विपत्तिकाले
धियोऽपि पुंसां मलिना भवन्ति' । इत्युक्तं प्राक् ।

इन्द्रिय-विषयाति-सेवनाच्छोणित-ह्रासाच्च चक्षुषि तैमरिक-रोगो भवति । तद्वद् धनप्राचुर्य्यादविवेकाच्च चक्षुषा महान्तं क्षुद्रमिव पश्यति, अन्यायं न्याय्यमिव, अधर्म्मं धर्म्ममिव पश्यतीति-सारः । 'तिमिरं ध्वान्ते नेत्रामयान्तरे' इति व्याड़िः । तिम आर्द्रीभावे, तिम्यति । बाहुलकात् किरच् । न शृणोति नाकर्णयति । प्राङ्निगदितमन्यत् ॥ ८ ॥

योषितां परदैवतमाह स्त्रीणामिति । स्त्रीणां नारीणाम् अवलानामिति । परं श्रेष्ठम् । दैवतं देवता, आराध्यः, सेव्य उपास्यश्च । यत आर्य्यनारीणां पतितः अन्यः प्रधानं सेव्यः पूज्यः, सङ्गमनीयश्च नास्ति । तदुक्तमृषिणा 'पतिरेको गुरुः स्त्रीणाम्' इति । पतिमवज्ञायान्य-शुश्रूषणं नोचितम् । कृते अन्यसेवने तदत्यासक्तिः सम्भाव्यते आनिष्टापात-शङ्का चेति ।

## तदनुवर्त्तनमुभय-सौख्यम् ॥ ११ ॥

---

गुरु-स्वजन-सुश्रूषणे नाप्यौचित्यहानम्। भर्त्ताऽत्र पतिरेव। नान्नादिना पालन-पोषण-कर्त्ता। 'स्त्री योषिदबला नारी महिला' इति। ये तु केचन वदन्ति 'न स्त्री स्वातन्त्र्य-मर्हती'ति वृथोक्तिः। तत्र, स्नेह-प्रीति-लावण्य-स्वभाववत्त्वात् स्त्रीणां स्वातन्त्र्ये पुरुषवत् तत्सर्वं नश्यत्येव। अन्यच्च यत् तासामेकमेववस्तु सतीत्वसत्यं तदप्याशङ्कानुस्यूतं निगाश्रयञ्च स्यात्। तन्नाशे न पुनर्लाभो भवत्येव, प्रागुक्तमन्यत् ॥ १० ॥

पत्यनुसरणं नारीणां सौख्यमित्यत आह तदिति। तस्य पत्युः स्वामिनः। अनुवर्त्तनं व्यावहारिक-धर्म्म-कार्य्ये चानुगमनम्। उभयोरैक्येन कार्य्यसन्निधानं वा तयोर्यावज्जीवनं सुख-प्रदं हितकरञ्च! तयोर्विरोधे गार्हस्थ्यधर्म्महानिः निरन्तरं क्लेशश्च। अन्यदस्ति वृहच्चाणक्ये। 'अपत्यं स्त्रीणामुभयत्र सौख्यं वहति' इति सूत्रपाठभेदे पति-पत्न्योर्द्वयोरपत्यं सौख्यप्रद-मित्यर्थः। यद्वा उभयत्र अस्मिन् लोके परत्र च। 'अपत्यं पुत्रक-न्ययोः' इतिकोषः। गृह्ये दैवे सामाजिके च कर्म्मणि सर्व्वथा भर्त्तार-मनुसृत्यानुज्ञामुपलभ्यचानुवर्त्तेत नारीतिसारः। अन्यथा स्त्रीधर्म्मः व्याकुलितः स्यात्। यत्र देशे एतादृशी रीतिर्नास्ति तत्र दोषनिवहो हि दुर्निवार्य्य इति। धर्म्मशास्त्रे अन्यत् पुष्कल-मस्ति ॥ ११ ॥

अतिथिमभ्यागतं पूजयेद् यथाविधि ॥१२॥

नित्यं संविभागो स्यात् ॥१३॥

---

अतिथ्यभ्यागतयोः सत्कारं गृहस्थस्य कल्याणजनकमाह अतिथिमिति । अतिथिमकस्मात् समयमनिश्चित्यागतं जनम् । अभ्यागतं ज्ञातपूर्व्वं गृहागतम् । एतयोरनिश्चितनिश्चितसमयोपस्थितयोरागमने भेदः । अनिश्चिता तिथिः कालो यस्य सोऽतिथिः । 'अतिथिः कुशपत्रे स्यात् पुमानागन्तुकेऽपि च' इति विश्वः । यथाविधि यथाशक्ति गृहस्थितद्रव्यादिभिः पूजयेत् सत्कारं कुर्य्यात् । यद्यपि सत्कारयोग्यं किमपि नास्ति तदासन-वारि-दानमधुरवचोभिः प्रीणयेत् । आर्य्येषु गृहस्थस्यातिथिसेवा सुकरो धर्म्मः भारतवर्षे प्रसिद्धः । अन्यत्र कुत्रचिद् देशे एतस्याभावः । निराश्रयस्यागन्तुकस्य निरुपायस्य चाश्रय-पान-भोजनदाने प्रीतिरुपकारो धर्म्मश्च प्रत्यक्षत एव उपलभ्यते । अन्यद्धर्म्मशास्त्रे प्रपञ्चितमस्ति । अतिथिः । अत सातत्य गमने, अतति । 'ऋतन्यञ्जि' इत्यौणादिकसूत्रात् इथिन् ॥ १२ ॥

स्वधनस्य स्वपरहिताय सततं दानपूर्व्वकं भोगव्यवहारादिकमाह नित्यमिति । नित्यं प्रत्यहं सर्व्वस्मिन्काले वा । सम्विभागो सम्यग् विभागोऽस्यास्तीतीन् । विभागो नाम 'विशेषेण भजनं स्वत्वज्ञापनं वा विभागः । सामान्यधर्म्मावच्छिन्नानामेव बहूनां परस्परविरुद्धतद्व्याप्यधर्म्मप्रकारेण प्रतिपादनं हि विभाग'

**नास्ति हव्यस्य व्याघातः ॥१४॥**

**मृगतृष्णा जलवद्भाति ॥१५॥**

---

इति श्राद्धविवेकव्याख्यायाम् । स्वधनस्य प्रत्यहम् अतिथि-देव-पितृ-दीनादिभ्योऽर्पणं कर्त्तव्यम् । नात्यात्मप्रीतये सर्व्वं रक्षणीयम् । तेनेन्द्रिय-काय-सेवायाः प्राबल्यं स्यात् । तथा च स्मृतिः—

'स केवलमघं भुङ्क्ते यो पचत्यात्मकारणात्' ।

अन्यच्च 'यो भुङ्क्ते तेन एव सः' । आत्मभोगस्तु जीवमात्रेऽस्ति न तस्य प्राशस्त्यम् । परपिण्डप्रदानपूर्व्वकं भोग एव जगति श्रेयान् तेनापरस्यापि रक्षणं भवेत् ॥ १३ ॥

स्वतः पूतहविर्द्रव्यस्य महार्घत्वाद् व्याघाताभावमाह नेनि । हव्यस्य देवभक्ष्यस्य तदन्नस्य वा । व्याघातः व्याहतिर्विनाशो नास्ति । श्रद्धापुरःसरं देवाद्युद्देशेनानीतद्रव्यस्यापन्नास्तीति । अन्यद् यत् स्वतः पूतं वस्तु तस्यैव तादृशी दशा यथा सत्यस्य । हूयते प्रक्षिप्यते यद्वा हूयन्ते प्रीण्यन्ते देवा येन तद्धव्यम् । हुदानादानयोः, इत्यतोऽचो यत् स्यात् । 'हव्यकव्ये दैवपैत्रे अन्ने' । देवानामन्नं हव्यम् । पितृणामन्नं कव्यम् ॥ १४ ॥

मरीचिकायां वारिवद्दर्शनप्रकाशावाह मृगेति । मृगतृष्णा-मरीचिका । सा तु मरुस्थल्यां सिकतोपरि प्रसृतप्रखर-सौरालोक-पातात्तोय-तरङ्गवदाभाति । मृगास्तु वारिभ्रमेण पिपासवः सन्तः तत्र गत्वा उत्तापाधिक्यात् सलिलाभावाच्चासून् परिजह्रुः ।

शत्रुर्मित्रवत् प्रतिभाति ॥ १६ ॥

उपालम्भो नाल्पप्रणयेषु ॥ १७ ॥

---

सा च मृगतृष्णेति कथ्यते। वेदान्तनये मृषाज्ञानस्य श्रेष्ठोदाहरणम्। सेयं जलवत् सलिलमिव भाति चकास्ते। न तु यथार्थ-जलमेतत्। एवं लौकिके विषये प्रवञ्चकानां कार्य्याणां झटिति प्रकृतमिदमित्याभाति। मतिमान् विवेकपूर्व्वकं तद् गृह्णाति। अज्ञास्तु प्रतारिता भवन्त्यविवेकात्। 'जलार्थिनां जलवत् मृगतृष्णा प्रतिभाति'। इत्थं पाठभेदे अर्थः सुबोधः। मृगाणां तृष्णा अस्ति अस्यामिति अर्श आद्यच् ॥ १५ ॥

शाठ्यकापट्य-परस्य शत्रोर्मित्रवदाचरणमाह शत्रुरिति। शत्रुर्द्विड्रिति। मित्रवत् सुहृदिव छलाल्लोभाच्च प्रतिभाति। परिशोभते। सचात्मभावं पिधाय मधुरवचसा सौजन्येन च तद्वदाचरति। लोभाच्च क्वचिच्छत्रु विश्वसिति। तदुक्तं विष्णुना—

'लोभेन बुद्धिश्चलति लोभो जनयते तृषाम्।

तृषार्त्तो दुःखमवाप्नोति' इति।

'शत्रुरपि प्रमादो लोभात्' इत्येवं पाठान्तरत्वे लोभादधिकाशातः शत्रुः प्रमादयुक्तः स्यात्। तेन कार्य्यसाधनं सुकरम्। चातुर्य्याद्वा शत्रुः सखिरिवाभाति। 'अथ मित्रं सखा सुहृत्' इत्यमरः। पूर्व्वमुक्तमन्यत् ॥ १६ ॥

प्रीतिशून्यजनेषु कुत्साभावमाह उपेति। अप्रणयेषु प्रश्रय-

दुर्मेधसां महच्छास्त्रं बुद्धिं मोहयति ॥ १८ ॥

---

रहितेषु.जनेषु प्रीतिहीनेषु दुर्हृत्सु च। उपालम्भो निन्दा नास्ति। यद्वा निन्दापूर्वक विशेषोपालम्भः स नास्ति, प्रीतिरहितमानसत्वात्। 'यः सनिन्दः उपालम्भ' इत्यमरः। स चोपालम्भोद्विधा गुणाविस्करणपुरःसरो दोषविगानपूर्व्वकश्च। तत्राद्यो यथा प्रशस्तकुलजातस्य तव किमुचितमिदम्। द्वितीये तु अनार्य्यपुत्रस्य तव समुचितमिदमेवेति। उपाङ्पूर्व्वाल्लभेर्घञा-सिद्धम्। ततश्चो'पर्सात् खल् घञोः' इति नुम्। णीञ प्रापने, प्रणयनम्। नयतेः एरच् ॥ १७ ॥

मन्दमतेः कठिनशास्त्रपाठे बुद्धेर्व्यामोहमाह दुरिति। दुर्मेधसाम्, दुष्टं मन्दं मेधो धारणशक्तिर्येषामिति बहुव्रीहिः। तेषां लोकानाम्। महद्विशालं शास्त्रम्। यद्वा नवीनन्याय-गणित-शास्त्रवत् कठिनं दुरूहशास्त्रम्। बुद्धिं धीशक्तिम्। मोहयति बुद्धिभ्रंशं जनयति। तदुक्तं नीतिविदा—

'अलसो मन्दबुद्धिश्च सुखी वा व्याधि-पीड़ितः।

निद्रालुः कामुकश्चैव षड़ेते शास्त्रवर्ज्जिताः' ॥ इति प्रागुक्तम्। बुद्धेर्मालिन्यात् कठिनशास्त्रे न प्रविशति। प्रखरमतिस्तु बहून्येव शास्त्राणि झटिति अधिगच्छन्ति बुद्धेर्नैर्मल्यात्। 'धीर्धारणावती मेधा' इत्यमरः। अत्र मेधस् मेधेत्यभिन्नार्थः। यत्र नाना-विषयाध्ययने, बुद्धेः प्राखर्य्यंभवतीति तन्मेधावतामेव न तु दुर्मधानाम् ॥ १८ ॥

**यत्र सुखेन वर्त्तते तदेव स्थानम् ॥१९॥**

**सत्सङ्गः स्वर्गवासः ॥२०॥**

---

सुखजनकस्थानमाह यत्रेति । यत्र यस्मिन् स्थाने देशे च । सुखेन निर्विघ्नेन निरत्ययेन च लोको वर्त्तते । तदेव स्थानं वासोपयुक्तम् । यत्र निरत्ययस्थाने 'धनिनः श्रोत्रियो राजा नदी वैद्यादयश्च सन्ति' तद् वसति योग्य-स्थानम् । तदुक्तं सूरिभिः—

'दैवज्ञः श्रोत्रियो राजा नदी वैद्यो वणिक् तथा' । इति । अपरश्चोक्तं विष्णुना—

'लोकयात्राऽभयं लज्जा दाक्षिण्यं धर्म्मशीलता ।
तत्र देशे न वस्तव्यं यत्र नास्ति चतुष्टयम्' ॥

यत्र ऋणदाता चिकित्सको नदी नृपो विद्वान् वाणिज्यं कृषिः पशुपालनं सुविचारकश्चैवमनुर्वर-समतल वारि-प्राकार-निह्नुत-शस्यसम्पत्-शिल्प-पुष्कलं तत्र सम्वसेदिति भावः ॥१९॥

सत्सङ्गस्य स्वर्निवाससदृशत्वमाह सदिति । सतां महतां धीराणां साधूनां सङ्गः सह मेलनम्, सहासन-गमनादिकम् । जनानां स्वर्गवासः । स्वर्गवासिनां यादृशनिर्विशेषममितसुखं तादृशं निर्विशेषसुखं सत्सङ्गाज्जायते । स्वर्गनिवासे रोग-भय-त्रासादीनां यथाऽभावस्तथा साधुसङ्गेऽपि । दुःखमय-संसारे

आर्य्यः स्वमिव परं मन्यते ॥ २१॥

---

अयमेकः सारः। कविसमयश्च 'सतां सद्भिः सङ्गः कथमपि हि पुण्येन भवति'। तद्वैवान्यश्च 'सतां सङ्गे शङ्का यदि भवति सा दैवघटिका'। 'मेलके सङ्गसङ्गमौ' इत्यमरः। षञ्ज सङ्गे, सञ्जनम्। ततो घञ्। सह मेलनाद् वस्तु श्रेष्ठं भ्रष्टञ्च भवति। तद्वत्साध्वसाधुसम्मेलनान्मानवस्य श्रेष्ठत्वनिष्टत्वे भवतः। यथा टङ्कणधातुद्रावकाग्नियोगात् सुवर्णं निर्म्मलं भवति। तदेव ताम्राग्निधमनान्मलिनं स्यात् ॥ २० ॥

आर्य्यस्यौदार्य्यं स्वपरसुखदुःखयोस्तौल्यमाह आर्य्य इति। आर्य्यः आचार्य्यः कर्त्तव्याकर्त्तव्यज्ञानसम्पन्नः कविः महाकुलजात इति यावत्। तादृशो मानवः स्वस्यात्मनः सुखदुःखे इवान्यस्य ते जानाति अनुभवति। तदुक्तं नीतिपारगैः—

'उदारचरितानान्तु वसुधैव कुटुम्बकम्'।

अपरश्च—

'आत्मौपम्येन सर्वत्र दयां कुर्व्वन्ति साधवः'।

अन्यच्च लघुचाणक्ये—

'आत्मवत् सर्व्वभूतेषु यः पश्यति स पण्डितः'।

एतत्प्रसङ्गात् पुनरत्रोक्तम्। पण्डितोऽत्राशेषज्ञानसम्पन्न उदारमतिः। आत्मौपम्येन आत्मतुलनया। 'महाकुल-कुलीनार्य्याः' इत्यमरः। महाकुलभवाः सुधीराः आत्मानमिवान्यत् पश्यन्तीति। नापि स्वपर-विवेकं विदधति। आर्य्यलक्षणञ्च—

प्रायेण रूपानुवर्त्तिनो गुणाः ॥ २२ ॥

विश्वासघातिनो निष्कृतिर्न विद्यते ॥२३॥

---

'कर्त्तव्यमाचरन् कर्म्म अकर्त्तव्यमनाचरन्'।

इत्यादि पूर्वमुक्तम्।

प्राङ्निगदितमन्यत् ॥ २१ ॥

गुणानां क्षान्तिवैदुष्यादीनां रूपानुवर्त्तित्वमाह प्रायेणेति। गुणाः शौर्य्य-भीमकान्तादयः। सभ्यादयः कलाविस्त्वश्चेति। लोकानां रूपानुवर्त्तिनो गुणा यथा रूपाणि तथैव भवन्ति। प्राय-पदोपादानादत्र सर्व्वत्र रूपसदृशा गुणा न भवन्ति, कुत्र-चिद तादृशाः स्युरिति। क्वचित् सूत्रे प्रायपदाभावः। कवि-समयश्च 'यत्राकृतिस्तत्र गुणा वसन्ति'। यस्मिन् सौन्दर्य्य-वैपुल्यं तस्मिन् केचन गुणाः सन्त्येव। पूर्वमुक्तं पदनिरुक्त्यादि ॥ २२ ॥

विश्वासहन्तुर्निस्ताराभावमाह विश्वा इति। ये विश्वासं विस्रब्धं घ्नन्तीति ते विश्वासघातिनः। विस्रम्भविनाशकत्तुरिह-लोके परलोके च निष्कृतिर्दुष्कृतिमोचनं नास्ति। तदुक्तं पुरातत्त्वविद्भिः—

'मित्रद्रोही कृतघ्नश्च ये च विश्वासघातकाः।

ते नरा नरकं यान्तीति'।

अन्यच्च—

'निन्दका हि महाभारा भारा विश्वासघातकाः' ॥

## दैवायत्तं न शोचयेत् ॥ २४

विष्णुना च—

'निष्कृतिर्विहिता सद्भिः कृतघ्ने नास्ति निष्कृति'रिति ।

कृतमुपकारं हन्तीति कृतघ्नः । विश्वासो दृढ़-निश्चयप्रत्ययः तं हन्तीति विश्वासघाती । 'विस्रम्भः केलिकलहे विश्वासे प्रणयेऽपि च' इति विश्वः । श्वस प्राणने, विश्वसनम् । विपुर्व्वात् श्वस् धातोर्घञा सिद्धम् । जागतिकं सर्व्वं कार्य्यं विश्वासमूलकं, ये तद् घ्नन्ति तेऽन्यद् दुष्कृताचरणं कर्त्तुं समर्था भवन्तीति । अपरं पूर्व्वमुक्तम् । विश्वासघाती । अत्र हन्तेः 'कर्म्मणि हनः' इत्यनेन णिनिः ॥ २३ ॥

दैवसम्पादितकार्य्ये अनिष्टजनित-शोचनं वृथेति तदाह दैवायत्तमिति । दैवाधीनं दैवकृतं कार्य्यम् । भूकम्पाद्भुत-पयःप्लावन-झञ्झासमीरण-महामारी दुर्भिक्षादि-लोकोत्तरविचित्रं यद् यत् कार्य्यं तत्तद् विद्वान् न शोचयेत् । तदर्थं परिचिन्तनं न विदध्यात्, परं सति सामर्थ्ये कौशलेन शान्त्यादिना वा, प्रतिविधानम् विधेयम् ।—

'पूर्व्वजन्मकृतं कर्म्म तद्दैवमिति कथ्यते' ।

इति पौराणिकाः । 'दैवं प्राक्तनसंस्कारः' । 'नच दैवात् परं बलम्' इति धर्म्मशास्त्रकृतः । यत्र पुरुषकारे व्यर्थशक्तिस्तत्र दैवं शरणम् । तच्चाचिन्त्यं स्वाभाविकमिति । तथा चान्यदुक्तं नीतिविदा 'दैवेन देयमिति कापुरुषा वदन्ति' । एतत् पुरुषकार-

**आश्रित-दुःखमात्मन इव मन्यते साधुः ॥२५॥**

**इङ्गितमाच्छाद्यान्यद्वदत्यनार्य्यः ॥ २६ ॥**

---

प्राधान्यसूचनाय। यत्तु नियत्यधा जातन्तदनुशोचनेन न किमपि फलं स्यादिति। 'दैवं दिष्टं भागधेयं नियतिर्विधिः' इत्यमरः। दैवादागतमिति'तत आगतः' इत्यनेनाण् ॥ २४ ॥

अनुगतजन दुःखं समबुद्धित्वात् स्वीयदुःखमिव महाजनो मन्यते तदाह आश्रितेति। साधुर्महाजनो महोदारचरितो विद्वानिति। आश्रितस्यानुगतस्य शरणं प्राप्तस्य। दुःखं क्लेशं यद्भवेत्तदात्मनः स्वस्यैव मन्यते जानाति। न तु परस्यैव यतः साधोर्महापुरुषस्य स्वपरदुःखभेदज्ञानाभावः। तच्चोक्तम्—

'आत्मौपम्येन सर्व्वत्र दयां कुर्व्वन्ति साधवः'।

आत्मौपम्येन—आत्मतुलनया इत्यर्थः।

एतदेव हि तस्य महत्त्वं साधुत्वञ्चेति। प्रागुक्तमन्यत्। साधुर्वार्द्धुषिके चारौ सज्जने चाभिधेयवत्' इति विश्वः। 'श्रिञ् सेवायाम्' आश्रयति। आङ्पूर्व्वात्ततः क्त-प्रत्ययः। अत सातत्यगमने, अतति। 'सातिभ्यां मनिन् मनिणौ' इति मनिन्। साध संसिद्धौ, साध्नोति। 'कृ वा पा' इति उण् ॥ २५ ॥

अनार्य्यव्यवहारमाह इङ्गितमिति। अनार्य्यो नीचो हीनः शवरादिः। इङ्गितं स्वस्य हृदये मानसे स्थितं विषयम् आच्छाद्य पिधाय। बुद्ध्या अन्यथा विचिन्त्यान्यत् प्रकाशते। ततोऽन्यद् विपरीतं वदति भाषते परवञ्चनाय स्वार्थसिद्धये च। तदुक्तम् विष्णुना—

## धीहीनः पिशाचादनन्यः ॥ २७ ॥

---

'मनस्यन्यद्वचस्यन्यत् कर्म्मण्यन्यद्दुरात्मनाम्' ।
इत्यादि ।

आर्य्याणान्तु महतां सदैकरूप्यम् । तथाहि कविसमयः—

'चित्ते वाचि क्रियायाञ्च महतामेकरूपता' इति ।

शठानान्त्वन्यादृशम् । तथाहि वृद्धचाणक्ये—

'दुर्ज्जनस्य मुखे प्रीतिः वाचि चन्दनशीतता ।
हृदये तस्य दुर्बुद्धिः कुलिशादपि कर्कशा' ॥

हृदिति । हृञ् हरणे, हरति ह्रियते वा । हरतेर्बाहुलकात् केवलोऽपि दुक् । अथवा 'हृञोः षुक् दुकौ च' इति । सुगममन्यत् ॥ २६ ॥

धीहीनस्य बुद्ध्यभावाल्लघुत्वे पिशाचतुल्यत्वमाह धीति । 'धीर्धारणावती मेधा शेमुषीति' । तया प्रज्ञया शक्त्या हीनः वीरहितो जनः । पिशाचाद् गुह्यकाद् भूतादिति । अनन्योऽभिन्नः । आचरणे सर्वत्र लघुत्वा-श्रयणे तादृश एव । सुधी-जनो धिया हिताहितं विविच्य हेयं विहायोपादेयं प्रगृह्य सर्वं सम्पादयति । यस्तु धी-शून्यः स तत्कर्त्तुं नार्हति । प्रत्युत स्वैराचारेण पैशाच्यं याति । अतः सर्वस्मिन् बुद्धिवैशद्यमत्यावश्यकम् । 'पिशाचो गुह्यकः सिद्धः' इत्यमरः । धीरिति, ध्यायति अनया, ध्यानं वा । 'ध्यायतेः सम्प्रसारणम्' इति वार्त्तिकात् क्विप् । ततो हल-

**असहायो न पथि गच्छेत् ॥ २८ ॥**

**न पुत्रः स्तोतव्यः ॥ २९ ॥**

---

श्वेत्यनेन दीर्घः । अश भोजने, पिशितम् अश्नाति । ततः कर्म्मण्यण् । पृषोदरादित्वाद्वर्णव्यत्ययः ॥ २७ ॥

एकाकिनः पुंसः पथि गमने विघ्नाशङ्कया निषेधमाह असहाय इति । असहायः सहकारि-शून्यः । अद्वितीयो जनः पथि मार्गे । न गच्छेद् नापि यायात् । दस्युतस्करहिंस्रजन्तु-रोगादेर्भयात् । ततः पथि सहकारिणा गन्तव्यम् । तदुक्तं पूर्वसूरिभिः—

'एकाकी नैव संयायात् त्रिभिर्नैव च नैव च ।
चतुर्भिः शोभना यात्रा न दुखं पञ्चभिः सह' ॥

अपरश्चोक्तम्—

'द्वाभ्यामध्ययनं कार्य्यं त्रिभिर्गानम् प्रशस्यते ।
बहुभिर्गमनं मार्गे न दुःखं सज्जनैः सह' ॥
'अन्तःसारविहीनस्य सहायो बलवान् भवेत्' ।

इत्याभानको दुर्बलार्थे । 'सहायश्चानुचरोऽभिसरः समाः' इत्यमरः । अय गतौ, इण गतौ च । सह अयते एति वा । ताभ्यां अच् प्रत्ययः ॥ २८ ॥

तनयस्य सुशिक्षादानं विना प्रशंसाकरणे निषेधमाह नेति । पुत्रः सुतस्तनय इति । न स्तोतव्यः । न स्तवनीयः प्रशंसनीयः । गुरुषु गौरवहानिश्च भवति । उक्तञ्च लघुचाणक्ये—

## स्वामी स्तोतव्यः सर्व्वानुजीविभिः॥ ३० ॥

'लालयेत् पञ्चवर्षाणि दशवर्षाणि ताड़येत् ।
प्राप्ते तु षोड़शे वर्षे पुत्रं मित्रवदाचरेत् ॥

शुक्र नीतौच—

"षोड़शाब्दात्परं मित्रं द्वादशाब्दात्परं स्त्रियम् ।
नताड़येद्दुष्ट वाक्यैः पीड़येन्न स्नुषादिकम्" ॥

अन्यच्च 'पुत्रे शिष्ये हितं वदेत्' । यत्तु—

'सर्वतो जयमन्विच्छेत् पुत्राच्छिष्यात्पराजयम्' इति ।

तत्तु विद्या शिल्प शौर्य्यगुणादिभिः पराभवमिच्छेदिति श्रेयम् नतु हितचिन्तन-सदुपदेशादौ । 'तनयः सूनुः सुतः पुत्रः' इत्यमरः । यथा शिक्षा काले पुत्रेषु तथा कन्यास्वपि स्नेहो-नोचितः, यतः शिक्षायां—

'लालने बहवो दोषास्ताड़ने बहवो गुणाः' ।

ताड़नम् विद्याशिक्षार्थं तिरस्कारादीति पूर्वं समुल्लिखितम् । प्राङ्-निगदितं पदनिरुक्तादि ॥ २८ ॥

प्रभोर्न्नृपस्यानुवृत्तिपराणां स्तुतिकरणं समुचितमाह स्वामीति । सर्वैः सकलैरनुजीविभिः सेवकैर्भृत्यैश्चेति । स्वामी प्रभुरधिपतिर्गुरुश्च । स्तोतव्यो वन्दनीयः प्रशंसनीयश्चेति । गौर-वादुपकृते-रक्षणाद्धरणाच्च सेव्यः स्वामी । 'न निन्दनीयः' इति सूत्रादौ क्वाप्यधिकपाठोऽस्ति । तेन न कोऽपि विशेषः प्रतीयते । 'सेवकार्थ्यानुजीविनः' इत्यमरः । प्रभुमाश्रित्यानुजीवितुं शीलमे-षामिति 'सुपि' इत्यादिना णिनिः । स्वामीति । स्वमस्यास्तीति

**धर्म्मकृत्येष्वपि स्वामिनमेव घोषयेत् ॥३१॥**

**राजाज्ञां नातिलङ्घयेत् ॥ ३२ ॥**

---

'स्वामिन्नैश्वर्य्यं' इत्यादिना साधुः । हीनजन सेवने तत्स्तवे च स्वस्यापि तद्भावशङ्का प्रबलेति ॥ ३० ॥

धर्म्मकार्य्येषु प्रभोः प्रशंसाकरणमुचितमाह धर्म्म इति । धर्म्मकृत्येषु यागदानव्रतोत्सवादिषु । अपि निश्चितार्थे । स्वामिनं प्रभुम् अधिपतिमिति । घोषयेत् कीर्त्तयेत् प्रशंसया तदाधिपत्यं लोकेषु प्रचारयेत् । स्वामिनामनुमतिं विना न कार्य्यं विदध्यात् । कानिचित् कर्म्माणि तदाज्ञां गृहीत्वैव कुर्य्यात् । यद्वा अन्यैः सम्पादितं कार्य्यं तत्फलं प्राधान्यात् स्वामिनि उपचरितं भवति, 'स्वामीत्वीश्वरः पतिरीशिता' इत्यमरः । 'सर्व्वकृत्येष्वपि' इत्थं सूत्रादौ पाठे सर्व्वेषु व्यावहारिक कृत्येषु तदनुमतिग्रहणं युक्तम् । एवं गुर्वनुज्ञा च । तेन कृत्येषु विघ्नाभावः स्यात्, सामाजिकानां प्रीतिश्च ॥ ३१ ॥

नृपादेशावज्ञाकरण-निषेधमाह राजाज्ञामिति । राज्ञां भूभुजां नृपाणाम् । आदेशमनुमतिं विधानञ्च । लोको नातिलङ्घयेत् । हेलया बलाद् द्वेषबुद्ध्या वा नावजानीयात् । तल्लङ्घने दण्डो गुर्व्ववमाननमात्मनाशश्च स्यात् । राजादेश-लङ्घने चोर तस्कर-लम्पटानां कार्य्यावसरश्च भवेदिति । नृपे वर्णनीयानि यथा कल्पलतायाम्—

"नृपे कीर्त्तिः प्रतापाज्ञा दुष्टशास्ति विवेकिता ।
धर्म्मप्रयाण-संग्राम-शस्त्राद्याः सनयक्रमाः ॥

**स्वाम्यनुग्रहो धर्म्मकृत्यं भृत्यानाम् ॥२३॥**

**यथाज्ञप्तं तथा कुर्य्यात् ॥ २४ ॥**

---

प्रजारागोऽरि शैलादिवासोऽरिपुरशून्यता ।
औदार्य्यधैर्य्यगाम्भीर्य्यशौर्य्यैश्वर्य्योद्यमादयः' ॥

इति पूर्वमुक्तम् । नृपादेशेन नगर-ग्राम-हट्ट-घट्ट-शिल्प-वाणिज्यादीनां सर्वस्मिन् सौकर्य्यं भवति । तदादेशाभावे मात्स्य-न्यायः प्रवर्त्तिष्यते । पदनिरुक्तिः प्रायुक्ता ॥ २२ ॥

अनुवृत्तिपराणां यः प्रभोरनुग्रहः स एव धर्म्मकार्य्यमित्याह स्वामीति । स्वामिनः प्रभोर्नृपस्य च । अनुग्रहः कृपा सदय-भावः । भृत्यानां कर्म्मकराणामाश्रितानाम् । धर्म्मकृत्यं धर्म्म-कार्य्यम् । तदनुग्रहलाभ एव धर्म्मानुष्ठानवज्ज्ञेयम् । तस्य दुर्लभत्वात् । तत्कृपा लाभे तु उन्नतिर्निर्वाधा भवेत् । यद्वा प्रभोरनुग्रहाभावे किमपि सत्कार्य्यं भवितुं नार्हति । तस्मिन् भूपे प्रसन्ने अनुगतानां सर्व्वं प्रसन्नं राष्ट्रञ्च शान्तिमयम् । कोपे तस्य सर्वमुपद्रवपूर्णं स्यात् । यथा धर्म्मकृत्याद् निर्विशेषं सुखं तथा नृपानुग्रहे ऐहिकं महत् सुखम् । उक्तञ्च मानवे—

'यस्य प्रसादे पद्मास्रीर्विजयश्च पराक्रमे ।
मृत्युश्च वसतिः क्रोधे सर्वतेजोमयो हि सः' ॥

इति पूर्वमुक्तम् । नृपाश्रितानामपि तत्प्रसादात्तथैव फलं स्यात् । प्रागुक्तमन्यत् ॥ २३ ॥

भूपालेन लोकहिताय यथादिष्टं तथैवानुष्ठेयमित्याह यथेति ।

सविशेषं वा कुर्य्यात् ॥ ३५ ॥

स्वामिनो भीरुः क्वोपयुज्यते ॥ ३६ ॥

---

नृपालेनेत्युक्तम्। तेन यथा यादृगाज्ञप्तमादिष्टं विहितमुपदिष्टञ्चेति। लोकास्तथैव तादृगेव कर्म्म कुर्य्युर्न तु विरुद्धभावेन। आदिष्टनियमानुसारे कर्म्मकरणे नापि विपत्सम्भवः। 'यथैव यः स्वामिना आज्ञापितं तथैव वा' इति पाठवैरूप्ये नार्थभेदः। सर्व्वत्र प्रभुभृत्ययोरुपाध्यायशिष्ययोरुत्तमर्णाधमर्णयोः स्वाधीनपरायत्तयोश्चैवं नियमो बोध्यः॥ ३४ ॥

राजाज्ञाविषये विवेकमाह सविशेषमिति। विशेषेणासामान्येन सह वर्त्तमानं सविशेषं सामान्यमिति। नृपादेशेन सविशेषं कार्य्यं विदध्यात्। नतु अविशेषम्। असामान्यं यद् गृहपत्यादीनां प्रात्यहिकं कर्म्म जीविकार्थं तत्सर्व्वं नृपादेशं विनापि कर्त्तुं शक्यते। एवं धर्म्मकार्य्यमपि। अथवा वैशिष्ट्यञ्च व्यावहारिकविषयेतरकुल-धर्म्म-देशाचारादिषु। न तानि नृपादेशमूलकानि। अतस्तानि तदादेशाननुगतान्यपि कुर्य्यादिति सारः। वाकारेणात्र सविशेषं कर्म्मविकल्पेन कुर्य्यादिति। अर्थात् क्वाप्यनुतिष्ठेत् क्वचन नापि विदध्यात्॥ ३५ ॥

प्रभोः समीपे भीतस्य कार्य्योपयोगाभावमाह स्वामिन इति। स्वामिनः प्रभोर्नृपस्य च। सकाशे भीरोर्भीतस्याकर्म्मण्यस्येति। क्व कुत्रचित् कार्य्यं उपयुज्यते, न कुत्रचिद् योग्यो भवति। तस्य

**नास्त्यनार्य्यस्य कृपा ॥ ३७ ॥**

**नास्ति बुद्धिमतां शत्रुः ॥ ३८**

---

कर्म्मसम्पादने शक्त्यभावाद्भीरुत्वप्रतिबन्धकत्वाच्च । तदुक्तं पूर्वाचार्य्यैः—

'निरुत्साहो मन्दमतिर्भीरुश्च रोगवांस्तथा ।
दुर्बलो वधिरोऽन्धश्च एते कर्म्मसु गर्हिताः' ॥

'अधीरे कातरः त्रस्तौ भीरु भीरुक भीलुकाः' इत्यमरः । ञि भी भये, बिभेति । 'भियः क्रुक्लुकनौ' । 'क्रुकन्नपि' इति वार्त्तिकात्तत् सिद्धम् ॥ ३६ ॥

अनार्य्यजनानामनुकम्पाभावमाह नेति । अनार्य्यस्य नीचस्य शवरादेः । कृपा दया च । नास्ति, न विद्यते अनौदार्य्यादैदुष्याभावात् क्रौर्य्याच्च । ये त्वार्य्यास्तेषां स्वभावदाक्षिण्यात् प्राज्ञत्वाच्च कृपा विद्यत एव । जातेः स्वभावः पृथग् दृश्यते । यथा भूमिः स्वभावस्तथा । कुङ्कुमस्योत्पत्तिः काश्मीरे एव नतु प्राग्ज्योतिः पुरे । गान्धारे च गोस्तन्याः प्रादुर्भावो नतु वृन्दावने । लोकस्वभावो यथा आर्य्येषु प्राच्येषु आतिथेयता न प्रतीच्येषु । कृप कृपायां, कृपनम् । 'कृपेः सम्प्रसारणञ्चे'ति भिदादिपाठादङ् ॥ ३७ ॥

मतिमतां कौशल-प्राचुर्य्येणारात्यभावमाह नेनि । बुद्धिमतां धीमतां विदुषामिति । शत्रुररिरातिश्चेत्यं लोको नास्ति । मतिमन्तो हि स्वबुद्धिप्राखर्य्येण मधुरव्यवहारनैपुण्येन च साधु-

शत्रुं न निन्देत् सभायाम् ॥ ३९ ॥

नात्मच्छिद्रं प्रकाशयेत् ॥ ४० ॥

---

वत् सर्व्वान् शत्रु-मित्रसमजनान् समादाय कार्य्यं सम्पादयन्ति । वृथानिष्टं न कस्यापि विदधति । अतस्तेषां सर्वे मित्राणि भवन्ति न कोऽपि द्विडिति । 'न सद्बुद्धिमतां शत्रुरिति' पाठे तु अर्थानैक्यं नास्ति । अत्रालं सदितिपदेन । 'कृत्स्नो हि लोको बुद्धिमतामाचार्य्यः' इत्याचार्य्याः प्राहुः । कोष-पदनिरुक्त्यादिकं पूर्वमुक्तम् ॥ ३८ ॥

परिषदि अरातिनिन्दाकरणानौचित्यमाह शत्रुमिति । सभायां परिषदि समिताविति । शत्रुं रिपुं न निन्देन्नापि जुगुप्सेत । परिषदि शत्रोः कुत्सने सोऽतिशयः क्रुद्धोऽवमानितः सन् यथेच्छं गर्हिताचरणं विधास्यतीति । अतो रहस्ये तस्य विगानं कुर्य्यात् । कौशलजालेन तमायत्तीकृत्य पराजितं कुर्य्यात् । तथा चोक्तं सूरिभिः—

वशीकृत्य रिपून् सर्व्वान् कौशलेन बलेन वा ।
स्वकार्य्यं साधयेत् प्राज्ञः वृथानिष्टं न चिन्तयेत्' ॥

इति ।। सभा । सह भान्ति ये, यस्यां वा । भा दीप्तौ, भाति । 'सुपि' कप्रत्ययः । यद्वा 'अन्येभ्योऽपीति' वचनात् डप्रत्ययः । ॥ ३९ ॥

आत्मदोष-प्रकाशावसरदाननिषेधमाह नेति । आत्मनः स्वस्य च्छिद्रं दोषं परानिष्टकरण-सन्धानयोग्यं प्रवेशमार्गम् । स्वयं

## शक्तौ क्षमा श्लाघनीया ॥ ४१॥

कदापि न काशयेत्। नापि तत्प्रयोगप्रदानं युक्तम्। अपि तु स्वरक्षणाय यत्नतो गोपयेत्। तदुक्तं मानवे—

'नात्मच्छिद्रं परे दद्यात् परच्छिद्रं प्रकाशयेत्'।

इत्यादि प्रागुक्तम्। एवमेव श्लोकः कौटिल्येऽर्थशास्त्रेऽस्ति। अनयोः श्लोकयोः पाठभेदेऽपिनार्थभेदः। यस्य प्रकाशेस्वानिष्टं न तत्प्रकाश्यम्। यस्य प्रकटने स्व-परानिष्टं भवेत्तदपि न व्यक्तीकरणीयम्। यस्य तु व्यक्तौ करणे शत्रोरनिष्टस्तत् प्रकाशनीयमेवेतिसारः। यस्य प्रकाशेऽप्रकाशे च न कोऽपि कस्यापि लाभस्तत्रोदासीन्यम्। 'न सर्षपमात्रमप्यात्मच्छिद्रं प्रकाशयेदिति' पाठभेदे अर्थसारूप्यमस्ति। अनेन सर्वथाप्यात्मच्छिद्रप्रकाशे निषेधोद्योतितः अर्थशास्त्रे पुष्कलमन्यदस्ति ॥ ४० ॥

शक्तिमतः क्षमा-प्रकाशे प्रशंसनमाह शक्ताविति। शक्तौ सामर्थ्ये विद्यमाने। तत्तत्कार्य्यनिर्व्वाहकरण-सामर्थ्यं शक्तिः। निग्रहानुग्रहकारिणी वा। अस्यां शक्त्याम्। क्षमा रागादि सहनम्। परेनानिष्टकरणे तस्यापकाराकरणं वा। श्लाघनीया प्रशंसार्हा अतः शक्तिमतां क्षमा श्रेयसी। अशक्तस्य सा दौर्बल्य-सूचिका। यत्तूक्तं लघुचाणक्ये 'क्षमा रूपं तपस्विनः' इति तत् सर्वकर्म्म-परमेश्वरार्पकाणां सन्यासिनां न तु विषयासक्तानाम्। तदुक्तं पूर्वसूरिभिः—

'क्षमा शक्तिमतां युक्ता दुर्बलस्य स्वतः क्षमा'। इति।

## क्षमावानेव सर्व्वं साधयति ॥ ४२ ॥

## आपत्प्रतीकारार्थं धनमिष्यते ॥ ४३ ॥

---

'क्षमा तितिक्षा पृथ्वी च योग्ये शक्ते हिते क्षमम्'। इति धरणिः। क्षमु सहने, क्षमते, ततः पचाद्यच्। षित्त्वाट्टङ्प्रत्ययश्च। यद्वा घञा सिद्धम्। घञि परे नोदात्तोपदेशस्येत्यादिना न वृद्धिः ॥ ४१ ॥

सहनशीलस्याशेषकार्य्यसाधने योग्यतामाह क्षमेति। क्षमावान् क्षान्तिमान् दुःखापमान-धनहानादि सहनशीलश्च। तादृशो जनः सर्वं कार्य्यं साधयति। परेणापकृते तस्यापकाराकरणं क्षमेति। यत्र कार्य्ये क्रोधोद्रेकादिविवादादि सम्भवति तत्र क्षमा साधनीया। तया कौशलेनानायासेन च कार्य्यं सम्पत्स्यते। न तत्र मानसिकः क्लेशः। न वा भविष्यति विवादावसरमिति। 'क्षमं शक्ते हिते युक्ते क्षमावति। क्षमा क्षान्तौ क्षितौ' इति हैमः। 'क्षमावानेव जयति लोकान्'। इति पाठवैलक्षण्येऽपि अर्थसारल्यमस्ति। 'क्षमायुक्ताः सर्वं साधयन्ति' इति ग्रन्थान्तरे पाठभेदेऽपि अर्थस्यैकरूप्यात् सूत्रमिदं प्रागुक्तसूत्रार्थस्य व्यक्तीकरणार्थमिति प्रतीयते ॥ ४२ ॥

आपद्भ्यस्त्राणार्थं धनसञ्चयो न्याय्यस्तदाह आपदिति। धनं वसु मणिमुक्तादिकम्। आपदां विपदामनिष्टपातानाम्। प्रतीकारार्थं निवृत्त्यर्थं ताभ्य उद्धारार्थं वा। धनं इष्यते भाव-

साहसवतां प्रियं कर्त्तव्यम् ॥ ४४ ॥

श्वः कार्य्यमद्य कुर्व्वीत ॥ ४५ ॥

श्यकमिति सुधीभिर्मन्यते। कविसमयश्च 'धनैरापदो मानवा निस्तरन्ती'ति। 'अत्रापदर्थं धनं रक्षेत्' इति पाठान्तरं पुस्तकान्तरे दृश्यते। तथैव लघुचाणक्येऽस्ति। तादृशे पाठे प्रागुक्तसूत्रेणैतस्य गतार्थत्वम्। 'आपदर्थं धनमिति' मानवधर्म्मशास्त्रोक्त पाठः साधुः। 'धनन्तु गोधने वित्ते' इति विश्वः। दीना धनाभावाद्विपद्यवसीदन्ति। अर्थ-वन्तो विपदि धनैर्निस्तरन्तीति लोके प्रसिद्धः। धन धान्ये, धनति। अच्प्रत्ययेन सिद्धम् ॥ ४३ ॥

साहसयुक्तानां तद्दर्द्धनाय प्रीतिसम्पादनमाह साहसेति। साहसवतां कार्य्योत्फुल्लवतां सम्यगुद्दीपितानां समुल्लासवतामिति। बलबुद्धिमतामपि कुत्रचित् साहसाभावाद्भीरुत्वाच्च कार्य्यहानिः। 'साहसन्तु दमे दण्डे। दुष्करकर्म्मणि अविमृष्यकृते धार्ष्ट्ये' इति हैमः। तद् बलाधिक्याद्भवति। सहसि बले भवम्। 'तत्र भवे'त्यनेनाण्प्रत्ययः स्यात्। प्रीञ तर्पणे, प्रीणाति। ततो हि 'इगुपध' इत्यादिना कः। 'प्रियो वृद्धौषधे हृद्ये धवे' इति हैमः। यद्वा साहससम्पन्नानां जनानां हितकरकार्य्यानुष्ठानं समुचितम्। 'साहसात् भजते लक्ष्मीः' इति सूरयः। साहसान्वितं जनमित्यूह्यम्। प्रागुक्तमन्यत् ॥ ४४ ॥

अनागतदिवसीय कार्य्यस्य तत्पूर्व्वदिने कर्त्तव्यत्वमाह श्व इति। श्वः आगामिदिवसे। तद्दिवसीयमनुष्ठेयं यत्कार्य्यन्तद-

## आपराह्णिकं पूर्व्वाह्ण एव कर्त्तव्यम् ॥४६॥

यास्मिन् दिने कुर्वीत विदध्यात्। इति सामान्याभिधाने विधिलिङ्। उक्तञ्च पुराणे—

'श्वः कार्य्यमद्य कर्त्तव्यं पूर्व्वाह्णे चापराह्णिकम्।
नहि प्रतीक्षते मृत्युः कृतमस्य नवाऽकृतम्' ॥

इति प्रागुक्तम्। यतः कृतस्य करणं नास्ति। अन्यत्तु कार्य्यमवशिष्यते। अतस्तदवश्यं येन त्वरितं सम्पन्नम्भवेत्तथैव यत्न आस्थेयः। नियतानुष्ठेय कार्य्यस्यालस्यादनारम्भे तत्कार्य्यान्तरेणानन्तं कार्य्यं पश्चान्न सम्पत्स्यते। 'ह्योगतेऽह्नि आगतेऽह्नि श्वः' इत्यमरः। श्व इत्यव्ययम्। ततोऽह्नः आगामि, पृषोदरादिः। प्रागुक्तसूत्रीय विषयदृढ़ीकरण परमिदं सूत्रमिति केचन सूरयः। आलस्यात्कार्य्यानुष्ठानत्यागनिषेधोऽनेन सूचितः। अन्यत् पूर्व्वमुक्तम् ॥ ४५ ॥

दिनावसाने अनुष्ठेयकार्य्यस्य दिवसपूर्व्वभागे कर्त्तव्यतामाह एति। आपराह्णिकं दिनावसाने भाविकार्य्यम्। दिनं त्रिधाविभक्तम्। पूर्व्वाह्णं मध्याह्नमपराह्णञ्च। तत् पूर्व्वाह्णे वासरस्य पूर्व्वभागे विधेयं तत्तदेव कार्य्यम्। अपराह्णे यत् कर्त्तव्यं तदपि पूर्व्वाह्णे अनुष्ठिते कार्य्यस्यानेकसौलभ्यं फलं शीघ्रत्वञ्च भविष्यति निर्बाधकमपि तद्भवेत्। स्वकालानुष्ठिते कार्य्यबाहुल्यं तद्बाधाप्राचुर्यञ्च सम्भवेत्। अह्नोऽपरभागोऽपराह्णः, तत्र भव आपरा-

व्यवहारानुलोमो धर्म्मः ॥ ४७ ॥

सर्व्वज्ञता लोकज्ञता ॥ ४८ ॥

---

ज्ञिकम्। तत्र कार्य्यान्तरान्तराले प्रत्यूहः कार्य्यान्तरमालस्य-स्यापततीति भावः। प्रागुक्तमन्यत् ॥ ४६ ॥

धर्म्मस्य विशेषभावेन व्यवहारानुयायित्वमाह वेति। व्यवहारस्यानुलोमः पश्चाद्गामी। यथा पूर्व्व-पूर्व्वव्यवहारो जातस्तदनुसारी धर्म्मोऽभूत्। व्यवहारो नैतिकं कार्य्यम्। वृद्धम्परम्पराचरणञ्च। सम्प्रति तदनुलोमः व्यवहार-नियमक्रमेण धर्म्मश्च स्यात्। अत एव यथा व्यवहारस्तथैव धर्म्मः। साधुषु सत्यमूलकः शठ-तस्कर-दुर्जनेषु शाठ्यसूचक इति। धर्म्मशास्त्रकृतस्त्वाहुः 'धर्म्मः पैतामहः स्मृतः'। अन्यच्चोक्तं महर्षिणा—

'येनास्य पितरो याता येन याताः पितामहाः'। इति।

पूर्व्वपितामहैर्यादृशधर्म्मोऽनुष्ठितः तादृशः तत्परजातैरप्यनुष्ठेयः। अन्ये त्वेवं वदन्ति लोकविधारणाद्धर्म्म इति। तथा च महाभारते—

धारणाद्धर्म्म इत्याहुर्न लोकचरितञ्चरेत्'।

लोकेच्छाकल्पितो न धर्म्मस्तस्य सनातनत्वात्, लोकमति बाहुल्याद्धर्म्मबाहुल्यञ्च स्यात्। प्राक् प्रपञ्चितमन्यत् ॥ ४७ ॥

सर्व्वज्ञत्वस्य लोकज्ञत्वमाह सर्व्व इति। सर्व्वज्ञता सकलविषय-वेत्तृत्वम्, सकलविषयाभिज्ञता विशेषनैपुण्यमिति यावत्। सातु लोकज्ञता। लोकतत्त्वज्ञत्वं भवति। यात्वीश्वरे आच सुमेरोरा च परमाणुम्। आच सिन्धोराच उदबिन्दुं यावत्

शास्त्रज्ञोऽप्यलोकज्ञो मूर्खेष्वनन्यः ॥ ४९ ॥

---

सूक्ष्म-व्यवहित विप्रकृष्टत्वादिज्ञानं न तल्लोके सम्भवति। लोकानां भ्रम-प्रमाद-विप्रलिप्सेन्द्रियापाटवादीनां सम्भवात्। अतो हि; सकलस्थूल विषयाभिज्ञत्वञ्च लोकज्ञतेति। भगवदोशस्य सर्व्वज्ञत्वे उक्तं, वेदान्तकल्पतरौ पुराणवचनम्—

'सर्व्वज्ञता तृप्तिरनादिबोधः,
स्वतन्त्रता नित्यमलुप्त-शक्तिः।
अचिन्त्यशक्तिश्च विभोर्विधिज्ञाः,
षड़ाहुरङ्गानि महेश्वरस्य'॥

तत्रैव च वायु प्रोक्तम्—

'ज्ञानं विरागतैश्वर्य्यं तपः सत्यं क्षमा धृतिः।
स्रष्टृत्वमात्मसम्बोधो ह्यधिष्ठातृत्वमेव च॥
अव्ययानि दशैतानि नित्यं तिष्ठन्ति शङ्करे'॥

वस्तुतत्त्वसूक्ष्म-पर्य्यालोचनेन यदभिनवाविस्करणं तद्विज्ञानम्। तच्च लौकिकमेव प्रतिभा प्राखर्य्याज्जायते। प्राङ्निगदितमन्यत् ॥ ४८ ॥

लौकिक विषयानभिज्ञस्य शास्त्रवेत्तृत्वेऽपि मूढ़ तुल्यत्वमाह शास्त्रेति। शास्त्रज्ञः शास्त्रतत्त्ववित्। तच्च शास्त्रम् ऋग्वेदादि नीत्यन्तं चतुर्दशविद्याख्यं सर्व्वम्। स च यद्यपि अलोकज्ञः लौकिकव्यवहारं न जानाति वैषयिकव्यवहारे नापि दक्षः। मूर्खेषु मूढ़ेषु अनन्यः अभिन्नः मूर्खतुल्य इति। शास्त्रनियममुल्लङ्घ्य

शास्त्रप्रयोजनं तत्त्वदर्शनम् ॥ ५० ॥

तत्त्वज्ञानं कार्य्यमेव प्रकाशयति ॥ ५१ ॥

---

स्वेच्छया यो वर्त्तते सविवेकहीनः कर्म्म-साफल्यवर्ज्जितः । 'अज्ञ मूढ़ यथाजात मूर्ख वैधेय वालिशाः' इत्यमरः । तत्रैव 'लोकस्तु भुवने जने, इति । लोकज्ञतायाः सततं प्रयोजनीयत्वात्तस्य प्राधान्यमत्र कीर्त्तितम् । मूर्खः । मुह वैचित्ये, मूह्यति । 'मुहेः खोमूर्च' इति सिद्धम् ॥ ४८ ॥

वस्तुतत्त्वदर्शने अलौकिकज्ञाने च शास्त्रस्यावश्यकत्वमाह शास्त्रमिति । शास्त्रस्य प्रागुक्तस्य ऋग्वेदादेः । प्रयोजनम् आवश्यकमभीष्टमिति । तच्च तत्त्वस्य पदार्थयाथार्थ्यस्य लौकिकालौकिकपदार्थरहस्य वा । दर्शनं ज्ञानम् । शास्त्रं प्रयोजनम् यस्मिन् तत्त्वज्ञाने तत् । उक्तञ्च विष्णुना—

'अनेकसंशयोच्छेदि परोक्षार्थस्य दर्शनम् ।
सर्व्वस्य लोचनं शास्त्रं यस्य नास्त्यन्ध एव सः' ॥

यः शास्त्रज्ञानहीनः स चक्षुष्मानपि तत्त्वम् न पश्यति । अन्धस्तु चक्षुषोर्दृष्टिशक्तेरभावान्नावलोकयति । 'निदेश-ग्रन्थयोः शास्त्रम्' इत्यमरः । 'तत्त्वं ब्रह्मणि याथार्थ्ये धर्म्मे साधारणेऽपि च' इति । प्रयोजनमिति । युजिर योगे, प्रयुज्यते । 'कृत्यल्युटो बहुलम्' इत्यनेन ल्युट् । विषयतत्त्वज्ञाने नीतिशास्त्रस्य सम्यगावश्यकत्वम् ॥ ५० ॥

प्रागुक्ततत्त्वज्ञानस्य फलमाह तत्त्वज्ञानमिति । तत्त्वज्ञानं

## अपक्षपातेन व्यवहार: कर्त्तव्य: ॥ ५२ ॥

---

पदार्थयाथार्थ्यबोध:। यथार्थप्रतीतिश्च। कार्य्यं विषयमेव निश्चितम्, प्रकाशयति प्रभाषयति। यद्वा न्यायमते तत्त्वानि षोड़श। सांख्यनये चतुर्विंशति:। वैशेषिकनये षट् तत्त्वानि। नीतिशास्त्रोक्त तत्त्वानि च त्रिवर्ग:। धर्म्मार्थकामा:। सामादिचतुष्टये उपाया:। सन्ध्यादय: षट्। वार्त्तात्रयं—कृषि गोरक्षवाणिज्यानि। राज्याङ्गानि सप्त। षोड़श मण्डलानि च पुष्कलमन्यदर्थशास्त्रेऽस्ति। अतस्तत्त्वज्ञानेन विषयाबोध: प्रजायते नान्यथेति। शास्त्रपाठेन विना न सम्यक्तत्त्वज्ञानम्। तत्त्वज्ञानेन विना नापि सूक्ष्मविषय प्रतीतिरिति रहस्यम्। अथवा तत्त्वं साधारणम्। साधारणविषय ज्ञानेन शिल्पादि विषयं प्रत्याययति। तत्त्वमिति। ततनं तत्। सम्पदादित्वात् क्विप्। तदस्यास्तीति 'व-प्रकारेऽन्यत्रापि' इति व:। 'तसौ मत्वर्थे' इति भत्वान्न जत्वम् ॥ ५१ ॥

पक्षपातरहित-व्यवहारस्यौचित्यमाह एति। द्वयोरेकतर: पक्ष:। तयोरेकस्यानुकूल्यं पक्षपात:। तत्र नञ् समास:। कार्य्यकाले पक्षपातरहितेन व्यवहार: आचरणं कर्त्तव्यम्। तेन सत्यरक्षा कार्य्यसौकर्य्यञ्च। अकृते तु तादृश व्यवहारे स्वपरानिष्टं कार्य्यहानिर्दुर्नीतिश्च प्रवर्त्तते। समाजेषु पक्षपातकरणं विचारकाले वा न्याय-गर्हितं तेन लोकविक्रोशश्च स्यात्। अतो माध्यस्थेन भवितव्यम्। यद्वा धर्म्माधिकरणे विचारादौ

धर्म्मादपि व्यवहारो गरीयान् ॥ ५३ ॥

आत्मा हि व्यवहारस्य साक्षी ॥ ५४ ॥

---

मध्यस्थत्वे च पक्षपातो न कार्य्यः। एवं साक्ष्यप्रदानेऽपि। पक्षपात करणे धर्म्महानिर्नीति प्रातिकूल्यञ्च भवेदिति ॥ ५२ ॥

व्यवहारस्य प्राचुर्य्याल्लोकस्थितिहेतुत्वाच्च, स च धर्म्मतः श्रेष्ठ इत्याह धर्म्मादिति। व्यवहारो वृद्धपरम्परागताचारः लोकोपचारः कार्य्यानुष्ठानमिति यावत्। यद्वा अर्थशास्त्रविधानं व्यवहारः। वार्त्ताचैतदन्तर्गता। अन्यदुक्तं कात्यायनेन—

'वि-नानार्थे अव-सन्देहे हरणं हार उच्यते।
नानासन्देह-हरणाद् व्यवहार इति स्मृतः' ॥

इति प्रागुक्तम्। सच धर्म्माद्गरीयान् धर्म्मादपि श्रेष्ठः। धर्म्मानुष्ठानात् सततं व्यवहारस्य बाहुल्यात्। व्यवहारं विना प्रात्यहिकं कार्य्यं न प्रचलति। व्यवहारस्तु नीतिमूलकः। तेनास्य श्रेष्ठत्वम्। धर्म्मतत्त्वमजानन्तोऽपि व्यवहार-निपुणा दृश्यन्ते। 'व्यवहारः स्थितौ पणे द्रुभेदे' इति हैमः। व्यवहार इति। ह्रियते अनेनेति व्यवपूर्व्वाद्धरतेर्घञा सिद्धः ॥ ५३ ॥

आत्मनः सर्व्वव्यवहार साक्षित्वमाह आत्मेति। आत्मा जीवो मनो वा। 'आत्मवान् राजेति' वार्हस्पत्यसूत्रे आत्मपदवाच्यम् मन एव। एवमेव भारतव्याख्याने नीलकण्ठोऽप्याह। आत्ममनसोर्विषये षण्णां दर्शनानां विप्रतिपत्तयः सन्ति। ताश्च विस्तर-

## सर्व्वसाक्षी ह्यात्मा ॥ ५५ ॥

भिया नीतावनुपयोगित्वेन च नोच्यन्ते। स चात्मा लोकायुषि येन यद्यत्कृतं तत्सर्वस्य साक्षाद्द्रष्टृत्वेन् साक्षी, प्रत्यक्षद्रष्टा भवति। तं विना कार्य्यानुपपत्तेः। साक्षीति। 'साक्षाद्द्रष्टरि संज्ञायामिति' निपातनात् सिद्धम्। मनः पक्षे तु तदगोचरे किमपि लोकानुष्ठितं कर्म्म नास्ति।

'आत्मा कलेवरे यत्ने स्वभावे परमात्मनि।
वित्ते धृतौ च बुद्धौ च परव्यावर्त्तनेऽपि च'॥

इति धरणिः। पदनिरुक्तिः पूर्व्वोक्ता ॥ ५४ ॥

पूर्वमात्म-सामान्यरूपेणात्मनः साक्षित्वमुक्त्वा सम्प्रति सर्व-कर्म्म साक्षित्वमाह सर्वेति। सर्वेषां कर्म्मणां तत्फलानां-शुभा-शुभानाञ्च हि निश्चितम् आत्मा साक्षात् प्रत्यक्षद्रष्टा भवति। तेन विना सकल-कर्म्मानुष्ठानानुपपत्तेः। 'सत्यसाक्षी ह्यात्मा' इति पाठ-वैरूप्ये सत्यस्य शुभकर्मणः। यद्वा यथार्थस्य जगद्विषयनिकरस्य साक्षीत्यर्थः। नेदं सूत्रं पूर्वसूत्रेण गतार्थम्। तत्र सामान्यतः व्यवहारमात्रस्य आत्मा मना लौकिकालौकिक सर्वसाक्षी। अत्र तूपलक्षणेन सत्यासत्य-सकलविषयस्य। आत्मनः साक्षित्वं सांख्यनये माध्यस्थ्यम्। वेदान्तनये साक्षिचैतन्यम्। तथा च श्रुतिः 'साक्षी चेता. केवलो निर्गुणश्च' इति। सत्यं यथावस्थित-मविकारि वस्तु, तत्फलं यथा धर्म्मशास्त्रे—

## नच कूटसाक्षी स्यात् ॥ ५६ ॥

---

'अश्वमेध सहस्रञ्च सत्यञ्च तुलया धृतम् ।
अश्वमेध सहस्राद्धि सत्यमेवातिरिच्यते' ॥ इति ।

पदनिरुक्त्यादिकं प्रागुक्तम् ॥ ५५ ॥

कूटसाक्ष्यदाने निषेधमाह न चेति । कदापि साक्ष्यदाता कूटसाक्षी न भवेत्तेन सत्यावरणं परवञ्चनं समाजगर्हा च भवेत् । कूटो मिथ्या शाठ्यं कापट्यञ्चात्र बोध्यम् । एकं दृष्ट्वा श्रुत्वा ज्ञात्वा च अन्यथा साक्ष्यदानं कूटत्वम् । तदुक्तं याज्ञवल्क्येन—

'न ददाति हि यः साक्ष्यं जानन्नपि नराधमः ।
स कूटसाक्षिणां पापैः तुल्यो दण्डेन चैव हि' ॥

तत्र कात्यायनश्चाह—

'अर्वाचिनरके वर्षं वसेयुः कूटसाक्षिणः' इति ।

यद्वा कूटेन वक्ररीत्या वर्त्तते साक्षी, कूटसाक्षी । कूटसाक्षी-गूढ़साक्षि-मिथ्यासाक्षि-प्रभृति भेदेन साक्षिणो बहुविधाः । साक्ष्यान्यथा कथनेन प्रत्यवायो स्यात् । यथा च—

'पृष्टो हि साक्षी यः साक्ष्यं जानन्नप्यन्यथा वदेत् ।
स पूर्व्वानात्मनः सप्त कुले हन्यात्तथापरान्' ॥

अन्यच्च—

'यश्च कार्य्यार्थ-तत्त्वज्ञो जानन्नपि न भाषते ।
सोऽपि तेनैव पापेन लिप्यते नात्र संशयः' ॥

## कूटसाक्षिणो नरके पतन्ति ॥ ५७ ॥

## न कश्चिन्नाशयति समुद्धरति वा ॥५८॥

---

इति भारते आदिपर्व्वणि । अन्यदस्ति व्यवहारतत्त्वे मानवे सप्तमाध्याये च ॥ ५६ ॥

कूटसाक्ष्यदानस्य फलमाह कूटेति । कूटसाक्षिणो जनाः नरके घोरे ऽस्मिन् काले । अस्मिंश्च दुःखे कलङ्कपङ्के च पतन्ति यान्ति । 'पितृभिः सह नरके निमज्जति कूटसाक्षी' इत्थं पाठभेदेच अर्थसारल्यमस्ति । 'कूटं पूर्द्वार यन्त्रयोः । माया-दम्भाद्रिशृङ्गेषु सीराङ्गेऽनृत-तुच्छयोः । निश्चले आयोघने राशौ' इति हैमः । कूट आप्रदाने । कूट दाहे मन्त्रणे च, कूटयति । कूट्यते वा । ततोऽचा घञा वा सिद्धम् केचित्तु 'इगुपधत्वात्' कप्रत्यय इत्युक्तम् । तन्न कूटधातोश्चुरादित्वेन णिजन्तादिगुप-धत्वाभावाच्च । णिजोऽभावे वेति अच्प्रत्यय इष्यते ॥ ५७ ॥

प्रागुक्त कूटसाक्षिणः वैफल्यमाह नेति । पूर्व्वोक्त कूटसाक्ष्य-प्रदानेन कोऽपि साक्षी न कञ्चन जनं भूभागं वा नाशयति नवा स कञ्चनं समुद्धरति त्रायति च । यत्तु विवाहादि विषये मिथ्या-भाषणौचित्यमुक्त' तदन्यत्, नात्रावसरस्तस्य । नीतिविद्भिश्च आत-तायि-चोर-दस्यु-पामर-शठेषु मृषा भाषणमुचितमुक्तम् । तेषां स्वभावतः क्रौर्य्यादनिष्टकारित्वाच्चेति । सूत्रेषु सामान्यतो वैकल्य-मुक्तम् । सामान्यतः कूटसाक्ष्यदाने 'स्वयं नष्टः परानपि नाश-

## प्रच्छन्न-पापानां साक्षिणो महाभूतानि ॥५९॥

## आत्मनः पापमात्मैव प्रकाशयति ॥६०॥

---

यतो'ति न्यायप्रसङ्गापातः । साक्ष्यस्य मिथ्यात्वप्रकाशे उपचया-दपचयोऽधिकः । धर्म्मशास्त्रे तस्य सम्यग्विगानमस्ति ॥ ५८ ॥

गुप्तानुष्ठितपापानां साक्षिणमाह प्रेति । प्रच्छन्नपापानाम् प्रच्छन्नं गुप्तमज्ञातमिति यावत् । तादृक्पापं दुरितं येषां तेषां जनानाम् । दुष्कृति-साक्षिणो महाभूतानि क्षित्यादि पञ्चसंज्ञकानि बहिरन्तः स्थितानि साक्षाद्द्रष्टारो भवन्ति । अन्ये पश्यन्तु मा वा पश्यन्तु एते मनोवन्नियतं देहे स्थिता पश्यन्त्येव । क्षित्यादयः पञ्चमहाभूतानि पञ्चतन्मात्रेभ्यो जातानि । तथा च कापिलं सूत्रम् 'स्थूलात् पञ्चतन्मात्रस्य' इति । धर्म्मशास्त्रकृता प्युक्तं 'महाभूतानि पञ्च च एते शुभाशुभस्येह कर्म्मणो नव-साक्षिणः' । अन्यत्र चोक्तं मन्त्रशास्त्रविद्भिः—

'आदित्य-चन्द्रावनिलोऽनलश्च,
द्यौर्भूमिरापो हृदयं यमश्च ।
अहश्च रात्रिश्च उभे च सन्ध्ये,
धर्म्मो हि जानाति नरस्य वृत्तम्' ॥ इति ।

'गुप्तमन्तरितं प्रच्छन्नमावृतं रहस्ये कृतम्' इति कोषः ॥५९॥

स्वकृतपापस्य स्वयं प्रकाशकस्तदाह आत्मेति । आत्मनः स्वस्य । पापं दुरितं यत्तदात्मैव मन एवानुभूय प्रकाशयति प्रकटी करोति । तदगोचरे तदभावात् । समये कार्य्यप्रसङ्गे च स्वकृत-

व्यवहारेऽन्तर्गताकारः सूचयति ॥ ६१ ॥

---

पापं स्वयमेव व्यक्तीकरोति। 'प्रच्छन्नं यत्कृतन्तदपि न प्रच्छन्नमात्मनः' इति पाठभेदे सति येन पुंसा यत् पापं रहस्येऽनुष्ठितं तदन्यस्य समीपेऽज्ञातेऽपि तदनुष्ठातुरात्मनो मनसो नापि अगोचरमपि च सम्यज्ज्ञातमनुभूतमेव भवतीति। तदुक्तं स्मृतौ—

'मानसं मनसैवेदमुपभुङ्क्ते शुभाशुभम्।

वाचा वाचा कृतं कर्म कायेनैव तु कायिकम्' ॥ इति।

वाशिष्ठेच—

'मन एव मनुष्याणां कारणं बन्धमोक्षयोः'। इति च।

यद्वा स्वानुष्ठितपापस्य परिणामि क्लेशानुभवेऽनुतापादिना स्वयं प्रकाशयति ॥ ६० ॥

व्यवहारेण अन्तर्गतभावस्य सूचनमाकृत्या आह वीति। व्यवहारे लोकसंवादे कार्य्यकाले वा। अन्तर्गताकारः। अन्तःकरणस्थितस्य विषयस्य स्वरूपं सूचयति अभिव्यनक्तीति। तदुक्तम्—

'आकारैरिङ्गितैर्गत्या चेष्टया भाषितेन च।

नेत्रवक्त्रविकारैश्च गृह्यतेऽन्तर्गतं मनः' ॥ इति।

यद्वा आकृतिर्व्यवहारविषयेऽन्तर्गतभावं व्यनक्ति। सर्व्वो व्यवहारो लोकानां मनसैव भवति। व्यवहारकाले मनो वागादीन्द्रियैरन्तःकरणस्थं विषयतत्त्वं वहिर्द्योतयतीति भावः। यदुच्यते

**आकार सम्बरणं देवानामशक्यम् ॥ ६२ ॥**

**सुदर्शना हि राजानः प्रजा रञ्जयन्ति ॥ ६३ ॥**

---

लोको व्यवहारकाले चिन्तया मनोगतभावं प्रच्छाद्यान्यद्दतीति। तत्नः, प्रश्न-प्रतिवाक्य-वितर्कैश्च यत् प्रच्छन्नं तदनुमीयते ॥ ६१ ॥

कार्य्यकाले बुद्धिमतां सन्निधावाकार गोपनस्य दुःसाध्यत्व-माह आकारेति। आकारस्य वस्त्वाकृतेः स्वरूपस्य यत् सम्बरणं गुप्तिर्निह्नव इति यावत्। तद्देवानाममराणामप्यशक्यं दुःसाध्यं सामर्थ्यातीतम्। का कथा मनुजानाम्। आकारस्य सम्बरण-मिति षष्ठीतत्पुरुषः। 'आकाराविङ्गिताकृती' इत्यमरः। यद्वा शाठ्येन शोकोन्मादनादिनाचाकारस्य निह्नवकरणम्। धीमता तु नयनदृष्टिसञ्चालनेन वाग्भङ्ग्या तज्ज्ञातुं शक्यते। स्थिरदृष्टिः स्थिरवाक् अचिन्त्यकथनं यथाकारप्रकाशे शिष्टस्य हेतुः। शिष्टस्य लक्षणं पूर्वमुक्तम्।

अशिष्टस्याप्रकृतिस्थस्यैतद्विरुद्धम्। 'आकारसम्बरणम् अकारणा वाचो राजपुरुषेभ्यो नित्यं रक्षेत्' ईदृशे पाठानैक्ये राजपुरुषेभ्यः नृपामात्यादिभ्यः नित्यं सततमाकारसम्बरणमनिष्टभिया। लोका-दकारणा कारणशून्या वाचोऽपि तेभ्यश्च रक्षेदिति ॥ ६२ ॥

भूपालस्य प्रजारञ्जने सौम्यत्वहेतुमाह स्विति। सुदर्शनाः शोभनदर्शनाः। गुण-गौरव-शौर्य्य-प्रज्ञा-दयाविमण्डिताः। शोभनं दर्शनं येषां ते इति बहुव्रीहिः। तादृशाः सौम्यदृष्टयो भूपाः।

# चोरराजपुरुषेभ्यो वित्तं रक्षेत् ॥ ६४ ॥

---

प्रजाः बलिदातॄन् रञ्जयन्ति प्रीणयन्ति । तदुक्तं महाकविना 'राजा प्रकृतिरञ्जनात्' इति । पाणिनिनापि 'किमः क्षेपे' इत्युक्तम् । यो न रक्षति प्रजाः स किं राजा इति क्षेपाभिधान-दर्शनाद् राज्ञः प्रजासु सौम्यदर्शनं युक्तम् । अन्यत्र केषां रा… किं राज इति अच्प्रत्ययात् सिद्धम् । तत्र तु 'न किमः क्षेपे'इति अच-प्रत्ययनिषेधः । भूमिपो यदि स्नेह-दयाऽभय दर्शनैः सर्व्वाः प्रजाः पश्यति तदा ते अनुरक्ताः प्रीताः सुखिनश्च भवन्ति । प्रजानां नरेश-शासनं सततं शिरोधार्य्यं पालनीयञ्चेति । अन्यच्चक्रनीतौ भारते राजर्म्मे चास्ति । प्रागुक्ता पदनिरुक्तिः ॥ ६३ ॥

चोरादिभ्यो धनरक्षणोपदेशमाह चोर इति । चोरास्तस्करा दस्यवश्च । एभ्यो वैधावैधाभ्यामुपायाभ्यां धनं रक्षेत् । राज-पुरुषेभ्यो वैधोपायेन धनं सञ्चिनुयात् । राजपुरुषा राजामात्या-दयः । चोरादयो बलादसदुपायेन च वित्तमपहरेयुः । राज-पुरुषा नानाविध-कराद्यादान-कौशलेन च वित्तं नयन्ति । तेभ्यः धनं नीति-नैपुण्येन रक्षेत् । समुद्वृत्त-धनस्य हिताय धर्माय च व्ययं कुर्य्यात् यतः—

'उपार्ज्जितानां वित्तानां त्याग एव हि रक्षणम्' ।

त्यागः सन्निमित्ते नतु निन्द्ये विषये । सन्मार्गे त्यागाभावे असन्मार्गे वित्तं यास्यत्येवेति । प्रागुक्तमन्यत् ॥ ६४ ॥

**दुर्द्दर्शना हि राजानः प्रजा विनाशयन्ति ॥६५॥**

**न्यायवर्त्तिनं राजानं मातरमिव मन्यन्ते प्रजाः ॥ ६६ ॥**

---

नीतिहीनानां भूपानां प्रजाहानिकारकत्वमाह दुरिति। दुर्द्दुःखेन दुर्ल्लभो वा दर्शनं येषां ते दुर्द्दर्शनाः नृपाः। तेषां दर्शनं कदाचिज्जीवद्दशायां प्रजाः कुर्वन्ति। नृपश्चावहेलनाद् दुरवर्त्तित्वाच्च प्रजाभ्यो दर्शनं ददाति। तदा तेन तयोः सद्भावहानिः स्यात्। हितञ्च पराहतं भवति। प्रजानां विशेषतो राजभक्तिः सुविचारलाभश्च दुर्लभः, तेन न्यायविचारश्च ह्रसति। यद्वा दोषः क्रोध दर्शना-नृपाःप्रजानामहितमाचरन्ति। प्रजाः क्रमशः समुच्छेदयन्ति च। शासन-सौकर्य्याभावाच्च प्रजाहानमवश्यं स्यादेव। अतः प्रजासु सौम्यदर्शनं नृपतेः राष्ट्र-हितकरम्। यत्तु—

'प्रत्यासन्नाश्च राजानः षड़ेते ईतयःस्मृताः'।

इत्युपद्रवहेतुत्वमुक्तं तद्विवेकहीन-राजविषये सर्व्वदा सन्निहित नृपविषये च ज्ञेयम् ॥ ६५ ॥

न्यायेन प्रजापालनतत्परस्य राज्ञः मातृतुल्यत्वमाह न्यायेति न्यायवर्त्तिनं नीतिपूर्णं सुनीतिपरायणं सुनृपतिमिति। प्रजाः करदातृसमूहाः जनाः। ते च भूमिपालं हिताद्याधारत्वेन

**ताहशः स राजा इह सुखं ततः स्वर्ग-
माप्नोति ॥ ६७ ॥**

---

मातरमिव जननी मिव मन्यन्ते जानन्ति। नहि केवलं मातरं पितरञ्चेति। तदुक्तं महाकविना—

'प्रजानां विनयाधानाद् रक्षणाद्भरणादपि।

स पिता' इत्याद्युक्तं प्राक्।

एभिर्गुणैर्जन्मदात्रतोऽपि भूमिपः श्रेष्ठः। यथा हि जननी स्नेह-लालन पालन-विपत्त्राणादिना स्वसुतान् रक्षति तथा क्षितिपोऽपि करोति। 'जनयित्री प्रसूर्माता जननी' इति कोषः। यत्र देशे अयं नृपः स राजन्वानिति। प्रजाश्च ताहश-नृपादेशवर्त्तिनः सुखिनश्चेति ॥ ६६ ॥

सन्नृपतेः सुशासनफलमाह ताहश इति। ताहशो न्याय-धर्म्मरतः प्रजापालनतत्परः। राजा भूभुक्। स पूर्व्वोक्तः। इहास्मिन् लोके सुखम्। ततः परत्र स्वर्गममरधामाप्नोति लभते। न्याय-धर्म्मतः प्रजापालना दैहिकामुष्मिकं सुखं स्वर्गश्च निर्विशेषो भवति। परस्त्वन्यत् पश्चाद् वक्ष्यते।

गीतायाञ्च—

'स्वे स्वे कर्म्मण्यभिरतः संसिद्धिं लभते नरः'।

सुष्ठु अर्ज्यते इति स्वर्गः। अर्ज अर्जने, ततः कर्म्मणि घञ्प्रत्ययः। अपरं प्रागुक्तम् ॥ ६७ ॥

**चोरांश्च कण्टकांश्च सततं नाशयेत् ॥९८॥**

**स्वधर्म्मानुष्ठानादेव सुखमवाप्यते स्वर्गमवाप्नोति ॥ ९९ ॥**

---

दुष्टानां दमने उपदेशमाह चोरांश्चेति। चोरांश्च तस्करान् पाटच्चरानिति। कण्टकान् क्षुद्रशत्रून् नियतानिष्टकारिणः। सततं निरन्तरम्। नाशयेत् कौशलेन बलेन वा समुत्सारयेत्।

'कण्टकः क्षुद्रशत्रौ च कर्म्मस्थानक-दोषयोः'।

'कण्टको न स्त्रियां क्षुद्र-शत्रौ मत्स्यादिकीकसे'।

इति विश्व-मेदिन्यौ। एतेषां निःशेषः कार्य्यः। सत्यवशिष्टे पश्चाद्द्विगुणत्वेन वर्द्धते। ततः एषां सम्यक् समुच्छेदो विधेयः। तदुक्तम्—

'ऋण-व्याधि-शत्रु-वह्नीनां निःशेषमपि शेषयेत्'।

यदि कौशल-शक्तिविरहितस्तदा तुष्णीमवतिष्ठेत प्रबलं वा शरणं यायात्। कटि गतौ, कण्टति। ततो ण्वुल् ॥ ९८ ॥

स्वधर्म्मानुष्ठानस्य फलमाह स्वेति। स्वधर्म्मानुष्ठानात् स्वकुलधर्म्माचरणादिहलोके विशेषसुखमवाप्यते। परलोके तस्मात् स्वर्गमवाप्नुयात्। तदुक्तं महर्षि कणादेन 'यतोऽभ्युदयनिःश्रेयससिद्धिः स धर्म्मः' इति। 'धर्म्मेण गमनमूर्द्धं गमनमधस्ताद्भवत्यधर्म्मेण' इत्यपीश्वरकृष्णोक्तिः प्रागुक्ता। अन्यच्च—

अहिंसा लक्षणो धर्म्मः ॥ ७० ॥

स्वशरीरमिव परशरीरं मन्यते साधुः ॥७१॥

---

'धर्म्मेण हि सहायेन तमस्तरति दुस्तरम्' इति । अधर्म्माच्च दुःखमनिवार्य्यम् । त्रिवर्गे धर्म्मानुष्ठानप्रसङ्गतो हि इदं सूत्रं नपौनरुक्त्यमावहति । पूर्व्वापर संक्षेपविस्तररूपेणोभयोरप्यपौन रुक्त्यादिति । प्राक् संक्षेपेणोक्ता सन्दर्भावसाने पश्चाद्विस्तररूपेणोक्तिः ॥ ६८ ॥

धर्म्मस्य सामान्यलक्षणमाह अहिंसेति । अहिंसा सर्व्वभूतेषु आत्मवज्ज्ञानम् । सैव लक्षणं स्वरूपपरिचायकं यस्य सः । सच धर्म्मो लोक-विधारकः । तथा च श्रुतिः 'मा हिंस्यात् सर्व्वा भूतानि' । 'स्वधिते मैनं हिंसि' इति । स्मृतिश्च 'अहिंसा प्रतिष्ठायां तत्सन्निधौ वैरत्यागः' इति योगदर्शने । अन्यच्च 'अहिंसा परमो धर्म्मः' । भूतोपद्रवतद्वधजनितेन धर्मेण नहि पापं व्यपोहति । एवमेव जैनैर्बौद्धैरप्युक्तम् । तथा च स्मृतिः—

'यथा पङ्केन पङ्काम्भः सुरयापि सुराकृतम् ।
भूतहत्यां तथैवैकां न यज्ञैर्मार्ष्टुमर्हति' ॥ इति ।

मनुनापि सामासिकधर्म्मलक्षणे तदुक्तम् । सूत्रोक्तधर्मलक्षणेन विश्वासः स्वधर्मे निष्ठा तद्बोधक शास्त्रे श्रद्धा च ध्येयेति ॥७०॥

साधोः स्वपरशरीराभेदव्यवहारमाह स्वेति । स्वशरीरमिव

## सर्व्वत्र मान्यं भ्रंशयति बालिशः ॥७२॥

---

स्वस्यात्मनः शरीरवत् परस्यान्यस्य जीवस्य शरीरं तद्गतसुखदुःखादिकञ्च समानं साधुर्महाजनो ज्ञानवांश्चेति मन्यते। समात्मदर्शिनां साधूनां सर्व्वत्रेश्वरबुद्ध्या विचरणात् स्वपरभेदाभावेन समज्ञानं जायते। तदुक्तं—

'आत्मौपम्येन सर्व्वत्र समं पश्यन्ति साधवः'। इति।

एतेन स्वदुःखमिव परदुःखं साधुः प्रत्येतीति सारः। तेन महत्त्वमपि प्रतिष्ठितं भवति। सामाजिकेषु मानसौन्नत्यं परिवर्द्धते। परविद्वेषस्य गीतायामपि विगानमुक्तम्। तद्यथा—

'मामात्म-परदेहेषु प्रद्विषन्तोऽभ्यसूयकाः।
तानहं द्विषतः क्रूरान् संसारेषु नराधमान्' ॥ इति।

अन्यत् पूर्व्वमुक्तम् ॥ ७१ ॥

अज्ञस्य सर्व्वत्र गौरवज्ञानाभावमाह सर्व्वत्रेति। सर्व्वत्र सर्व्वस्मिन् विषये कर्मणि वा। बालिशः मूढोऽज्ञ इति। मान्यं माननीयं सम्मानार्हम्। जनं स्थानञ्चेति। भ्रंशयति विनाशयति अवजानाति च। मूढस्तु मानापमानज्ञानाभावात् स्वमिव परमप्यवजानाति। यथापणि गच्छन्तं गजं गोमायुरुपहसति। न प्राज्ञस्तादृक् करोति। परन्तु सर्व्वत्र मैत्र्यादि भावनायां लोकाः सुखिनो भवन्ति। श्रेष्ठेषु मैत्रीं दीनेषु करुणां गुरुषु मुदितां

मांसभक्षणमयुक्तं सर्व्वेषाम् ॥ ७३ ॥

हीनेषूपेक्षामिति। नीतिविदस्तु चौरेषु दण्डः। शठेषु शाठ्यम्, श्रेष्ठेषु मानम्, दीनेषु दानमिति मन्यन्ते। 'मूर्खवैधेय-वालिशाः' इत्यमरः। पूर्व्वमुक्तं पदनिरुक्त्यादि ॥ ७२ ॥

मांसभक्षण-निषेधमाह मांसेति। मांसस्य पललस्य यद् भक्षणमदनं तत् सर्व्वेषां लोकानामयुक्तमनुचितमवैधञ्चेति। यतः प्राणिनां द्रोहं विना कदाचिन्मांसं नोत्पद्यते। मीमांसकास्तु वैधमांसभक्षणे न दोषः इत्याहुः। तथा चोक्तं महर्षिणा—

'या वेदविहिता हिंसा नियतेऽस्मिन् चराचरे।
अहिंसामेव तां विद्धि वेदाद्धर्म्मो हि निर्बभौ' ॥

तदन्यत्र च स्मृतौ—

'नियुक्तश्च यथा न्यायं यो मांसं नात्ति मानवः।
स प्रेत्य पशुतां याति सम्भवानेकविंशतिम्' ॥ इति च।

अत्र नियुक्तः शास्त्रानुसारेण उत्सृष्ट इत्यर्थः।

अपरे तु सांख्य-योग-जैन-बौद्धा आहुः। मांसभक्षणं सर्व्वथाऽनुचितम्। यागादौ तु तज्जनित सुकृतिः पशुहननजनितं पापञ्च भवतीति। श्रुत्युक्त हिंसाबोधक-वाक्यानि यथा—'हृदयस्याग्रेऽवद्यति अथ जिह्वाया अथ वक्षसः'। अन्यच्च 'वायव्यां श्वेतछागलमालभेत'। 'ज्योतिष्टोमे त्रयः पशवः'।—

'षट्शतानि नियुज्यन्ते पशूनां मध्यमेऽहनि।
अश्वमेधस्य वचनादूनानि पशुभिस्त्रिभिः' ॥

## न संसार-भयं ज्ञानिनाम् ॥ ७४ ॥

इति गौड़पादभाष्योद्धृतम् । नियुक्तपदेन—

'देवान् पितॄन् समभ्यर्च्य खादन् मांसं न दुष्यति' ।

इति बोध्यम् । सामिषादनतो निरामिषादनमायुर्वर्द्धकं निरुपद्रवं नैरुज्यकरञ्च । येतु निवृत्तिपथपरायणाः तेषां निरामिषादनं जीवहनन निषेधश्च महाफलदायकः । प्रवृत्तिमार्गगतानां मानवानां वैधहिंसा त्यागे उपायाभावः । अन्यत्तत्त्वकौमुद्यां मीमांसासन्दर्भे च प्रपञ्चितमस्ति । नेह प्रतन्यतेऽनुपयोगित्वादिति ॥ ७३ ॥

ज्ञानिनां तत्त्वदर्शिनां संसारभीतिर्नास्तीत्याह नेति । ज्ञानिनां तत्त्वदर्शिनां संसार-विरागिनामिति । स्वादृष्टोपनिबद्ध-शरीर-परिग्रहः संसारः इति शाब्दिकाः । अस्माद्भयं भीतिस्तासो नास्ति लोभ-भोगादि परिहारात् । परमेश्वरानुग्रहे 'न विभेति कुतश्चने'ति श्रुतिवाक्याच्च, कस्मादपि ते न बिभ्यति । हिंसापरिहाराच्च न कोपि क्वापि तान् हिनस्ति । तदुक्तं भारते—

'अभयं सर्व्वभूतेभ्यो दत्त्वा यश्चरते मुनिः ।
न तस्य सर्वभूतेभ्यः भयमुत्पद्यते क्वचित्' ॥

श्रुतौ पुष्कलं प्रमाणमस्ति । अत्र संसारपदेन प्राण्युपत्ति तत्स्थिति तन्निधन तदन्तरा दुःखादिकं विशेषतो ज्ञेयम् । ज्ञानिनां देहे अहं ममाभिमानराहित्यात्तद्भयाभावः । संसारिणान्तु स्वपरभेदज्ञानप्राबल्याद् विषयासक्तत्वाच्च भयं विद्यते एव ॥ ७४ ॥

## विज्ञान-दीपेन संसारभयं निवर्त्तते ॥७५॥

विज्ञानशक्तेः प्राबल्यमाह विज्ञानेनेति। विज्ञानमेव दीपः आलोकाधारः तिमिरहारीति। विशेषज्ञानमेव विज्ञानं सांसारिकं तत्त्वज्ञानम्। यद्वा वस्तूनां परमसूक्ष्मज्ञानेन प्रतिभया-भिनवाविष्करणं विज्ञानमिति प्रागुक्तम्। एतच्च शिल्पे नोति-विषये च तेन संसारे सुखादि भोगप्राचुर्य्यम् परमार्थज्ञानरूप-विज्ञानेन च उत्पत्तिनिधन-शोक-तापादि दुःखनिवृत्तिर्भवति। तदुक्तं गीतायाम्—

'ज्ञानेन तु तदज्ञानं येषां नाशितमात्मनः।
तेषामादित्यवज्ज्ञानं प्रकाशयति तत्परम्' ॥

अन्यत्तत्रैवोक्तं 'ज्ञान-दीपेन भास्वता' इति। 'विज्ञानं कार्म्मणं ज्ञानम्' इति जैनाः। सम्मुग्ध-वस्तुज्ञानञ्च सामान्यज्ञानम्। विशिष्टवैविध्यावगाहिसूक्ष्मज्ञानं वा विज्ञानम्। कौर्मे च—

'चतुर्दशानां विद्यानां धारणं हि यथार्थतः।
विज्ञानमितरद्विद्या येन सत्यं विवर्द्धते' ॥

बौद्धास्तु विज्ञानं द्विविधमाहुः। प्रवृत्तिविज्ञानम्, आलयविज्ञानञ्चेति। यन्नीलादिविज्ञानं तत्प्रवृत्तिविज्ञानम्। अहमहमित्याकारावृत्तिरालयविज्ञानम्। प्रकृते तु विज्ञानदीपेन सुप्रस्फुतेन बुद्धेस्तेजोरूपेण स्फीत दीपालोकवत् सर्वस्थूल-सूक्ष्म सांसारिक-विषयकार्य्यदौर्गत्यं तत्तत्काले निवर्त्तते ॥ ७५ ॥

## सर्वमनित्यमध्रुवम् ॥ ७६ ॥
## स्वदेहे देहिनामतिमहती ॥ ७७ ॥

---

सांसारिक-विषयस्य नश्वरत्वमाह सर्वमिति । इह तु यद् यद् दृश्यते तत्सर्वं वस्तु जन्यत्वादनित्यम् । अतोऽध्रुवं विनाशि । नश्वरशीलम् । यथा घटपटगृहादिकं, जन्यपदार्थस्य नाश सम्भावना ध्रुवेति । सांसारिकं यद् यत्कार्य्यं, धनादिविषयश्च तत्तद्व्यवहारोऽपि तत्तत्कार्य्य-कालानुसारेण तादृश लोकाशयमनुसृत्य सम्यज्ज्ञात्वा मतिमता कार्य्यं सम्पाद्यमिति सारः । धर्म्मशास्त्रकृत आहुः—

'अनित्या बान्धवाः सर्वं सम्पदत्यन्त चञ्चला ।
शरीरिणां ध्रुवो मृत्युस्तस्मात्सत्यमनुस्मरेत्' ॥ इति ।

'सर्वमनित्य'मिति सूत्रस्थपाठवैलक्षण्येऽपि अर्थकाठिन्याभावः । 'परमेशातिरिक्तं सर्वमनित्यमिति' वेदान्तिनः प्रोचुः । ग्रन्थावसाने परमेशबुद्धि-समुन्मेषायेत आरभ्य सूत्राणि उच्यन्ते । अताध्रुवपदेन विषयविनाशस्यावश्यम्भाविता दर्शितेति सारः ॥ ७६ ॥

देहात्मबुद्धि-प्राबल्यमाह स्वदेह इति । देहिनां देहधारिणां जीवानाम् । स्वस्यात्मनो देहे । अति महती बुद्धिश्चिन्ता वा देहरक्षार्थं निरन्तरमुत्पद्यते । अत्र बुद्धिरित्यूह्यम् । यथा संसारयात्रानिर्वाहार्थं लोकानां बुद्धिर्बलवती भवति । ततोऽधिकं देहरक्षण-भरणार्थञ्च बुद्धेः प्रावल्यम्भवति । सा च साधारणलोकानां प्रवला दृश्यते । तदुक्तं सूरिभिः—

क्रिमिशकृन्मूत्रभाजनं शरीरं पुण्यपापजन्महेतुः ॥ ७८ ॥

---

'भोजनाच्छादने चिन्ता प्रबला प्राकृते जने।
देहेऽधिका तथा तस्य दुर्बला मतिमत्सु सा' ॥ इति।

'स्वदेहे देहिनां मतिर्महती'ति पाठः श्रेयान् स्यात्। ग्रंथान्तरे सूत्रमिदं नोपलभ्यते। देहे स्थिते सर्वं विषयो कर्त्तुं शक्यते, तदभावेऽन्यदस्तु मास्तु वेति देहस्थितिज्ञानं प्रबलं लोकेषु ॥७७॥

जीवदेहस्य पुण्यदुस्कृतोत्पत्तिहेतुत्वमाह क्रमीति। क्रिमिः क्षुद्रकीटः। शकृत् पुरीषम्। मूत्रं प्रस्रावः। अत्रादावेतेषां द्वन्द्वः पश्चात् शरीरपदेन षष्ठीतत्पुरुषः। एतेषां क्रम्यादीनाम्। शरीरं देहः। पुण्यं सुकृतिः। पापं दुःखाद्युत्पादहेतु-दुष्कृतम्। तयोर्जन्म उद्भवः। एतयोरपि शरीरं हेतुः कारणम्। यतः शरीरं विना तेषां क्रम्यादीनां व्यापारासम्भवात्। तदुक्तं मैत्रायणीश्रुतौ 'शरीरमिदं मैथुनादेवोद्भूतं सम्वृद्ध्यपेतं निरयेऽथ मूत्रद्वारेण निष्क्रान्तं अस्थिभिश्चितं मांसेनानुलिप्तं चर्मणावनद्धम्' इति। व्यासभाष्येऽप्युक्तं—

'स्थानाद्बीजादुपष्टम्भान्निस्यन्दान्निधनादपि।
कायमाधेयशौचत्वात् पण्डिता ह्यशुचिं विदुः' ॥ इति च।

शीर्य्यते व्याध्यादिनेति शरीरम्। एकस्मिन् ग्रंथे शरीरान्तं सूत्रं विन्यस्य ततः पुण्यपापे एव जन्महेतू इति पृथक् सूत्रान्तरमङ्कित-

जन्ममरणादिषु दुःखमेव ॥ ७९ ॥

तपसा स्वर्गमवाप्नोति ॥ ८० ॥

---

मस्ति । तयोः पार्थक्येऽर्थोपलब्धौ विशेषसौकर्यं नास्तीत्यतः अनादृतपाठन्तदिति ॥ ७८ ॥

जीवस्य जन्मादिभिर्दुःखोत्पत्तिमाह जन्मेति जन्म प्राण्युत्पत्तिः तदुक्तं कौमुद्यां मिश्रैः 'निकायविशिष्टाभिराभिरपूर्वदेहेन्द्रियबुद्धि-वेदनाभिः पुरुषस्य सम्बन्धो जन्म' इति । मरणं निधनं तत्तेषां संयोगविशेषहानम्, ते चोत्पत्तिनिधने आदिर्येषां रोग-शोक-ताप-बन्धन व्यसनानां तेषु । तेषु च मानवानां केवलं दुःखमेव क्लेश एव नतु सुखम् । यद् वैषयिकं सुखं तत्तिमिरे ज्योतिरिङ्गणालोकदर्शनवदिति वेदान्तिनः । प्रकृते तु महामतीनां विपुल-धने सत्त्वे तेन कालेऽस्मिन् अमितसुखमुत्पद्यते । यस्य तु इहलोके सुखलेशो नास्ति तस्यामूत्रे सुखं कुत इति नीतिशरणाः । योगिभिरुक्तं 'दुःखबहुलः संसारो हेयः' इति । पदनिरुक्त्यादिकं प्रागुक्तम् ॥ ७९ ॥

तपसः स्वर्गहेतुत्वमाह तपसेति । तपसा कृच्छ्रचान्द्रायणादिना द्वन्द्वसहनेन देवाराधनेन । स्वर्गं अमरधाम नित्य-सुखविशेषञ्च । अवाप्नोति तद्बलेन लभते । तथा च श्रुतिः 'तपसा चीयते ब्रह्म' इति । स्मृतिश्च—

'बहवो ज्ञान तपसा पूता मद्भावमागताः' ।

क्षमायुक्तस्य तपो वर्द्धते ॥ ८१ ॥

---

'तपसा कल्मषं हन्ति' इति च। गीतायान्तत्तपस्त्रिविधमुक्तम्। मानस-शरीर-वाङ्मयभेदेन। तथा च—

'देव-द्विज गुरु-प्राज्ञ पूजनं शौचमार्जवम्।
ब्रह्मचर्य्यमहिंसा च शारीरन्तप उच्यते' ॥
'अनुद्वेगकरं वाक्यं सत्यं प्रियहितञ्च यत्।
स्वाध्यायाभ्यसनञ्चैव वाङ्मयन्तप उच्यते' ॥
'मनः प्रसादः सौम्यत्वं मौनमात्मविनिग्रहः।
भाव-संशुद्धिरित्येतत्तपो मानसमुच्यते' ॥

अन्यत्तपोमाहात्म्यमुपनिषत्सु चास्ति। नेहोक्तं विस्तरभियेति। तप सन्तापे, तप्यते। औणादिकसूत्रादसुन् ॥ ८० ॥

तितिक्षासाधनस्य फलमाह क्षमेति। क्षमा क्षान्तिः क्लेश-सहनम्। तया युक्तस्य तद्वतः पुंसः। तपो वर्द्धते। तेन साधनेन तद् वृद्धिं यास्यति। परेणापकृते तस्यापकाराकरणं क्षमेति प्रागुक्तम्। तथा च क्षमालक्षणं प्रोवाच बृहस्पतिः—

'बाह्ये चाध्यात्मिके चैव दुःखे चोत्पादिते क्वचित्।
न कुप्यति न वा हन्ति सा क्षमा परिकीर्त्तिता' ॥

सा च मात्स्ये—

'आक्रुष्टोऽभिहतो यस्तु न हन्यान्नाक्रोशेदपि।
अदुष्टैर्वाङ्मनः कायैस्तितिक्षा च क्षमा स्मृता' ॥

तस्मात् सर्वेषां कार्य्यसिद्धिरिति ॥ ८२ ॥

---

'विभागशील: सततं क्षमायुक्तोदयात्मक: ।
क्षमा दया च विज्ञानं सत्यञ्चैव दम: शम: ।
गृहस्थस्तु क्षमायुक्त: न गृहेण गृही भवेत्' ॥ इति

गारुड़े च—

'एक: क्षमावतां दोषो द्वितीयो नोपपद्यते ।
यदेनं क्षमयायुक्तमशक्तं मन्यते जन:' ॥ इति ।

प्रसङ्गादत्र पुनरुच्यते—

'क्षमा तितिक्षा पृथ्वी च योग्ये शक्ते हिते क्षमम्' ।

इति धरणि: । पददिरुक्त्यादि प्रागुक्तम् ॥ ८१ ॥

कार्य्यसिद्धे: कारणमाह तस्मादिति । तस्मादशेषक्लेशसहन-शीलत्वात् । सर्व्वेषां जनानाम् । अस्मिन् संसारे कार्य्याणां सिद्धि: निष्पत्तिर्भवति । यद्वा ग्रन्थेऽस्मिन् तस्मादादित: सकल-नीति-सारोपदेशात्त्रिवर्गकथनाच्च । एतानुपदेशाननुसृत्य ये कार्य्यं कुर्वन्ति तेषां सर्वेषां कार्य्यमवश्यं निष्पद्यते । अत्र सिद्धिपदो-पादानाद् ग्रन्थकृताऽन्त्यमङ्गलं सूचितम् । इत: परं केचन विषया: सन्ति आदर्शग्रन्थान्तरोक्ता:, ते चात्रोपयोगित्वेनावसाने अस्य चोद्धृत्य व्याख्यायन्ते ॥ ८२ ॥

कर्म्मारम्भोपायः पुरुष द्रव्यसम्पद् देश-काल-विभागो विनीपातप्रतीकारः कार्य्यसिद्धिश्च ॥८३॥

इति नीतिदर्शनात्मके चाणक्यसूत्रे षष्ठोऽध्यायः ॥ ६ ॥

-०:`*`:०-

---

सर्वकार्य्यसाधनोपायनिर्देशमाह कर्म्मेति। कर्म्मणो य आरम्भः कार्य्य-सूचनं प्राथमिकानुष्ठानम्। तस्योपायः। निर्वाधेन तद् योग्य-सामग्र्यासादनम्। तदुपयोगि पूर्वचिन्तनञ्च। पुरुषाणां सम्यग्योग्यानां तत्कार्य्यसम्पादकानां, यत्र यत्र कार्य्यसम्पादने यानि यानि द्रव्याणि योग्यत्वेनाभिमतानि तेषां सम्पत् सम्पत्तिः अव्याहत-सम्भारश्च। देशादि। देशः कार्य्यनिष्पादनोपयुक्त-स्थानम्। यथा गोस्तनी-श्रेष्ठदाड़िमी-समुत्पादने गान्धारदेशः नतु विहारदेशः। कालः पूर्व्वाह्लादिः तत्कार्य्ययोग्यः समयश्च। यथा शीतकाले इक्षुतृणरोपणं नतु वर्षायाम्। यद्वा तारुण्ये व्यायामः नतु वार्द्धक्ये। विनीपातेति। विनिपातस्यापदः, प्रतीकारः उपशमश्चिन्तनीयः। ईदृशैर्नियमैः कार्य्याणां सिद्धिर्भवा भवति। सर्वमेतद्ग्रन्थतोऽनुसन्धेयम्। अन्यत्र अर्थशास्त्रे चास्ति। कर्म्मारम्भोपायादिभिर्मन्त्रे पञ्चाङ्गशक्तिरनेन नीतिवाक्यामृते सोमदेवैः उच्यत इति ॥ ८३ ॥

विहितेषु तदन्येषु मनो-वाक्-काय कर्म्मभिः।

प्रवृत्तौ वा निवृत्तौ वा एकरूपत्वमार्जवम् ॥ १ ॥

प्राग् मन्त्राङ्गशक्तिमुक्त्वा दाक्षिण्यप्रशंसामाह विहितेष्विति।

सतां मनो वाक् कायकर्मभिः चित्तवाक्य-शरीर क्रियाभिः । विहितेषु शास्त्रोपदिष्टेषु कार्य्येषु । तदन्येषु अविहितेषु अनुपदिष्टेषु अवैधकर्मसु च । प्रवृत्तौ वा इष्टसाधनताज्ञानजनितबुद्धौ । सामान्यप्रवृत्तौ च । निवृत्तौ द्विष्टसाधनताज्ञानजनित बुद्धौ अशक्त्या कार्य्यनिवृत्तौ च । आर्जवं सारल्यमौदार्य्यञ्च । ऐकरूप्यं नतु सत्यासत्ययुक्तम् । कौशलेन नानारूपत्वं वा । तदुक्तं 'चित्ते वाचि क्रियायाञ्च महतामेकरूपते'ति । सूरिवर्य्येण चाणक्येन अर्थशास्त्रे नीतिविषयाः सुबहुधा प्रौढ़-रीत्या प्रपञ्चिताः । अत्र सूत्रात्मकग्रन्थे ऋजुतया सरलमतीनामाशुबोधाय ते विषया गुम्फिताः ॥ १ ॥

अश्वा नागाः स्यन्दनानाञ्च सङ्घाः,
मन्त्राः शुद्धा दैवतञ्चानुकूलम् ।
एतान्याहुः साधनानि स्म राज्ञाम्,
तेभ्योऽप्येयं बुद्धिरुत्कृष्यते मे ॥ २ ॥

सम्प्रति महामनीषिणो ग्रन्थकर्त्तुः कौटिल्यस्य सन्दर्भपरिशेषे प्रतिभाप्राखर्य्य-परिचयमुपसंहरन्नाह अश्वा इति । अश्वाः घोटकाः । आरोहणशकटसमराद्युपयुक्ताः । नागाः कुञ्जरा वारणाः तत्तत्कार्य्ये योग्याः । स्यन्दनानां सङ्घाः । रथ-शकटिबलसमूहाः । मन्त्राः शुद्धाः शुद्धमन्त्राः गूढ़प्रणिधानेन रहस्ये सम्मन्त्रिभिर्विचारिताः । दैवतञ्च दैवम् । अनुकूलं शुभसूचकम् । कस्मिन्नपि कार्य्ये दैवविघ्नाभावात् तत्साधने नीतिनिपुणाः ।

एतानि राज्ञां नरेन्द्राणां राष्ट्रपालने साधनानि उपायभूतानि आहुः प्रोचुः। यतश्च—

'हस्तिघोटकसामन्त नौकादिग्देश साधनैः।
राजा भवति लोकेऽस्मिन् न पुनर्वाक्यमात्रतः'॥ इति।

तेभ्यः साधनेभ्यो मे मम बुद्धिर्मनीषा। उत्कृष्यते श्रेष्ठा भवतीति। यतो शरीरोपाय बलाद्विज्ञानबलं श्रेयः। विज्ञानन्तु पदार्थचिन्तालोचनादिभिः विद्या प्रतिभया चोत्पद्यते। श्लोकोऽयं रविनर्त्तकविरचिते चाणक्यवृत्तेऽपि दृश्यते। नवनन्दकृताप-माना-सहिष्णोर्मनीषि-कौटिल्यस्योक्तिरियम्। नवनन्दभोजन-गृहान्निर्गत्यानेन महामतिना तेनात्मपरिचयो दत्तः। रविनर्त्त-कस्य चाणक्यकथायामन्यदस्ति। नवनन्दास्तु न्यायान्यायविवेक-हीनाः समुद्धतास्तरुणा आसन्॥ २॥

बुद्धिरेव जयत्येका पुंसः सर्व्वार्थसाधनी।
यद्बलादेव किं किं न चक्रे चाणक्य-भूसुरः॥ ३॥

परिशेषे साधनसामग्रीतो वात्स्यायनापरनाम्नः चाणक्यस्य बुद्धेः श्रैष्ठ्यमाह्वानेन। बुद्धिरिति। बुद्धिरेव जयत्येका पुंसः मानवस्य। सर्वार्थसाधनी। सर्व्वेषामैहिक-पारत्रिककार्य्याणां सम्पादनकारिणी सती एका अद्वितीया। जयति सर्व्वश्रेष्ठत्वेन वर्त्तते। यद्बलाद् यस्यास्तादृश्या बुद्धेः बलात्प्राखर्य्यात्। चाणक्य-भूसुरः चाणक्यनाम्ना विमलमतिः भूदेवः। किं किं कार्य्यं न चक्रे न कृतवान्। अपि सर्व्वमेव राज्यविध्वंसनं राष्ट्रसृष्टिम्।

महासमरम् । विपुलनीतिप्रसारणादिकञ्चेति॰। तदुक्तम् अर्थ-शास्त्रपरिशेषे—

'येन शास्त्रञ्च शस्त्रञ्च नन्दराजगता च भूः ।
अमर्षेणोद्धृतान्याशु तेन शास्त्रमिदं कृतम्' ॥

हितोपदेशे विग्रहप्रकरणे च—

'नन्दं जघान चाणक्यस्तीक्ष्णदूत-प्रयोगतः ।
तद्दूरान्तरितं दूतं पश्येद् वीरसमन्वितः' ॥

विष्णुगुप्तः चाणक्यः चणकात्मजः वात्स्यायनः, मल्लनागः, द्रामिलः, अङ्गुलः, पक्षिलस्वामी, कौटिल्यः—इत्येतानि नामानि भोजराजीय नाम मालायाम्, हैमे कोषे, यादवीयवैजन्त्याञ्च उपलभ्यन्ते। श्लोकोऽयं चाणक्यकथायामपि वर्त्तते। कार्य्य-सम्पादने वहिः साधनानि बहूनि। अन्तःसाधनं बुद्धिरेकैव। सात्वन्यन्नापेक्षते ।

'मूलसूत्रं प्रवक्ष्यामि चाणक्येन यथोदितम् ।
यस्य विज्ञानमात्रेण मूर्खो भवति पण्डितः' ॥

'नानाशास्त्रोद्धृतं वक्ष्ये राजनीतिसमुच्चयम् ।
सर्वबीजमिदं शास्त्रं (सूत्र') चाणक्यं सारसंग्रहम्' ॥ इति च लघुचाणक्यप्रारम्भश्लोकाच्चाणक्यसूत्रमिदं न शङ्काभूमिं यातीति। अन्यच्चोक्तमर्थशास्त्रावसाने। 'स्वयमेव विष्णुगुप्तश्चकार सूत्रं भाष्यञ्चेति'। एतदेव सूत्रम्, भाष्यं तच्चार्थशास्त्रमिति ॥ २ ॥

चाणक्य-माणिक्य-महार्घ्यभूतम्,
न्यायाकराल्लब्धमिदं हितार्थम् ।

आलोकतत्त्वं मतिजाड्यहारकम्,
बुधैः सुहृद्भिर्हृदयेषु धार्य्यम् ॥ १ ॥
न योग्यमुक्तं कुत्रापि अयुक्तं यच्च कुत्रचित्।
क्वाऽप्यशुद्धं भ्रमाज्जातं क्षन्तव्यन्तद्विदाम्बरैः ॥ २ ॥
शाकेऽन्तरिक्ष शरनागसुधांशुमाने,
पक्षे सुधाकरयुते तिथि-पूर्णिमायाम्।
कौटिल्यसूत्रनिचये विमला टीकेयम्,
ग्राह्या सुधीन्द्रनिकरैः कृपया सुहृद्भिः ॥ ३ ॥
पूर्ववङ्गाब्धि-पूर्वस्मिन् चन्द्रनाथाद्रि-दक्षिणे।
चट्टग्राम (+) समासन्ने 'द्वारका' विषयो मम ॥ ४ ॥
शाण्डिल्यः सामगो विप्रः षड्दर्शनसुसेवकः।
धोरेशरामकान्तस्य ज्योतिःशास्त्रविदोऽङ्गजः ॥ ५ ॥
नीति नौकर्णधारस्य चाणक्यस्य महामतेः।
तत्सूत्रनिकरे चेयं टीका सारार्थबोधिनी ॥ ६ ॥

इति दर्शनभूतचाणक्यसूत्रव्याख्यायां श्रीईश्वरचन्द्रशर्म्मशास्त्रि-कृतायां सारार्थबोधिन्यां षष्ठोऽध्यायः ॥ ६ ॥

-०*०-

समाप्तश्चायं ग्रन्थः।

---

(+) CHITTA GANG.

## चाणक्यनीतिसूत्रोक्ताध्यायेषु सूत्राणां संख्या ।

| | सूत्राणि | संख्याः |
|---|---|---|
| प्रथमाध्याये | ,, | १००, |
| द्वितीयाध्याये | ,, | ११६, |
| तृतीयाध्याये | ,, | ७९, |
| चतुर्थाध्याये | ,, | १०८, |
| पञ्चमाध्याये | ,, | ११३, |
| षष्ठाध्याये | ,, | ८३, |
| | | ५९९, |

—०*०—

# अथ चाणक्य-सूत्राणि।

## प्रथमाध्याये—

-:*:—

## द्वितीयाध्याये—

---

## तृतीयाध्याये—

---

## चतुर्थाध्याये—

—०—

## पञ्चमाध्याये—

| सूत्राणि, | पञ्चमाध्याये, | पृष्ठे |
|---|---|---|
| ६४। अति दीप्तोऽपि खद्योतो न पावकः। | ... | ३२३ |
| ६५। न प्रवृद्धत्वं गुणहेतुः। ... | ... | ३२४ |
| ६६। सुजीर्णोऽपि पिचुमर्दो न शर्करायते। | ... | ३२५ |
| ६७। यथा बीजं तथा निष्पत्तिः। | ... | ३२५ |
| ६८। यथा श्रुतं तथा बुद्धिः। ... | ... | ३२६ |
| ६९। यथा कुलं तथाचारः। ... | ... | ३२७ |
| ७०। सुसंस्कृतोऽपि पिचुमर्दो न सहकारः। | .. | ३२७ |
| ७१। न चागतं सुखं परित्यजेत्। | ... | ३२८ |
| ७२। स्वयमेव दुःखमधिगच्छति राजचर्य्यात्। | ... | ३२९ |
| ७३। न रात्रि-चारणं कुर्य्यात्। | ... | ३२९ |
| ७४। न चार्द्धरात्रं स्वप्यात्। ... | ... | ३३० |
| ७५। तद् विद्वद्भिः परीक्षेत। ... | .. | ३३० |
| ७६। परगृहमकारणतो न प्रविशेत्। | .. | ३३१ |
| ७७। ज्ञात्वापि दोषमेव करोति लोकः। | ... | ३३१ |
| ७८। शास्त्रप्रधाना लोकप्रवृत्तिः। | ... | ३३२ |
| ७९। शास्त्राभावे शिष्टाचारमनुगच्छेत् | ... | ३३२ |
| ८०। नाचरिताच्छास्त्रं गरीयः। | ... | ३३३ |
| ८१। दूरस्थमपि चारचक्षुः पश्यति राजा। | ... | ३३४ |
| ८२। गतानुगतिको लोकः। ... | ... | ३३५ |
| ८३। जीविभिस्तस्मिन्नाजीवेत्। | ... | ३३५ |
| ८४। यमनुजीवेत्तं नापवदेत्। ... | ... | ३३६ |
| ८५। तपः सार इन्द्रियनिग्रहः। | ... | ३३७ |
| ८६। दुर्लभः स्त्रीबन्धनान्मोक्षः। | ... | ३३७ |

## षष्ठाध्यायः

विहितेषु तदन्येषु मनो-वाक्-काय-कर्मभिः। (*)
प्रवृत्तौ वा निवृत्तौ वा एकरूपत्वमार्जवम् ॥ १ ॥

अश्वा नागाः स्यन्दनानाञ्च सङ्घाः,
मन्त्राः शुद्धा दैवतञ्चानुकूलम्।
एतान्याहुः साधनानि स्म राज्ञाम्,
तेभ्योऽपीयं बुद्धिरुत्कृष्यते मे ॥ २ ॥

बुद्धिरेव जयत्येका पुंसः सर्व्वार्थसाधनी।
यद्बलादेव किं किं न चक्रे चाणक्य-भूसुरः ॥ ३ ॥

समाप्तिङ्गतानि चाणक्य-सूत्राणि।

—:·:—

(*) एते श्लोकाः क्वचिदादर्शग्रन्थान्तरे अधिकाः सन्ति, उपादेयतया अत्र सन्निविष्टाः।